...य काव्य ग्रन्थ माला नं० १ – पुष्प १३–१४

मल्लिनाथविरचित-संजीविनीसमेतम्

# रघुवंशमहाकाव्यम्

संस्कृत-हिन्दी-व्याख्योपेतम्

( १३–१४ सर्गाः )

व्याख्याकारः

पं० जितेन्द्राचार्य

भूमिका :

डा० अमलधारी सिंह

जोधपुर विश्वविद्यालय, जोधपुर




भारतीय विद्या प्रकाशन

वाराणसी : दिल्ली

...संस्करण ] सन् १९७५ ई० [ मूल्य ३·५०

मल्लिन... का... विनी...

# रघुवंशमहाकाव्यम्

संस्कृत-हिन्दी-व्याख्योपेतम्

( १३-१४ सर्गाः )

व्याख्याकारः
पं० जितेन्द्राचार्यः



भारतीय विद्या प्रकाशन
वाराणसी : दिल्ली

# रघुवंशमहाकाव्यम्

## त्रयोदशः सर्गः

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥१॥

त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार बन्धं मरणं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

सञ्जीविनी—अथेति । अथ प्रस्थानानन्तरम् । जानातीति ज्ञः । "इगुपधज्ञाप्रीकिरः कः" इत्यनेन कप्रत्ययः । गुणानां ज्ञो गुणज्ञः । रत्नाकरादिवर्ण्यैश्वर्यगुणाभिज्ञ इत्यर्थः । स रामाभिधानो हरिर्विष्णुः शब्दो गुणो यस्य तच्छब्दगुणमात्मनः स्वस्य पदं विष्णुपदम्, आकाशमित्यर्थः । 'वियद्विष्णुपदम्' इत्यमरः । "शब्दगुणकमाकाशम्" इति तार्किकाः । विमानेन पुष्पकेण विगाहमानः सन् । रत्नाकरं समुद्रं वीक्ष्य मिथो रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । जायां पत्नीं सीतामिति वक्ष्यमाणप्रकारेणोवाच । रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविश्रम्भसूचनार्थम् ।

यत्सन्निधानभाग्येन दण्डकोऽप्योध्यतां गतः ।
तं नौमि परमं रामं सीतालक्ष्मणसङ्गतम् ॥

अन्वयः—अथ गुणज्ञः सः रामाभिधानः हरिः शब्दगुणम् आत्मनः, पदं विमानेन विगाहमानः रत्नाकरं वीक्ष्य मिथः जायाम् इति उवाच ।

वाच्य०—गुणज्ञेन तेन रामाभिधानेन हरिणा शब्दगुणम् आत्मनः पदं विमानेन विगाहमानेन रत्नाकरं वीक्ष्य जाया इत्यूचे ( कर्मवा० )

चन्द्रिका—अथ विमानारोहणानन्तरम्, गुणज्ञः वर्णनीयसागरादिमाहात्म्यवेत्ता, सः पूर्वोक्तः, रामाभिधानः रामनामा, हरिः विष्णुः, नारायणः शब्दगुणं शब्दरूपविशेषगुणवन्तम् । 'शब्दगुणकमाकाशम्' इति तार्किकोक्तेः, 'रूपं शब्दो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनान्ताश्च गुणा वैशेषिकाः स्मृताः ॥' पञ्चभूतात्ममात्रवृत्तिगुणानां विशेषगुणत्वमपदेशः । आत्मनः स्वस्य, विष्णोः पदं स्थानम्, गगनस्य विष्णुपदनामवत्वात् । विमानेन व्योमयानेन, पुष्पकनामकेन

कुबेराद् रावणाच्छिन्नेन । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । विगाहमानः प्रविशन् सन्, रत्नाकरं समुद्रम्, वीक्ष्य विलोक्य, मिथः एकान्ते, तृतीयाश्रवणीये इत्यर्थः । जायां जानकीम्, सहधर्मिणीम्, इति एवम्, अग्रे कथ्यमानप्रकारेण । उवाच जगाद ।

समासः—जानातीति ज्ञः, गुणानां ज्ञः गुणज्ञः । राम इत्यभिधानं यस्य (बहु०) सः रामाभिधानः । शब्दो गुणो यस्य ( बहु० ) तत् शब्दगुणम्, तत् । रत्नानाम् आकरः (ष०त०) रत्नाकरः, तं रत्नाकरम् । पापानि भक्तमनो वा हरतीति हरिः ।

कोशः—'मङ्गलानन्तरारम्भ–प्रश्नकार्त्स्न्येष्वथो अथ' । 'मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः ।' 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ।' व्योमयानं विमानोऽस्त्री' 'रत्नाकरो जलनिधिः ।' 'मिथोऽन्योन्यं रहस्यपि' 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जाया' 'आख्याह्वे अभिधानश्च' 'यमानिलेन्द्र-चन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ।' 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।' इत्यमरः ।

भावार्थः—भगवान् रामः आकाशे विमानेन गगने अयोध्यां गच्छन् रहसि सीतां संबोध्य रत्नाकरमधस्तात् स्थितं तस्यै प्रदर्शयन् तस्योत्पत्तिमाहात्म्यादिकम् अग्रिमश्लोकैः एवमवोचदिति भावः ।

हिन्दीश्लोकार्थः—विमान आरोहण के अनन्तर, गुणों (वर्णनीयसमुद्रादि) को जाननेवाले वे राम नामक भगवान् विष्णु शब्द गुण वाले आकाश ( अपने पद-विष्णुपद ) में विमान से जाते हुए समुद्र को देख कर एकान्त में सीता जी से इस प्रकार बोले ॥१॥

वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥२॥

सञ्जीविनी—वैदेहीति । हे वैदेहि सीते ! आ मलयान्मलयपर्यन्तम् । "पञ्चम्य-पाङ्परिभिः" इति पञ्चमी । पदद्वयं चैतत् । मत्सेतुना विभक्तं विधाकृतम् अत्या-यतसेतुनेत्यर्थः । हर्षाविषयत्वाच्च मद्ग्रहणम् फेनिलं फेनवन्तम् । 'फेनादिलच्च" इतीलच्प्रत्ययः । क्षिप्रकारी चाऽयमिति भावः । अम्बुराशिम् । छायापथेन विभक्तं शरत्प्रसन्नमाविष्कृतचारुतारमाकाशमिव । पश्य मम महानयं प्रयासस्त्वदर्थं इति हृदयम् । छायापथो नाम ज्योतिश्चक्रमध्यवर्ती कश्चित्तिरश्चीनोऽवकाशः ।

अन्वयः—हे वैदेहि, आमलयाद् मत्सेतुना विभक्तं फेनिलम् अम्बुराशिं छाया-पथेन विभक्तं शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशम् इव पश्य ।

वाच्य०—आमलयाद् विभक्तः फेनिलः अम्बुराशिः छायापथेन विभक्तः शर-त्प्रसन्नः आविष्कृतचारुतरः आकाश इव दृश्यताम् ( कर्मवा० ) ।

चन्द्रिका—हे वैदेहि, हे जानकि, आमलयात् मलयाचलपर्यन्तम्। दक्षिणभारतस्थः प्रसिद्धपर्वतः यत्र भूयांसश्चन्दनतरवः सन्ति। अत एव मलयपवनः कामदेवसहकारी मन्यते। मत्सेतुना मद्‌बद्धेन वारिवारणेन। 'देवराजो मया दृष्टो वारिवारणमस्तके।' इत्यादौ सेतुपर्यायत्वेन प्रयुक्तोऽयं वारिवारशब्दः। विभक्तं द्वेधाकृतविभागम्। फेनिलं डिण्डीरवन्तम् 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। अम्बुराशिं पयोनिधिं, सागरम्, छायापथेन ज्योतिर्मण्डलमध्ये एतन्नाम्ना रिक्तस्थानेन, 'ऋक्पूरब्धूः पथाम्' इत्यनेन समासान्तम्। विभक्तं द्वेधाकृतसीमम्। शरदि शरदृतौ, प्रसन्नं वर्षापगमात् विमलम्, आविष्कृताः प्रकाशिताः चारुताराः मनोहरनक्षत्राणि यस्मिंस्तथोक्तम्, आकाशमिव गगनमिव स्थितमित्यर्थः, अम्बुराशिं पश्य अवलोकय। समुद्राकाशयोः सादृश्यवर्णनादुपमालङ्कारः। विभक्तत्वरूपसाधारणधर्मतद्वाचकेवपदयोश्चोपादानात् पूर्णोपमेयम्। 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' इति तल्लक्षणात्।

समासः—मम सेतुः (ष० त०) मत्सेतुः, तेन मत्सेतुना। अम्बुनः राशिः यस्मिन् (बहु०) सः अम्बुराशिः, तम् अम्बुराशिम्। छायायाः पन्थाः छायापथः, तेन छायापथेन। शरदि प्रसन्नः (स० त०) शरत्प्रसन्नः, तं शरत्प्रसन्नम्। चारवश्च ताः ताराश्च (कर्म०) चारुताराः। आविष्कृताः चारुताराः यस्मिन् (बहु०) सः आविष्कृतचारुतारः, तम् आविष्कृतचारुतारम्।

कोशः—'डिण्डीरोऽब्धिकफः फेनः' 'स्यादृतौ वत्सरे शरत्' 'प्रसन्नोऽच्छः' 'वा तु पुंस्याकाशविहायसी' 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।' 'नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वाऽस्त्रियाम्।' इत्यमरः।

भावार्थः—हे सीते! त्वदानयनाय मलयपर्वतपर्यन्तं मया बद्धेन सेतुना द्विधा कृतं फेनयुक्तं शरदि प्रकाशमानशुभ्रनक्षत्रयुक्तं छायापथेन विभक्तं गगनमिव विद्यमानं समुद्रं विलोकयेति भावः। आकाशवदयमपि विपुलः, यत्र तत्र दृश्यमानैः फेनैः नक्षत्रसदृशैः युक्तश्च, एवं छायापथसदृशमदीयसेतुना कृतविभागोऽप्ययमस्ति।

हिन्दीश्लोकार्थः—हे विदेहराजपुत्रि! मलयाद्रि पर्यन्त मेरे बनाये हुए सेतु (पुल) से दो भागों में बटे हुए फेनिल सागर को—छायापथ (नक्षत्र चक्र के मध्य में तिरछा एक सीधी खाली पंक्ति) से दो भागों में बँटे शरत् ऋतु के निर्मल एवं नक्षत्रों को प्रकाशित करते हुए आकाश के समान देखो ॥ २ ॥

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं सङ्क्रमिते तुरङ्गे।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥ ३ ॥

सञ्जीविनी—गुरोरिति। यियक्षोर्यष्टुमिच्छोः। यजेः सन्नन्तादुप्रत्ययः। गुरोः—सगरस्य मेध्येऽश्वमेधार्हे तुरगे हये कपिलेन मुनिना रसातलं पातालं सङ्क्रमिते

सति । तदर्थमुर्वीमवदारयद्भिः खनद्भिर्नोऽस्माकं पूर्वैर्वृद्धैः सगरसुतैरयं समुद्रः परिवर्धितः किल । किलेत्यैतिह्ये । अतो नः पूज्य इति भावः । यद्यपि तुरङ्गहारी शतक्रतुस्तथापि तस्य कपिलसमीपे दर्शनात्स एवेति तेषां भ्रान्तिः तन्मत्वैव कविना कपिलेनेति निर्दिष्टम् ।

अन्वयः—यियक्षोः गुरोः मेध्ये अश्वमेधे तुरङ्गे कपिलेन रसातलं संक्रमिते सति तदर्थम् उर्वीं अवदारयद्भिः नः पूर्वैः अयं परिवर्द्धितः किल ।

वाच्य०—तदर्थम् उर्वीम् अवदारयन्तः नः पूर्वे इमं परिवर्द्धितवन्तः किल ( कर्तृवा० ) ।

चन्द्रिका—यियक्षोः यागं कर्तुमिच्छोः, गुरोः अस्मद्वंशपूर्वपुरुषस्य, सगरराजस्य, मेध्ये पवित्रे, नामैकदेशग्रहणं वा अश्वमेधयोग्ये, यत्प्रत्ययान्तः, तुरङ्गे अश्वे, कपिलेन कपिलमहामुनिना सांख्यशास्त्रप्रवर्तकेन, रसातलं बलिसद्म, पातालं, संक्रमिते प्रापिते, सतीति शेषः, तदर्थम् तत्तुरगार्थम्, उर्वीं पृथिवीम्, अवदारयद्भिः कुद्दालादिद्वारा खननं कुर्वद्भिः, नः अस्माकम्, पूर्वैः प्राचीनैः, सगरात्मजैः, अयं पुरोवर्ती सागरः, परिवर्द्धितः परिवृंहितः, समेधितः, किलेति इतिहासप्रसिद्धौ । पूर्वम् अनुष्ठितनवनवत्यश्वमेधयागः सगरराजः शततमश्वमेधयागाय प्रवृत्तः, तदङ्गमश्वं स्वपुत्रानुगम्यमानं मुमोच इन्द्रश्च तमश्वमपहृत्य पातालं नीत्वा कपिलमुनिनिकटे ववन्ध सगरपुत्रा अश्वमन्विष्यन्तः पृथिवीं खनित्वा पाताले कपिलोपकण्ठमश्वं विलोक्य स एवास्यापहर्तेति मत्वा तद्बन्धनाय तदन्तिकं यदोपासरन् तदैव नत्तेयस्य दग्धा बभूवुरिति भारतीया कथाऽत्रानुसन्धेया ।

समासः—यष्टुम् इच्छुः यियक्षुः, तस्य यियक्षोः । मेधम् अर्हतीति मेध्यः, तस्मिन् मेध्ये । तस्मै इदं तदर्थमित्यस्वपदविग्रहः । अवदारयन्तीति अवदारयन्तः ( शत्रन्तम् ), तैः अवदारयद्भिः ।

कोशः—'गुरुर्गिष्पतिपित्राद्यौ' 'पूतं पवित्रं मेध्यं च' 'अधोभुवनपातालं बलिसद्म रसातलम् ।' 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ।' 'वसुधोर्वी वसुन्धरा' 'पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि च पूर्वजान् ।' 'वार्तासंभाव्ययोः किल' इत्यमरः ।

भावार्थः—अस्मत्पूर्वजेन सगरमहाराजेन मुक्तमश्वमेधाङ्गं तुरगम् अन्विष्यन्तस्तत्पुत्राः पृथिव्यां तं क्वाप्यलब्ध्वा पातालं गन्तुमिच्छन्तः धरामिमाम् अखनन् । तेनायं समुद्रः संवर्द्धित इत्यैतिह्यादस्माकं वन्ध्वा अतः आदरपूर्वकमिमं पश्येति भावः ।

हिन्दीश्लोकार्थः—याग ( सौवाँ अश्वमेध ) करने की इच्छावाले पित ( सगरमहाराज ) के अश्वमेधीय ( अथवा मेध्य = पवित्र ) घोड़े को कपिल

के ( वस्तुतः इन्द्र ले जाकर कपिलाश्रम में बाँधा था ) द्वारा पाताल ले जाने पर, घोड़े के लिए पृथिवी को खोदने वाले हमारे पूर्वजों ( सगरपुत्रों ) से यह ( समुद्र ) संवर्द्धित ( बढ़ाया गया ) हो गया था—ऐसी ( इतिहास में ) प्रसिद्धि है ॥ ३ ॥

गर्भं दधत्यर्कमरीचयोऽस्माद् विवृद्धिमत्राश्नुवते वसूनि ।
अबिन्धनं वह्निमसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ ४ ॥

सञ्जीविनी—गर्भमिति । अर्कमरीचयोऽस्मादब्धेः । अपादानात् । गर्भमम्मयं दधति, वृष्ट्यर्थमित्यर्थः । अयमर्थो दशमसर्गे–'नाभिर्गर्भः' इत्यत्र स्पष्टीकृतः । अयं लोकोपकारीति भावः । अत्राब्धौ वसूनि धनानि । 'धने रत्ने वसु स्मृतम्' इति विश्वः । विवृद्धिमश्नुवते प्राप्नुवन्ति, सम्पद्यानित्यर्थः । असावाप इन्धनं दाह्यं यस्य तद्दाहकं वह्निं विभर्ति । अपकारेऽप्याश्रितं न त्यजतीति भावः । अनेन प्रह्लादनमाह्लादकं ज्योतिश्चन्द्रोऽजनि जनितम् । जनेर्ण्यन्तात्कर्मणि लुङ् । सौम्य इति भावः ।

अन्वयः—अर्कमरीचयः अस्माद् गर्भं दधति अत्र वसूनि विवृद्धिम् अश्नुवते । असौ अविन्धनं वह्निं बिभर्ति, अनेन प्रह्लादनं ज्योतिः अजनि ।

वाच्य०—अर्कमरीचिभिः अस्माद् गर्भः धीयते, अत्र वसुभिः विवृद्धिः अश्यते, अमुना अबिन्धनः वह्निः भ्रियते ( कर्मवा० ), अयं प्रह्लादनं ज्योतिः अजनिष्ट ( कर्तृवा० ) ।

चन्द्रिका—अर्कमरीचयः सूर्यकिरणाः, अस्मात् एतस्मात्, अब्धेः समुद्रात्, गर्भं जलमयं भ्रूणं 'गर्भो भ्रूणः' दधति धारयन्ति । भास्करदीधितय पृथिव्यां वर्षणार्थं समुद्रादेव जलं गृह्णन्तीत्यर्थः । अत्र समुद्रे, वसूनि रत्नानि, धनानि वा, विवृद्धिं वृंहणम, समृद्धिम्, अश्नुवते लभन्ते । असौ सागरः, आपः पानीयानि इन्धनं काष्ठं यस्यैवम्भूतम्, वह्निं पावकम्, वाडवाग्निमित्यर्थः । बिभर्ति धारयति, वहति । अनेन प्रह्लादनम् आनन्दकारि, ज्योतिः तेजः इन्दुरूपम् , अजनि उदपादि, उत्पादितम्, समुद्रमथनावसरे इत्यर्थः ।

समासः—अर्कस्य मरीचयः ( ष०त० ) अर्कमरीचयः । आप इन्धनं यस्य ( बहु० ) तत् अबिन्धनम् । प्रह्लादयतीति प्रह्लादनम् ।

कोशः—'गर्भो भ्रूण इमौ समौ' 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ।' 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ।' 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।' 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।' 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् ।' 'अग्निर्वैश्वानरो वह्निः' 'ज्योतिर्भद्योत-दृष्टिषु ।' इत्यमरः ।

भावार्थः—सूर्यरश्मयः अस्मादेव समुद्रात् वर्षणार्थं जलं संगृह्णन्ति । अस्मिन्

सागरे घनरत्नानि समेधन्ते अर्थात् रत्नानामयम् आकरः (खनिः)। अत्र जलमेव दहन् वडवानलोऽपि वर्तते। अस्मादेव समुद्रात् जगदानन्दकारी चन्द्रो जातः। लोकस्य नानाप्रकारेणोपकारः कृतोऽनेन अहो! अस्य महिमेति भावः।

हिन्दीश्लोकार्थः—सूर्यकी रश्मियाँ इस समुद्र से ही (बरसाने के लिए) जलमय गर्भधारण करती हैं। यहाँ घन रत्न वृद्धि को प्राप्त कर रहे हैं। यह जल को ही जलाने वाले अग्नि (वडवानल) को धारण किये रहता है। इससे जगत् को आनन्द देनेवाली ज्योति (चन्द्रमारूपी) उत्पन्न हुई॥ ४॥

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ ५॥

सञ्जीविनी—तामिति। तां तामनेकाम्। "नित्यवीप्सयोः" इति वीप्सायां द्विरुक्तिः। अवस्थामक्षोभाद्यवस्थाम्। विष्णुपक्षे—सत्त्वाद्यवस्थाम्। प्रतिपद्यमानं भजमानं महिम्ना दश दिशो व्याप्य स्थितं विष्णोरिवास्य रत्नाकरस्य रूपं स्वरूप-मुक्तरीत्या बहुप्रकारत्वाद्व्यापकत्वाच्चेदृक्तयेयत्तया वा प्रकारतः परिमाणतश्चा-नवधारणीयं दुर्निरूपम्।

अन्वयः—तां ताम् अवस्थां प्रतिपद्यमानं महिम्ना दश दिशः व्याप्य स्थितं विष्णोः इव अस्य रूपम् ईदृक्तया इयत्तया वा अनवधारणीयम्।

वाच्य०—प्रतिपद्यमानेन......स्थितेन अस्य रूपेण ईदृक्तया इयत्तया अनव-धारणीयेन (भूयते-भाववा०)।

चन्द्रिका—तां ताम्, नानाविधां प्रसिद्धाम्, अवस्थां दशाम्, अव्याकुलत्व-वेलानतिक्रमणादिकामित्यर्थः। इदमुपमानभूतविष्णोरपि विशेषणम्। विष्णुरपि मत्स्याद्यवतार-सत्त्वादिगुणरूपामवस्थां दशाम्। प्रतिपद्यमानं प्राप्नुवत्, सेवमानम्, महिम्ना महत्तया, विपुलतया, दश दिशः दशसंख्याः ककुभः। पूर्वाद्या अष्टम् उपर्यध इति दश दिश उच्यन्ते। व्याप्य प्रसृत्य, स्थितं विद्यमानम्, विष्णोरिव भगवतो विराट्पुरुषस्य यथा, अस्य समुद्रस्य, रूपम् आकृतिः, स्वरूपम्, इदृक्तया एतद्विधमिति, इयत्तया एतावत्परिमाणकमिति वा, प्रकारेण परिमाणेन वेत्यर्थः। अनवधारणीयम् अनिर्णेयम्, अकल्पनीयम्। अस्तीति शेषः।

समासः—महतो भावः महिमा, तेन महिम्ना। प्रतिपद्यते इति प्रतिपद्य-मानम्। ईदृशः भावः ईदृक्ता, तया ईदृक्तया। इयतः भाव इयत्ता, तया इयत्तया। न अवधारणीयम् अनवधारणीयम् (नञ्तत्पु०)।

कोशः—'दशाऽवस्थाऽनेकविधा' 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः।' 'विष्णुर्नारायणः कृष्णः' इत्यमरः।

भावार्थः—यथा भगवतः विष्णोः रूपं मत्स्यकूर्माद्यनेकावतारग्रहणात् सत्त्व-प्रधानत्वाच्च नानाप्रकारं दशसु दिक्षु व्याप्तत्वात् एतादृशम् एतावत्परिमाणभुक्तश्च

इति निरूपयितुं न शक्यते तथैवास्यापि समुद्रस्य रूपं वेलानतिक्रमण-वडवानल-धारणरत्नादिधारणात् माहात्म्याच्च न वर्णयितुं शक्यते इति भावः।

हिन्दीश्लोकार्थः—जैसे सत्त्वगुण-मत्स्यादि अवतारों से विभिन्न दशा को प्राप्त होने के कारण अपनी महिमा से दशों दिशाओं में व्याप्त होकर स्थित भगवान् विष्णु का रूप 'इस प्रकार है अथवा इतना बड़ा है' यह निश्चित नहीं किया जा सकता, इसी प्रकार अपनी मर्यादा का अतिक्रमण न करते हुए अनन्तरत्न, अग्निधारण आदि किये हुए एवं दशों दिशाओं में व्याप्त इस समुद्र का भी रूप 'इस प्रकार है अथवा इतना बड़ा है' यह निश्चित नहीं किया जा सकता ॥ ५ ॥

नाभिप्ररुढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६ ॥

सञ्जीविनी—नाभीति। युगान्ते कल्पान्त उचिता परिचिता योगाः स्वात्मनिष्ठैव निद्रेव निद्रा यस्य स पुरुषो विष्णुर्लोकान् भूर्भुवादीन् संहृत्य। नाभौ प्ररूढं यदम्बुरुहं पद्मं तदासनेन तन्नाभिकमलाश्रयेण प्रथमेन धात्रा दक्षादीनामपि स्रष्ट्रा पितामहेन संस्तूयमानः सन्। अमुमधिशेते, अमुष्मिञ्छेत इत्यर्थः। कल्पान्तेऽप्यस्तीति भावः।

अन्वयः—युगान्तोचितयोगनिद्रः पुरुषः लोकान् संहृत्य नाभिप्ररूढाम्बुरुहासनसंस्थितेन प्रथमन धात्रा संस्तूयमानः 'सन्' अमुम् अधिशेते।

वाच्य०—युगान्तोचितयोगनिद्रेण पुरुषेण धात्रा संस्तूयमानेन 'सता' असौ अधिशय्यते (भाववा०)।

चन्द्रिका—युगान्तोचिताः प्रलयकालेऽभ्यस्ताः,योगाः स्वात्मध्यानान्येव, निद्रेव स्वाप इव, निद्रा स्वापो यस्यैवम्भूतः, पुरुषः पुरुषोत्तमः, परमात्मा, लोकान् जगन्ति, संहृत्य विनाश्य, नाभिप्ररूढं नाभ्युत्पन्नम्, अम्बुरुहासनं कमलरूपपीठं यस्यैवम्भूतेन, प्रथमेन आद्येन, दक्षादिचतुर्दशप्रजापतीनां पूर्वेणेत्यर्थः। धात्रा ब्रह्मणा, संस्तूयमानः प्रशस्यमानः, वन्द्यमानः, 'सन् भवन्' अमुं समुद्रम्, अधिशेते स्वपिति। 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मता। अमुस्मिन् समुद्रे स्वपिति इत्यर्थः।

समासः—युगानाम् अन्तः युगान्तः (ष०त०), युगान्ते उचिताः (स०त०) युगान्तोचिताः, युगान्तोचिता योगा एव निद्रा यस्य सः (बहु०), युगान्तोचितयोगनिद्रः। नाभौ प्ररूढं (स०त०) नाभिप्ररूढम्, नाभिप्ररूढम् अम्बुरुहम् (अम्बुनि रोहतीति) एव आसनं यस्य (बहु०) सः नाभिप्ररूढाम्बुरुहासनः, तेन नाभिप्ररूढाम्बुरुहासनेन। संस्तूयते इति संस्तूयमानः। पुरि शेते इति पुरुषः (पृषोदरादित्वात् साधुः)।

कोशः—'क्षत्रियेऽपि च नाभिर्ना' (अङ्गविशेषे द्वयोः)। 'दीपः प्रदीपः

पीठमासनम्' 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ।' 'धाताऽब्जयोनिर्द्रुहिणः' 'युगं युग्मे क्रियादिषु' 'योगः संहननोपायध्यानसंगतियुक्तिपु ।' 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेशः इत्यपि ।' 'त्रिष्वथो । जगति लोको विष्टपं भुवनं जगत् ।' 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ।' इत्यमरः ।

भावार्थः—प्रलयकाले ध्यानमग्नो भगवान् शेषशायी समस्तान् लोकान् उपसंहृत्य निजनाभिकमले समासीनेन आद्यब्रह्मणा वन्द्यमानः अमुस्मिन् सागरे निद्रां करोति सर्वव्यापकस्य विष्णोरप्ययमाश्रय इत्यहो महिमास्येति भावः ।

हिन्दीश्लोकार्थः—प्रलयकालमें अभ्यस्त ( प्रत्येक प्रलयमें करनेसे ) निजसमाधिरूपी निद्रावाले भगवान् पुरुषोत्तम ( नारायण ) चौदहों भुवनों को संहार करके अपने नाभि से उत्पन्न कमल पर बैठे हुए आद्य (१४ प्रजापतियों में पहला) ब्रह्मा से प्रशंसित होते हुए इस समुद्र पर सोते हैं ॥ ६ ॥

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७ ॥

सञ्जीविनी—पक्षच्छिदेति । पक्षच्छिदा गोत्रभिदेन्द्रेण । उभयत्र "सत्सूद्विष०" इत्यादिना क्विप् । आत्तगन्धा हृतगर्वाः, अभिभूता इत्यर्थः । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । शतं शतं शतशः शरण्यं रक्षणसमर्थमेनं समुद्रम् । परेभ्यः शत्रुभ्य उपप्लविनो भयवन्तो नृपा धर्मोत्तरं धर्मप्रधानं मध्यमं, मध्यमभूपालमिव । आश्रयन्ते । 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः' इति कामन्दकः । आर्तबन्धुरिति भावः ।

अन्वयः—पक्षच्छिदा गोत्रभिदा आत्तगन्धाः महीध्राः शतशः शरण्यम् एनं परेभ्यः उपप्लविनः नृपा धर्मोत्तरं मध्यमम् इव आश्रयन्ते ।

वाच्य०—महीध्रैः शतशः शरण्यः एष...उपप्लविभिः नृपैः धर्मोत्तरः मध्यमः इव आश्रीयते ( कर्मवा० ) ।

चन्द्रिका—पक्षच्छिदा गरुत्खण्डकेन, गोत्रभिदा पर्वतविदारकेण, इन्द्रेण, आत्तगन्धाः पराजिताः, महीध्राः गिरयः, शतशः बहुशः, अनेकवारम्, संख्यैकवचनाच्च वीप्सायाम्' इति शस् । शरण्यं त्रातारम्, रक्षितारम्, एनं समुद्रम्, परेभ्यः रिपुभ्यः, उपप्लविनः त्रस्ताः, भीताः, नृपाः राजानः, धर्मोत्तरं धर्ममुख्यम्, धर्मनिष्ठमित्यर्थः । मध्यमं मध्यस्थं राजानम्, इव यथा, आश्रयन्ते आधारं मन्यन्ते । रक्षकत्वेनावलम्बन्ते समुद्रमित्यर्थः ।

समासः—पक्षान् छिनत्तीति पक्षच्छित्, तेन पक्षच्छिदा । गोत्रान् भिनत्तीति गोत्रभित्, तेन गोत्रभिदा । आत्तः गन्धः येषां ते आत्तगन्धाः । महीं धारयन्तीति महीध्राः । शरणे साधुः शरण्यः, तं शरण्यम् । उपप्लवः एषामस्तीति उपप्लविनः ।

नॄन् पान्तीति नृपाः। धर्म उत्तरः यस्य स धर्मोत्तरः, तं धर्मोत्तरम्। मध्ये भवः मध्यमः।

कोशः—'गरुत्पक्षच्छदा पत्रं पतत्रं च तनूरुहम्।' 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा।' 'शरणं गृहरक्षित्रोः' 'महीध्रे शिखरिक्ष्माभृद्' 'नृपभूपमहीक्षितः' 'दूरानात्मोत्तमाः पराः' 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः।' 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः' इत्यमरः।

भावार्थः—पक्षच्छेदकेन इन्द्रेण पराजिताः परश्शताः पर्वताः शरणागतरक्षकमेतं समुद्रं—रिपुभीताः पार्थिवाः धार्मिकं राजानं (शत्रुविजिगीष्वोरन्तरवर्तिनं मध्यस्थत्वेन यथा आश्रयन्ते—तथाऽऽश्रयन्ते। शरणागतरक्षकत्वेन ख्यातिमानयम् अत एव धर्मात्मायमिति भावः।

हिन्दीश्लोकार्थः—पर्वतों के पक्ष (पंख) काटनेवाले इन्द्रके द्वारा जिनका घमंड चूर किया गया था—ऐसे सैकड़ों पर्वत इस शरणागतरक्षक सागर की शरण में ऐसे आते हैं—जैसे शत्रुओंसे भय खानेवाले राजा धर्मप्रधान (धर्मतत्पर-धार्मिक) मध्यस्थ ( शत्रु और अपने मध्य में रहनेवाले ) राजा की शरण में जाते हैं ॥७॥

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव ॥८॥

सञ्जीविनी—रसातलादिति। आदिभवेन पुंसाऽऽदिवराहेण रसातलात्प्रयुक्तोद्वहनक्रियायाः कृतोद्धरणक्रियायाः। विवाहक्रिया च व्यज्यते। भुवो भूदेवतायाः प्रलये प्रवृद्धमस्याब्धेरच्छमम्भो मुहूर्तं वक्त्राभरणं लज्जारक्षणार्थं मुखावगुण्ठनं बभूव। तदुक्तम्—"उद्धृतासि वराहेण कृष्णेन शतबाहुना" इति।

अन्वयः—आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियायाः भुवः प्रलयप्रवृद्धम् अस्य अच्छम् अम्भः मुहूर्तवक्त्राभरणं बभूव।

वाच्य०—आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियाया भुवः प्रलयप्रवृद्धेनास्याच्छेनाम्भसा मुहूर्तवक्त्राभरणेन बभूवे (भाववाच्यम्)।

चन्द्रिका—आदिभवेन आद्येन, पुंसा पुरुषेण। वराहावतारेण विष्णुनेत्यर्थः। रसातलात् पातालात् प्रयुक्तोद्वहनक्रियायाः विहितोपर्यानयनक्रियायाः। उद्धियमाणाया इत्यर्थः। भुवः धरायाः, प्रलयः प्रवृद्धं कल्पान्तविजृम्भितम्, अस्य सागरस्य, अच्छं प्रसन्नम्, अम्भः पानीयम्, मुहूर्तं द्वादशक्षणकालपर्यन्तम्। 'तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्।' इत्यमरः। किञ्चित्कालपर्यन्तमित्यर्थः प्रकृते। अत्यन्तसंयोगे द्वितीया, वक्त्राभरणं वदनविभूषणम्, तिरस्कारिणीवस्त्रमित्यर्थः। अत्रादिभवेन पुंसेत्यनेन—श्वेतवाराहकल्पे परश्शतानि वर्षाणि तपस्तप्त्वापि ब्रह्मा सृष्टिं कर्तुं नापारयत्। यतः पृथ्वीं कटवदावेष्ट्य हिरण्याक्षः पातालं नीतवान्। अतः सा धरा नासीत् प्रकटा। निराशो धाता

यदा तूष्णीमासीत् तदा तन्नासाग्रात् अङ्गुष्ठपरिमाणः वराहः प्रादुरासीत् । स क्षणादेव महाकायो भूत्वा गर्जन् सलिलान्तः प्राविशत् । तत्र हिरण्याक्षेण सह भृशं युद्ध्वा तं निहत्य क्षोणीं दत्ताग्रे निधाय उपर्यानीय यथास्थानं निदधे । ततो ब्रह्मा सृष्टिकार्ये प्रवृत्तवान् । सृष्टेः सर्वप्रथमव्यक्तित्वात् तस्यादिभवत्वम् अजन्मनोऽपि परमात्मन इति भगवतादिपुराणकथा सूचितेति मन्तव्यम् । पृथिव्या भगवत्य-लीत्वमपि । उद्वहनं परिणयः । तत्र बध्वा मुखम् अवगुण्ठनेन विधीयत इति स्वाभाविकम् । शुभ्रजलधिजलेन तदेव कार्यं क्षणकालं यावदुपर्यानियनसमये-ऽनुष्ठितमिति कवेरुद्घाटनम् ।

समासः— भवतीति भवः, आदौ भवः ( स० त० ) आदिभवः, तेन आदि-भवेन । उद्वहनस्य क्रिया ( ष० त० ) उद्वहनक्रिया, प्रयुक्ता उद्वहनक्रिया यस्याः ( बहु० ) सा प्रयुक्तोद्वहनक्रिया, तस्याः प्रयुक्तोद्वहनक्रियायाः । प्रलये प्रवृद्धं (स० त०; प्रलयप्रवृद्धम् । वक्त्रस्य आभरणं ( ष० त० ) वक्त्राभरणम्, मुहूर्तं वक्त्राभरणं मुहूर्तवक्त्राभरणम् ।

कोशः—'अधोभुवनपातालं बलिसद्म रसातलम् ।' 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ।' 'आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥' 'त्रिष्वागाधात्प्रसन्नोऽच्छः' 'अम्भोऽर्ण-स्तोयपानीयनीरक्षीरशम्बुराम्बरम् ।' 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ।' 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।' 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।' इत्यमरः ।

भावार्थः—आदिवराहः पातालाद् भूमिं यदा सागरमार्गेण उपरि आन-यति स्म तदा तस्य महाबलस्य स्थूलकायस्य च वराहस्य तरसा विजृम्भितं विमलं समुद्रस्य सलिलं भूमेः मुखे क्षणकालं यवनिकावत् भासते स्मेति भावः ।

हिन्दीश्लोकार्थः—आदिपुरुष ( वराह ) ने जब पाताल से ( हिरण्याक्ष द्वारा चटाई जैसा लपेट कर ले जायी गई ) भूमि को ऊपर निकाला तब उनके वेग से प्रलय की तरह बढ़ा हुआ इसका विमल जल क्षणभर के लिए भूमि के मुख में घूँघट की तरह अलंकार बन गया ॥ ८ ॥

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः ॥९॥

सञ्जीविनी—मुखेति । अन्येषां पुंसां सामान्या साधारणा न भवतीत्य-नन्यसामान्या कलत्रेषु वृत्तिर्भोगरूपो यस्य स तथोक्तः । इममेवार्थं प्रतिपादयति—तरङ्ग एवाधरस्तस्य दाने समर्पणे दक्षश्चतुरोऽसौ समुद्रो मुखार्पणेषु प्रकृत्या सख्यादिप्रेरणं विना प्रगल्भा धृष्टाः सिन्धूर्नदीः । 'सिन्धुः समुद्रे नद्यां च' इति विश्वः । स्वयं पिबति पाययते च । तरङ्गाधरमिति शेषः । "न पादम्याङ्यमा०" इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः । "गतिबुद्धिप्रत्यवसानार्थ०"

इत्यादिना सिन्धूनां कर्मत्वम् । दम्पत्योर्युगपत्परस्पराधरपानमनन्यसाधारणमिति भावः ।

अन्वयः—अनन्यसामान्यकलत्रवृत्तिः स्वयं तरङ्गाधरदानदक्षः असौ मुखार्पणेषु प्रकृतिप्रगल्भाः सिन्धूः पिबति पाययते च ।

वाच्य०—अनन्यसामान्यकलत्रवृत्तिना स्वयं तरङ्गाधरदानदक्षेण अमुना मुखार्पणेषु प्रकृतिप्रगल्भाः सिन्धवः पीयन्ते पाय्यन्ते च ( कर्म० ) ।

चन्द्रिका—अनन्यसामान्या अनितरसाधारणा, कलत्रेषु भार्यासु, वृत्तिः संभोगात्मिका क्रिया, यस्यैवम्भूतः, अत एव तरङ्गाधरस्य ऊर्मिरूपनिम्नोष्ठस्य, दाने वितरणे, दक्षः निपुणः, पटुः असौ एष समुद्रः । मुखार्पणेषु निजमुखदानेषु, प्रकृतिप्रगल्भाः निसर्गतः प्रौढाः, सिन्धूः तरङ्गिणीः, स्वयम् आत्मना, पिबति चुम्बति, आचामति, पाययते च स्वतरङ्गाधरपानं कारयति च । समुद्रस्य सरित्पतित्वात् अनेकासां सरितामेव एकल मुखानि पिबति निजतरङ्गाधरान् सरिद्भ्यो ददातीति समुद्रोऽयं दक्षिणो नायकं इति भावः । उपेन्द्रवज्राछन्दः ।

समासः—अन्येषां सामान्या न भवतीति अनन्यसामान्या ( नञ्त० ) कलत्रेषु वृत्तिः ( स० तत्पु० ) कलत्रवृत्तिः, अनन्यसामान्या कलत्रवृत्तिर्यस्य सः ( बहु० ) अनन्यसामान्यकलत्रवृत्तिः । तरङ्ग एव अधराः ( कर्म० ) तरङ्गाधराः तरङ्गाधराणां दानं तरङ्गाधरदानम् ( ष० त० ), तरङ्गाधरदाने दक्षः (स०त०) तरङ्गाधरदानदक्षः । मुखानाम् अर्पणानि ( ष० तत्पु० ) तेषु मुखार्पणेषु । प्रकृत्या प्रगल्भाः प्रकृतिप्रगल्भाः ( तृ० त० ), ताः पुनस्तद्वत् ।

कोशः—'आननं लपनं मुखम् ।' 'संसिद्धिप्रकृती त्विमे । स्वरूपञ्च स्वभावश्च निसर्गश्च' 'धृष्टे धृष्णग् वियातश्च प्रगल्भः प्रतिभान्विते ।' 'स्वयमात्मना' 'भङ्गस्तरङ्ग ऊर्मिर्वा' 'ओष्ठाधरौ तु रदनच्छदो दशनवाससि ।' 'त्यागो विहापितं दानम्' 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।' 'कलत्रं श्रोणिभार्ययोः' 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।' इत्यमरः ।

भावार्थः—साधारणप्रियवत् अस्य समुद्रस्य स्वप्रियासु, नदीषु संभोगव्यापारो नास्ति, किन्तु असाधारणः । अयं प्रकृत्या प्रगल्भानां नदीनां मुखानि स्वयं चुम्बति, स्वस्य तरङ्गाधरं ताः पाययते च । अनेकासां प्रियाणामेककाल एवाधरपानं ताभ्यश्चानेकाभ्यः प्रियाभ्यः स्वतरङ्गरूपाधरदानञ्च युगपद् ददत् अयं लोकविलक्षणक्षणो भोगीति भावः ।

हिन्दीश्लोकार्थः—अन्य पुरुषों से विलक्षण रूप से प्रियाओं का सम्भोग करने वाला यह समुद्र, स्वयं तरङ्गरूपी अधर देने में कुशल, अपने मुख अर्पण करने में स्वभाव से ही ढीठ नदियों का मुखपान ( अधर चुम्बन ) करता है, एवं अपने तरंगाधर को नदियों से पान कराता भी है । एक काल में अनेक प्रियाओं

को अधर दान तथा आदान ( स्वयं लेना ) करना सर्वसाध्य संभोग व्यापार नहीं है ॥ ९ ॥

ससत्त्वमादाय नदीमुखाम्भः सम्मीलयन्तो विवृताननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥१०॥

सञ्जीविनी—ससत्त्वमिति । अमी तिमयो मत्स्यविशेषाः । तदुक्तम्—"अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः" इति विवृताननत्वाद्व्यात्तमुखत्वाद्धेतोः, आननं विवृत्येत्यर्थः । ससत्त्वं मत्स्यादिप्राणिसहितं नदीमुखाम्भ आदाय सम्मीलयन्तश्चञ्चुपुटानि संघट्टयन्तः सन्तः सरन्ध्रैः शिरोभिर्जलप्रवाहानूर्ध्वं वितन्वन्ति । जलयन्त्रक्रीडासमाधिर्व्यज्यते ।

अन्वयः—अमी तिमयः विवृताननत्वात् ससत्त्वं नदीमुखाम्भः आदाय संमीलयन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्ध्वं वितन्वन्ति ।

वाच्य०—अमीभिस्तिमिभिः विवृताननत्वात् ससत्त्वं नदीमुखाम्भः आदाय संमीलयद्भिः सरन्ध्रैः शिरोभिर्जलप्रवाहा ऊर्ध्वं वितन्यन्ते ।

चन्द्रिका—अमी एते, तिमयः रोहितनामानो मीनविशेषाः भाषायां 'रोहू' इति वाच्याः । इदम्-एतद्-अदसां सन्निकृष्ट-समीपतरवर्ति-विप्रकृष्टरूपा अर्थविलक्षणता यद्यप्यस्ति, तथाऽपि प्रायेण समानार्थकतया त्रयोऽपीमे पुरोवर्तिनि प्रयुज्यन्ते शिष्टपरम्परयेति बोध्यम् । विवृताननत्वात् विकसितवदनत्वात्, मुखं व्यादायेत्यर्थः । ससत्त्वं जलजन्तुयुक्तम्, नदीमुखाम्भः सरिदग्रभागात् नीरम्, आदाय पीत्वा, सम्मीलयन्तः ओष्ठपुटद्वयं विदधानाः, सरन्ध्रैः छिद्रान्वितैः, शिरोभिः मौलिभिः, जलप्रवाहान् सलिलपूरान्, ऊर्ध्वम् उपरि, वितन्वन्ति कुर्वन्ति, उत्क्षिपन्तीत्यर्थः ।

समासः—सत्त्वैः सह वर्तते इति ( सह०बहु० ) ससत्त्वम्, तत् (द्वितीया०)। नदीनां मुखं (ष० तत्पु०) नदीमुखम्, नदीमुखाद् अम्भः नदीमुखाम्भः (पं०त०), तत् । विवृतानि आननानि येषां ते (बहु०) विवृताननाः, तेषां भावः विवृताननत्वम्, तस्मात् विवृताननत्वात् । रन्ध्रैः सह वर्तन्ते इति सरन्ध्राणि, तैः सरन्ध्रैः । जलस्य प्रवाहाः जलप्रवाहाः ( ष० त० ) । तान् जलप्रवाहान् ।

कोशः—'रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ।' 'आननं लपनं मुखम् ।' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्रीसु जन्तुषु ।' 'नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्लादिनी धुनी ।' 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बु शम्बरम् ।' 'रन्ध्रं श्वभ्रं वपा शुषिः ।' 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।' 'प्रवाहस्तु प्रवृत्तिः स्यात्' इत्यमरः ।

भावार्थः—इमे मीनविशेषाः मुखं विवृत्य समुद्रमागच्छन्तीनां सरिताम् अग्रभागात् जलजन्तुसहितमेव पानीयं पीत्वा स्वोष्ठपुटे यदा निमीलयन्ति तदा

तेषां छिद्रयुक्तमस्तकेभ्यः जलधारा उपरि निस्सरन्तीति इयं जलयन्त्रखेलेव भाति। जलयन्त्राण्यपि प्रथममग्रभागात् सलिलं संपूर्य परस्ताद् नोदितानि तानि उपरि जलम् उत्किरन्तीति दृष्टम्।

हिन्दीश्लोकार्थः—ये 'रोहू' मछलियाँ ( इनकी सौ योजन चौडाई होती है ) विशाल मुख वाली होने के कारण, जलजन्तुओं के साथ ही नदियों के मुहाने से जल को मुँह में भर लेती हैं। जब होठें बन्द करती हैं तब मुख में भरे हुए जल सिर के छिद्रों से फुहारे की तरह ऊपर निकलने लगता है॥ १०॥

मातङ्गनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान्।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम्॥११॥

सञ्जीविनी—मातङ्गेति। सहसोत्पतद्भिर्मातङ्गनक्रैर्मातङ्गाकारैर्ग्राहैर्द्विधा भिन्नान्समुद्रफेनान् पश्य। ये फेना एषां जलमातङ्गनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति।

अन्वयः—सहसा उत्पतद्भिः मातङ्गनक्रैः द्विधा भिन्नान् समुद्रफेनान् पश्य। ये एषां कपोलेषु संसर्पितया कर्णक्षणचामरत्वं व्रजन्ति।

वाच्य०—सहसोत्पतद्भिः मातङ्गनक्रैः द्विधा भिन्नाः फेना दृश्यन्ताम्। यैः एषां कपोलेषु संसर्पितया कर्णक्षणचामरत्वं व्रज्यते। ( कर्म० )

चन्द्रिका—सहसा अतर्कितम्, 'अतर्किते तु सहसा' इत्यमरः। द्रुतमित्यर्थः। उत्पतद्भिः उद्गच्छद्भिः, उच्चलद्भिः. मातङ्गनक्रैः गजाकारैः ग्राहविशेषैः, द्विधा द्विप्रकारेण, भिन्नान् पृथक्कृतान्, विशीर्णान्, फेनान् अब्धिकफान् 'डिण्डीरोऽब्धि-कफः फेनः' इत्यमरः। पश्य विलोकय। सावधानमिति शेषः। ये फेनाः, एषां ग्राहविशेषाणाम्, विपुलकायानाम्, कपोलेषु गण्डस्थलेषु, संसर्पितया व्यापितया, प्रसारित्वात्, कारणात् कर्णयोः श्रोत्रयोः, क्षणं मुहूर्तकालम्, चामरत्वं प्रकीर्णकत्वम्, 'चामरन्तु प्रकीर्णकम्' इत्यमरः। व्रजन्ति गच्छन्ति। शुभ्रवर्णत्वात् फेना ग्राहाणां कर्णयोः चामरायन्ते इत्यर्थः।

समासः—मातङ्गकाराः नक्राः ( मध्यमपदलोपी० ) मातङ्गनक्राः। यद्वा मातङ्गाश्च ( जलकरिणश्च ) नक्राश्चेति ( द्वन्द्व० ) मातङ्गनक्राः, तैः मातङ्गनक्रैः। समुद्रस्य फेनाः ( ष० त० ) समुद्रफेनाः, कपोलान् संसर्पन्तीति कपोलसंसर्पिणः ( उपपद० ) कपोलसंसर्पिणां भावः कपोलसंसर्पिता, तया कपोलसंसर्पितया। कर्णयोः क्षणं चामराः (स०त०) कर्णक्षणचामराः, कर्णक्षणचामराणां भावः कर्णक्षणचामरत्वम्, तत् ( द्विती० )।

कोशः—'अतर्किते तु सहसा' 'ग्राहोऽवराहो नक्रस्तु कुम्भीरः' 'समुद्रोऽब्धिरकूपारः' 'डिण्डीरोऽब्धिकफः फेनः' 'गण्डौ कपोलौ' 'कर्णशब्दग्रहौ श्रोत्रम्' 'चामरन्तु प्रकीर्णकम्' 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमराः।

भावार्थः—द्रुतं पार्श्वपरिवर्तनं कुर्वन्तो जलगजाः मकरादयश्च फेनान् द्विधा कुर्वन्ति-अवलोकयेदम् । ते फेनाः गजमकराणां गण्डसंसक्ताः क्षणकालं शुभ्रत्वाच्चामरवत् शोभन्ते इति भावः ।

हिन्दीश्लोकार्थः—शीघ्रता से उछलनेवाले महाकाय जलगज मगर आदि से दो भागों में बाँटे गये इन फेनों को देखो, जो उछलने वाले उन गज मकरादिकों के गण्ड स्थलों पर क्षण भर के लिए ( श्वेत होने के कारण ) चँवर बन जाते हैं ॥ ११ ॥

वेलानिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषाः ।
सूर्यांशुसम्पर्कसमृद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः ॥१२॥

सञ्जीविनी—वेलेति वेलानिलाय । वेलानिलं पातुमित्यर्थः । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी । प्रसृता निर्गता महोर्मीणां विस्फूर्जथुरुद्रेवः । "ट्वितोऽथुच्" इत्यथुचप्रत्ययः । तस्मान्निर्विशेषा दुर्ग्रहभेदा एते भुजङ्गाः सूर्यांशुसम्पर्केण समृद्धरागैः प्रवृद्धकान्तिभिः फणस्थैर्मणिभिर्व्यज्यन्त उन्नीयन्ते ।

अन्वयः—वेलानिलाय प्रसृता महोर्मिविस्फूर्जथुनिर्विशेषाः एते भुजङ्गाः सूर्यांशुसम्पर्कसमृद्धरागैः फणस्थैः मणिभिः व्यज्यन्त ।

वाच्य०—वेलानिलाय प्रसृतान् महोर्मिविस्फूर्जिथनिर्विशेषान् एतान् भुजङ्गान् सूर्यांशुसंपर्कसमृद्धरागाः फणस्था मणयः व्यञ्जयन्ति । ( कर्तृ० )

चन्द्रिका—वेलानिलाय तटस्य पवनं पातुम्, प्रसृताः उच्चलिताः समुद्रान्तरालादिति शेषाः, महोर्मीणां विपुलतरङ्गाणाम्, कल्लोलानाम्, 'महत्सूल्लोलकल्लोलौ' इत्यमरः । विस्फूर्जथुभ्यः विजृम्भणेभ्य, निर्विशेषाः समानाकाराः वर्णादिसाम्यादिति भावः । एते पुरोवर्तिनः, भुजङ्गाः अहयः सर्पाः, सूर्यांशूनां भास्कररश्मीनाम्, सम्पर्केण संयोगेन, समृद्धः समेधितः, वृंहतः, रागः प्रभा येषां तैस्तथाक्तैः फणस्थैः मस्तकेषु वर्तमानैः, स्फटागतैः, 'स्फटायान्तु फणा द्वयोः ।' इत्यमरः । मणिभिः अश्मविशेषैः महार्घैः, व्यज्यन्ते प्रतीयन्ते, एते सर्पाः न तरङ्गाः, फणामणिद्योतमानत्वादित्यनुमीयन्ते इत्यर्थः ।

समासः—वेलाया अनिलः ( ष० तत्पु० ) वेलानिलः, तस्मै वेलानिलाय । महान्तश्च ते ऊर्मयश्च ( कर्म० ) महोर्मयः । महोर्मीणां विस्फूर्जथवः ( ष०त० ) महोर्मिविस्फूर्जथवः । निर्गतः विशेषः येभ्यः ( बहु० ) ते निर्विशेषाः । महोर्मिविस्फूर्जथुभ्यो निर्विशेषाः ( पञ्चमीत० ) महोर्मिविस्फूर्जथुनिर्विशेषाः । सूर्यस्यां अंशव. ( ष० त० ) सूर्यांशवः; सूर्यांशूनां सम्पर्कः सूर्यांशुसम्पर्कः ( ष०त० ), सूर्यांशुसम्पर्केण समृद्धः रागः येषां ( बहु० ) ते सूर्यांशुसम्पर्कसमृद्धरागाः । तैः सूर्यांशुसम्पर्कसमृद्धरागैः । फणेषु तिष्ठन्तीति फणस्थाः, तैः फणस्थैः ।

कोशः—अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।' 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ।' 'विशालं

पृथुलं महत्' 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः।' 'किरणोस्रमयूखांशुगभस्तिघृणिपृश्नयः।' 'रत्नं मणिर्द्वयोः।' 'स्फटायां तु फणा द्वयोः' इत्यमरः।

भावार्थः—तीरे पवनसेवनाय समुद्रमध्याद् उद्गता एते सर्पाः चलद्वृहत्तरङ्गसदृशाः स्वशिरोगतैः सूर्यकिरणसंबन्धात् अधिकं चमत्कुर्वद्भिः मणिभिः सर्पा इति ज्ञायन्ते। वक्रातादिना मणिस्फुरणात् पूर्वं तरङ्गवदेव भासन्ते स्म। इदानीं सूर्यरश्मिपातात् चमत्कुर्वन्तः शिखामणयः 'इमे सर्पाः' इति ज्ञापयन्तीति भावः।

हिन्दीश्लोकार्थः—तटकी वायु का सेवन करने के लिए निकले हुए कम्पायमान बड़े तरंगों के समान ये सर्प सूर्य किरण पड़ने मे अधिक चमकने वाली अपने फणों पर रहनेवाली मणियों से ( सर्प करके ) जाने जाते हैं ॥१२॥

तवाधरस्पर्धिषु विद्रुमेषु पर्यस्तमेतत्सहसोर्मिवेगात्।
ऊर्ध्वाङ्कुरप्रोतमुखं कथञ्चित्क्लेशादपक्रामति शङ्खयूथम् ॥१३॥

सञ्जीविनी—तवेति। तवाधरस्पर्धिषु, अधरसदृशेष्वित्यर्थः। विद्रुमेषु प्रवालेषु सहसोर्मिवेगात्पर्यस्तं प्रोत्क्षिप्तमूर्ध्वाङ्कुरैर्विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनमेतच्छङ्खानां यूथं वृन्दं कथञ्चित्क्लेशादपक्रामति विलम्ब्यापसरतीत्यर्थः।

अन्वयः—तव अधरस्पर्द्धिषु विद्रुमेषु सहसा ऊर्मिवेगात् पर्यस्तम् ऊर्ध्वाङ्कुरप्रोतमुखं शंखयूथं कथञ्चित् क्लेशात् अपक्रामति।

वाच्य०—तवाधरस्पर्द्धिषु विद्रुमेषु सहसोर्मिवेगात् पर्यस्तेनोर्ध्वाङ्कुरप्रोतमुखेन अनेन शंखयूथेन कथञ्चित् क्लेशादपक्रम्यते।

चन्द्रिका—तव ते, अधरस्पर्द्धिषु ओष्ठसाम्यार्थिषु, अधरतुल्येषु इत्यर्थः। विद्रुमेषु प्रवालेषु। सहसा द्रुततरम्, ऊर्मिवेगात् तरङ्गतरसा, 'वेगस्तरसी तु रयः स्यदः' इत्यमरः। पर्यस्तं पातितम्, ऊर्ध्वाङ्कुरैः उपरिगतैः प्ररोहैः, प्रोतमुखं स्यूतास्यम्, शङ्खयूथं कम्बुवृन्दम्, कथञ्चित् महतः, क्लेशात् कष्टात्, अपक्रामति अपसरति। अङ्कुरे दृढसंलग्नत्वात् शंखानां ततोऽपसरणे महान् क्लेशो भवतीत्यर्थः। स्वभावोक्तिरलङ्कारः, 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्।' इति तल्लक्षणम्। स चायम् 'अधरस्पर्धिविद्रुमं' इत्यत्र विद्रुमाधरयोः उपमानोपमेयभावस्यवैपरीत्येन वर्णनात् प्रतीपालंकारेण संसृष्ट इति विभावनीयम्।

समासः—अधरं स्पर्द्धन्त इति अधरस्पर्द्धिनः, तेषु अधरस्पर्द्धिषु। ऊर्मीणां वेगः ( ष० त० ) ऊर्मिवेगः, तस्मात् ऊर्मिवेगात्। ऊर्ध्वाश्च ते अङ्कुराश्च ऊर्ध्वाङ्कुराः ( कर्म० ) ऊर्ध्वाङ्कुरेषु प्रोतं मुखं यस्य ( बहु० ) तत् ऊर्ध्वमुखम्। शङ्खानां यूथं शङ्खयूथम्।

कोशः—'ओष्ठाधरौ तु रदनच्छदौ' 'मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्।'

'अतर्किते तु सहसा' 'भङ्गस्तरङ्ग ऊर्मिर्वा' 'अङ्कुरोऽभिनवोद्भिदि' 'आननं लपनं मुखम्' 'शङ्खः स्यात् कम्बुरस्त्रियौ' 'सजातीयैः कुलं यूथम्' इत्यमरः।

भावार्थः—हे जानकि! रक्तवर्णतया त्वदधरसदृशेषु प्रवालेषु वीचिभिः द्रुततया पातितः शंखनिकरः ऊर्ध्वमुखेषु अंकुरषु स्यूत इव संगतः महता कष्टेन प्रवालेभ्यः पृथग् भवति—इदं पश्य कौतुकमिति भावः।

हिन्दीश्लोकार्थः—तुम्हारे अधर से बराबरी या प्रतियोगिता करनेवाले ( अर्थात् सदृश ) मूँगों पर शीघ्रता से तरंगों के वेग के द्वारा फेंका गया और ऊपर मुख किये अंकुरों में फँस गया है जिसका मुख ऐसा शंखसमूह बड़ी ही कठिनता से ( प्रवालों = मूँगों से ) पृथग् होता है ॥ १३ ॥

प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद् भ्रमता घनेन।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥१४॥

सञ्जीविनी—प्रवृत्तेति। पयांसि पातु प्रवृत्त एव प्रवृत्तमात्रो न तु पीतवांस्तेनावर्तवेगात्। 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। भ्रमता घनेन मेघेनायं समुद्रो भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमान इव भूयिष्ठमत्यन्तमाभाति।

अन्वयः—पयांसि पातुं प्रवृत्तमात्रेण आवर्तवेगात् भ्रमता घनेन अयं समुद्रः भूयः गिरिणा प्रमथ्यमानः इव भूयिष्ठम् आभाति।

वाच्य०—पयांसि पातुं प्रवृत्तमात्रेण आवर्तवेगाद् भ्रमता घनेन अनेन समुद्रेण भूयो गिरिणा प्रमथ्यमानेनेव भूयिष्ठम् आभायते ( भाव० )।

चन्द्रिका—पयांसि जलानि, पातुं आचामितुम्, ग्रहीतुम्, प्रवृत्तमात्रेण कृतारम्भेणैव, विहितोपक्रमेणैव, आवर्तस्य अम्भसां भ्रमस्य, वेगात् जवात्, तरसः, भ्रमता विचलता, घनेन मेघेन, अयं समुद्रः एष सागरः, भूयः द्वितीयवारम्, गिरिणा मन्दराचलेन, प्रमथ्यमान इव विलोड्यमानो यथा, भूयिष्ठम् बहुलतया, भूरि, क्रियाविशेषणमेतत्। आभाति भासते। उत्प्रेक्षालङ्कारः। केषाञ्चिन्मते अभूतोपमेयम्।

समासः—प्रवृत्त एव प्रवृत्तमात्रः ( अस्वपदविग्रहत्वान्नित्यसमासः ), तेन प्रवृत्तमात्रेण। आवर्तस्य वेगः आवर्तवेगः, तस्मात् आवर्तवेगात्। प्रमथ्यते इति प्रमथ्यमानः।

कोशः—'पयः कीलालममृतं जीवनं भुवनं वनम्।' 'मात्रं कार्त्स्न्येऽवधारणे' 'स्यादावर्तोऽम्भसां भ्रमः:' 'घनो मेघे मूर्तगुणे त्रिपु मूर्ते' 'पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च।' 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः।' 'अद्रिगोत्रगिरिग्रावा' इत्यमरः।

भावार्थः—मेघोऽस्य समुद्रस्य जलं पातुम् उपक्रान्त एव जलभ्रमेषु निपत्य यदा भ्रमति, तदाऽयं सागरः पुनरपि मन्दरेण विलोड्यमान इव शोभते।

हिन्दीश्लोकार्थः—मेघ ज्यों ही इस समुद्र में पानी पीने लगता है, त्योंही पानी के भंवर में फँसकर चक्कर काटने लगता है। उस चक्कर काटनेवाले मेघसे यह समुद्र ऐसी शोभा देता है जैसो कि पुनः मन्दराचल के द्वारा मथा जा रहा हो ॥ १४ ॥

दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥ १५ ॥

सञ्जीविनी—दूरादिति। अयश्चक्रनिभस्य लोहचक्रसदृशस्य। लवणाम्बुराशेर्दूरात्तन्व्यजुत्वेनावभासमाना तमालतालीवनराजिर्नीला वेला तोरभूमिर्धारानिबद्धा चक्राश्रिता कलङ्करेखा मालिन्यरेखेव। आभाति। 'मालिन्यरेखां तु कलङ्कमाहुः" इति दण्डी।

अन्वयः—अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी तमालतालीवनराजिनीला वेला धारानिबद्धा कलङ्करेखा इव आभाति।

वाच्य०—अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्व्या तमालतालीवनराजिनीलया वेलया धारानिबद्धया कलङ्करेखया इव आभायते ( भाववा० )।

चन्द्रिका—अयश्चक्रनिभस्य लोहरथाङ्गसदृशस्य 'चक्रं रथाङ्गम्' इत्यमरः। लवणाम्बुराशेः क्षारनारधेः, दूरात् विप्रकृष्टात्, तन्वी कृशा, तमालतालीनां तापिच्छतृणराजानाम्, वृक्षविशेषाणाम् 'कालस्कन्धस्तमालः स्यात्तापिच्छः' 'तृणराजाह्वयस्तालः' इत्यमरः। वनराज्या विपिनपङ्क्त्या नीला श्यामला, वेला तटप्रान्तः, धारानिबद्धा चक्रसंलग्ना, कलङ्करेखेव कार्ष्ण्यपङ्क्तिरिव, शोभते भाति। उपमालंकारः।

समासः—अयसः चक्रम् (ष० त०) अयश्चक्रम्, अयश्चक्रेण सदृशः (अस्वपद०) अयश्चक्रनिभः, तस्य अयश्चक्रनिभस्य। तमालाश्च ताल्यश्च तमालताल्यः (द्वन्द्व०), तमालतालीनां वनानि ( ष० त० ) तमालतालीवनानि, तमालतालीवनानां राजिः तमालतालीवनराजिः ( ष० त० ), तमालतालीवनराज्या नीला ( तृ० त० ) तमालतालीवनराजिनीला। लवणानि तानि अम्बूनि च ( कर्म० ) लवणाम्बूनि, लवणाम्बूनां राशिः यस्मिन् ( बहु० ) सः लवणाम्बुराशिः, तस्य लवणाम्बुराशेः। धारायां निबद्धा ( स०त० ) धारानिबद्धा। कलङ्कस्य रेखा ( ष० त० ) कलङ्करेखा।

कोशः—'स्याद् दूरं विप्रकृष्टकम्' 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी। अश्मसारः' 'चक्रं रथाङ्गं कलङ्करेखा' 'स्युरुत्तरपदे त्वमी। निभसंकाशनीकाशप्रतीकाशोपमादयः।' 'सूक्ष्मं दभ्रं कृशं तनु' 'अटव्यरण्यं विपिनं गहनं काननं वनम्।' 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः।' 'कृष्णे नीलासितश्याम-कालश्यामलमेचकाः।' 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि।' 'कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्।' इत्यमराः।

भावार्थः—'लोहचक्रसदृशस्य लवणसागरस्य दूरात् सक्ष्मेव लक्ष्यमाणा तमालतालीराजिभिः कृष्णवर्णा तटभूमिः भ्रमच्चक्रसंसक्तो मालिन्यरेखेव भासते, इति भावः।

हिन्दीश्लोकार्थः—लोहे के पहिये के समान इस लवणसमुद्रकी दूरी में पतली दीख पड़नेवाली तमाल और तालों के वनों की कतारों से काली तटभूमि, चक्रमें लगे हुए धब्बे की रेखा-सी शोभित हो रही है ॥ १५ ॥

वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६ ॥

सञ्जीविनी—वेलेति। हे आयताक्षि! 'वेला स्यात्तीरनीरयोः' इति विश्वः। वेलानिलः समुद्रतीरवायुः, केतकरेणुभिस्त आननं सम्भावयति। किमर्थमित्यपेक्षाया-मुत्प्रेक्षते—बिम्बाधरे बद्धतृष्णं मां मण्डनेनाभरणक्रियया कालहानिर्विलम्बस्तस्या अक्षममसहमानम्। कर्मणि षष्ठी। कालहानिमसहमानं वेत्तीव वेत्ति किम्। नो चेत्कथं सम्भावयेदित्यर्थः।

अन्वयः—आयताक्षि! वेलानिलः केतकरेणुभिः बिम्बाधरबद्धतृष्णं मां मण्ड-नकालहानेः अक्षमं वेत्तीव ते आननं सम्भावयति।

वाच्य०—हे आयताक्षि! वेलानिलेन केतकरेणुभिः (कर्मणि प्र०) बिम्बाधरबद्धतृष्णं मां मण्डनकालहानेः अक्षमं वेत्तेव ते आननं सम्भाव्यते (कर्मवाच्यम्)।

चन्द्रिका हे आयताक्षि! विशाललोचने! वेलानिलः तीरमारुतः, केतकानां केतकीपुष्पाणां 'पुष्पमूले च बहुलम्' इति वार्तिकात् तद्धितलुक्। रेणुभिः परागैः, बिम्बाधरे बिम्बसदृशोष्ठे, रक्ते इत्यर्थः। बद्धतृष्णं स्पृहावन्तम्, मां मा, मण्डनेन विभूषणेन, या कालहानिः समयक्षेपः, विलम्ब इत्यर्थः, तस्याः अक्षमम् अतितिक्षुम्, विलम्बमसहमानमित्यर्थः। वेत्तीव जानातीव, ते तव, आननं मुखम् सम्भावयति अलंकरोति। वायुः केतकचूर्णैर्मुखं सुरभयतीत्यर्थः। हेतूत्प्रेक्षा, वायुकर्तृकजानकीमुखालंकरणे श्रीरामनिष्ठमण्डनकालहरणाक्षमत्वज्ञानस्य हेतुत्वेनो-त्प्रेक्षणात्। 'सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' इति तल्लक्षणम्।

समासः—आयते अक्षिणी यस्याः (बहु०) सा आयताक्षी, तत्सम्बुद्धौ हे आयताक्षि। वेलाया अनिलः (ष०त०) वेलानिलः। केतकानां रेणवः केतक-रेणवः (ष०त०), तैः केतकरेणुभिः। बिम्ब इव अधरः (उपमानपू० कर्म०), बिम्बाधरः, बिम्बाधरे बद्धा तृष्णा येन (बहु०) सः बिम्बाधरबद्धतृष्णः, तं बिम्बाधरबद्धतृष्णम्। कालस्य हानिः (ष०त०) कालहानिः, मण्डनेन काल-हानिः मण्डनकालहानिः (तृ०त०), तस्याः मण्डनकालहानेः। अविद्यमाना क्षमा (बहु०) यस्य सः अक्षमः, तम् अक्षमम्। यद्वा न क्षमः अक्षमः (अशक्तः) (न०त०), तम् अक्षमम्।

कोश:—'वेला स्यात्तीरनीरयोः' इति विश्वः । 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।' 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ।' 'आननं लपनं मुखम्' 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।' 'सुदूरं दीर्घमायतम् ।' 'लोचनं चक्षुरक्षिणी' 'क्षमं शक्ते हिते त्रिषु' 'क्षितिक्षान्त्योः क्षमा' 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् । मण्डनम् ।' इत्यमरः ।

भावार्थः—हे सुलोचने ! तीरमारुतः, शीघ्रमेव मण्डने विलम्बं विनैव त्वद्बिम्बाधरं पातुकामं मां ज्ञात्वैव, केतकीपरागविलेपनेन त्वन्मुखं विभूषयति, सुरभयति—इति भावः ।

हिन्दीश्लोकार्थः—हे विशालनयने ! समुद्रतीर का पवन, केतकी ( केवड़ा ) पुष्पों के परागों ( चूर्णों ) से बिम्बाधर पर ललचने वाले एवं मुख के अलङ्कार में होने वाले विलम्ब को न सहने वाले मुझको मानो जानकर—तेरे मुखको सुगन्धित बना रहा है ॥ १६ ॥

एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात्कूलं फलावर्जितपूगमालम् ॥१७॥

सञ्जीविनी—एत इति । एते वयं सैकतेषु भिन्नाभिः स्फुटिताभिः शुक्तिभिः पर्यस्तानि परितः क्षिप्तानि मुक्तानां पटलानि यस्मिंस्तत्तथोक्तम् । फलैरावर्जिताः आनमिताः पूगमाला यस्मिंस्तत्पयोधेः सागरस्य कूलं तीरं विमानवेगात्पुष्पकविमानवेगान्मुहूर्तेन प्राप्ताः ।

अन्वयः—एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं फलावर्जितपूगमालं पयोधेः कूलं विमानवेगात् मुहूर्तेन प्राप्ताः ।

वाच्य०—एतैः अस्माभिः सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं फलावर्जितपूगमालं पयोधेः कूलं विमानवेगात् मुहूर्तेन प्राप्तम् । ( कर्म० ) ।

चन्द्रिका—एते वयम् इति विमानारूढाः अङ्गुल्या निर्दिष्टाः सैकतेषु बालुकामयप्रदेशेषु भिन्नशुक्तिभिः उन्मीलितमुक्तास्फोटैः 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः । पर्यस्तानि परितः कीर्णानि मुक्तापटलानि मौक्तिकवृन्दानि यस्मिन् तत्, फलावर्जिताः प्रसवप्रह्वीकृताः, फलैर्नम्रीकृताः पूगमालाः क्रमुकश्रेणयः यस्मिन् तादृशं पयोधेः जलधेः, समुद्रस्य, कूलं तटम्, विमानवेगात् व्योमयानतरसा मुहूर्तेन अल्पकालेन, प्राप्ताः समागताः ।

समास—सिकता एषु सन्तीति सैकताः ( 'देशे लुबिचौ च' इत्यणो लुक् ), सैकतेषु भिन्नाः ( स०त० ) सैकतभिन्नाः, सैकतभिन्नाश्च ताः शुक्तयश्च (कर्म०) सैकतभिन्नशुक्तयः । मुक्तानां पटलानि मुक्तापटलानि ( ष०त० ) सैकतभिन्नशुक्तिभिः पर्यस्तानि मुक्तापटलानि यस्मिन् तत् ( बहु० ) सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलम्, तत् पुनस्तदेव । विमानस्य वेगः ( ष० त० ) विमानवेगः,

तस्मात् विमानवेगात् । पूगानां मालाः (ष० ष०) पूगमालाः । फलैः आवर्जिताः (तृ०त०) फलावर्जिताः । फलावर्जिताः पूगमालाः यस्मिन् (बहु०) तत् फलावर्जितपूगमालम्, तत् पुनस्तत् ।

कोशः—'सैकतं सिकतामयम्' ('सिकताः स्युर्वालुकाऽपि') 'दारिते भिन्नभेदितो' मुक्तास्फोटः स्त्रियां शुक्तिः' 'मौक्तिकम् । मुक्ताऽथ विद्रुमः पुंसि' 'छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ।' 'तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ।' 'व्योमयानं विमानोऽस्त्री' 'घोण्टा तू पूगः क्रमुको गुवाकः खपुरः' 'माल्यं माला स्रजः' इत्यमरः ।

भावार्थः—विमानारूढा वयं विमानस्य द्रुतोत्पतनात् क्षणैरेव कतिभिश्चन समुद्रस्य पश्चिमं तीरं समागताः, यत्र विदारितमुक्तास्फोटेभ्यः मौक्तिकपुञ्जा इतस्ततो विकीर्णाः सन्ति । यत्र च क्रमुकतरूणां श्रेणयः फलानताः कामपि शोभां पुष्णन्तीति भावः ।

हिन्दीश्लोकार्थः—ये हमलोग (विमानारूढ), जहाँ बालूप्रदेशों में फूटी सीपियों से मोती बिखरे हुए हैं और फलभार से झुके हुए सुपारी के पेड़ों की कतारें लगी हैं—ऐसे समुद्र के दूसरे तीर, विमान की शीघ्र चाल से, आ गये हैं ॥ १७ ॥

कुरुष्व तावत्करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमिः ॥१८॥

सञ्जीविनी—कुरुष्वेति । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ इवोरू यस्याः सा करभोरूः "ऊरूत्तरपदादौपम्ये" इत्यूङ् । तस्या सम्बुद्धिर्हे करभोरु ! मृगवत्प्रेक्षत इति विग्रह । हे मृगवत्प्रेक्षिणि ! तावत्पश्चान्मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व एषा सकानना भूमिर्विदूरीभवतः समुद्रान्निष्पतति निष्क्रामतीव विदूरशब्दाद्विशेष्यनिघ्नाच्च्विः ।

अन्वयः—करभोरु ! मृगप्रक्षिणि ! तावत् पश्चान्मार्गे दृष्टिपातं कुरुष्व । एषा सकानना भूमिः विदूरीभवतः समुद्रात् निष्पततीव ।

वाच्य०—करभोरु ! मृगप्रेक्षिणि ! तावत् पश्चान्मार्गे दृष्टिपातः क्रियताम् । एतया सकाननया वा भूम्या विदूरीभवतः समुद्रात् निष्पत्यत इव ।

चन्द्रिका—हे करभोरु ! घनमसृणोरु ! मणिबन्धात् कनिष्ठाङ्गुलिपर्यन्तं करबहिर्भागः क्रमतो निम्न इति तस्य अरूपमानना विश्रुता । हे मृगप्रक्षिणि ! हे कुरङ्गदर्शिनि ! तावत् इति वाक्यालङ्कारे । पश्चान्मार्गे अतिक्रान्ते पथि । दृष्टिपात विलोकनम्, कुरुष्व विधेहि । एषा इयम्, सकानना विपिनयुक्ता, भूमिः धरा, विदूरीभवतः विप्रकृष्टं गच्छतः, समुद्रात् सागरात्, निष्पतति इव निस्सरतीव । दृश्यते इति शेषः ।

समासः—करभौ इव ऊरू यस्याः सा (बहु०) करभोरूः। तत्सम्बुद्धौ हे करभोरु! मृगवत् प्रेक्षते इति मृगप्रेक्षिणी, तत्सम्बुद्धौ मृगप्रेक्षिणि! काननैः सह वर्तते इति सकानना (सहपूर्वपदबहु०), दृष्टयोः पातः (ष०त०) दृष्टिपातः, तं दृष्टिपातम्। विशेषेण दूरः विदूरः, अविदूरः विदूरः भवन् विदूरीभवन्, तस्मात् विदूरीभवतः।

कोशः—'मणिबन्धादाकनिष्ठं करस्य करभो बहिः।' 'सक्थि क्लीबे पुमानूरुः' 'प्रतिच्यां चरमे पश्चात्' 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः।' 'मृगे कुरङ्गवातायुहरिणजिनयोनयः।' 'दृग्दृष्टी', 'स्याद् दूरं विप्रकृष्टकम्' 'समुद्रोऽब्धिरकूपारः' 'गहनं काननं वनम्' भूर्भूमिरचला' इत्यमरः।

भावार्थः—हे रम्भोरु! हे हरिणाक्षि! गते मार्गे दृष्टिं पातय। एषा सवना भूः शनैः शनैः दूरतां गच्छतः जलधेरुदरात् निर्गच्छतीव दृश्यते—पश्य।

हिन्दीश्लोकार्थः—हे मृगनयने! पीछे की ओर थोड़ा देखो तो सही, जंगलों सहित यह भूमि दूर होने वाले समुद्र से निकलती हुई सी दीख रही है ॥१८॥

क्वचित्पथा सञ्चरते सुराणां क्वचिद्घनानां पततां क्वचिच्च।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥१९॥

सञ्जीविनी—क्वचिदिति। हे देवि! विमानं पुष्पकं मे मनसोऽभिलाषो यथाविधस्तथा प्रवर्तते पश्य, क्वचित्सुराणां पथा मार्गेण सञ्चरते। क्वचिद् घनानां क्वचित्पततां पक्षिणां च पथा सञ्चरते। "समस्तृतीयायुक्तात्" इति सम्पूर्वाच्चरतेरात्मनेपदम्।

अन्वयः—विमानं मे मनसः अभिलाषः यथाविधः तथा प्रवर्तते। पश्य, क्वचित् सुराणां पथा सञ्चरते, क्वचिद् घनानां क्वचिच्च पतताम्।

वाच्य०—विमानेन मे मनसोऽभिलाषेण यथाविधेन भूयते तथा प्रवर्त्यते दृश्यताम्। क्वचित् सुराणां पथा, क्वचिच्च पततां पथा सञ्चर्यते।

चन्द्रिका—विमानं पुष्पकनामकं व्योमयानम्, मे मम, मनसः चित्तस्य, अभिलाषः, मनोरथः, यथाविधः यादृक्प्रकारकः, तथा तेन प्रकारेण, प्रवर्तते चलति। पश्य विलोकय। क्वचित्, कदाचित्, सुराणां देवानाम्, पथा मार्गेण सञ्चरते चलति। क्वचित् जातुचन, घनानां मेघानाम्, क्वचिच्च कदाचित्तु, पततां विहगानाम्, 'पथा सञ्चरते इत्यनुषञ्जनीयम्।

समासः—यथा विधा यस्य सः यथाविधः (बहु०)।

कोशः—'अयनं वर्त्ममार्गाध्वपन्थानः' 'त्रिदशा विबुधाः सुराः' 'घनो मेघे मूर्तगुणे त्रिषु मूर्ते निरन्तरे।' 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः।' 'विधा विधौ प्रकारे च' 'ववा यथा तथेवैवम्' 'स्वान्तं हृन्मानसं मनः' 'मनोरथः, कामोऽभिलाषस्तर्षश्च' 'व्योमयानं विमानोऽस्त्री' इत्यमरः।

भावार्थः—विमानमिदं मम इच्छानुसारेण चलति पश्य, कदाचिदिदं उच्चतममार्गेण, क्वचिच्च ततोऽधो मेघमार्गेण, जातुचन ततोऽपि निम्नमार्गेण पक्षिसञ्चरणयोग्येन चलति । अहमेवं तव विनोदार्थमेव अभिलषामीति भावः ।

हिन्दीश्लोकार्थः—यह विमान मेरे मन की इच्छा जिस प्रकार की होती है वैसे ही चलता है, देखो—कभी देवमार्ग से, कभी मेघमार्ग से, कभी तो पक्षियों के मार्ग से चलता है ॥ १९ ॥

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते ॥२०॥

सञ्जीविनी—असाविति । महेन्द्रद्विपदानगन्धिरैरावतमदगन्धिः त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेनोत्तरपदसमासः । तस्या वियद्गङ्गाया वीचीनां विमर्देन सम्पर्केण शीतोऽसावाकाशवायुर्दिनयौवनोत्थान्मध्याह्नसम्भवांस्ते मुखे स्वेदलवानाचामति हरति । अनेन सुरपथसंचारो दर्शितः ।

अन्वयः—महेन्द्रद्विपदानगन्धिः त्रिमार्गगावीचिविमर्दशीतः असौ आकाशवायुः ते मुखे दिनयौवनोत्थान् स्वेदलवान् आचामति ।

वाच्य०—महेन्द्रद्विपदानगन्धिना त्रिमार्गगावीचिविमर्दशीतेन अमुना आकाशवायुना, ते मुखे दिनयौवनोत्थाः स्वेदलवाः आचम्यन्ते ।

चन्द्रिका—महेन्द्रद्विपस्य ऐरावतस्य, दानगन्धिः मदसौरभवान् त्रिमार्गगत्याः त्रिपथगायाः, भागीरथ्याः, वीचिविमर्देन तरङ्गसंघर्षेण, शीतः शीतलः, असौ एषः, आकाशवायुः गगनपवन, ते तव मुखे वदने, दिनयौवनोत्थान् मध्यदिवसजातान्, स्वेदलवान् घर्मबिन्दून्, आचामति पिबति, अपनयति, शोषयति ।

समासः—महांश्चासौ इन्द्रश्च ( कर्म० ) महेन्द्रः, महेन्द्रस्य द्विपः ( ष० त० ) महेन्द्रद्विपः, महेन्द्रद्विपस्य दानं महेन्द्रद्विपदानम्, महेन्द्रद्विपदानस्य गन्ध एव गन्धः यस्य ( बहु० ) सः महेन्द्रद्विपदानगन्धिः । त्रिभिर्मार्गैः गच्छतीति त्रिमार्गगा । त्रिमार्गगाया वीचयः ( ष० त० ) त्रिमार्गगावीचयः, त्रिमार्गगावीचीनां मर्दः त्रिमार्गगावीचिविमर्दः ( ष० त० ) त्रिमार्गगावीचिविमर्देन शीतः त्रिमार्गगावीचिविमर्दशीतः ( तृ० त० ) । आकाशस्य वायुः ( ष० त० ) आकाशवायुः । दिनस्य यौवनं ( ष० त० ) दिनयौवनम्, दिनयौवनाद् उत्तिष्ठन्तीति दिनयौवनोत्थाः, तान् दिनयौवनोत्थान् । स्वेदस्य लवाः स्वेदलवाः, तान् स्वेदलवान् ।

कोशः—'द्विरदोऽनेकपो द्विपः' 'मदो दानम्' ( गन्धो गन्धक आमोदे लेशसम्बन्धगर्वयोः ।' इति विश्वः । ) 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' 'तुषारः शीतलः शीतः' 'पुंस्याकाशविहायसी' 'श्वसनः स्पर्शनो वायुः' 'घस्रो

दिनाहनी वा तु' 'तारुण्यं यौवनं समे' 'घर्मो निदाघः स्वेदः स्यात्' 'लवलेश-कणाणवः' इत्यमराः ।

भावार्थः—ऐरावतस्य मदगन्धेन युक्तः मन्दाकिनीतरङ्गसम्बन्धात् शीतल-श्चायं गगनमारुतः त्वन्मुखगतान् मध्याह्नसमयसमुत्पन्नान् स्वेदकणान् अपाकरोति । शैत्यं मान्द्यं सौरभञ्चेति गुणत्रयं पवनेऽपेक्षितम् । तत्र गुणद्वयं कण्ठत उक्तम्, तृतीयञ्चाक्षिपतीति वायुरयं वायुपुत्र इव तव सेवालग्न इति कल्पयन्ति केचिन्मनीषिणः ।

हिन्दीश्लोकार्थः—ऐरावत के मद की गन्ध से युक्त और आकाशगंगा की लहरों के संस्पर्श से ठंडा यह गगन पवन तुम्हारे मुख की, मध्याह्न की गर्मी से उत्पन्न पसीने की बूंदों को पी रहा है अर्थात् हटा रहा है ॥ २० ॥

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥२१॥

सञ्जीविनी–करेणेति । हे चण्डि कोपने ! 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । कुतूहलिन्या विनोदार्थिन्या त्वया कर्त्र्या वातायने गवाक्षे लम्बितेनावस्रंसितेन करेण स्पृष्ट उद्भिन्नविद्युद्वलयो घनस्ते द्वितीयमाभरणं वलयमामुञ्चतीव । अर्पयतीव चण्डीत्यनेन कोपनशीलत्वाद्भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते ।

अन्वयः—हे चण्डि ! कुतूहलिन्या त्वया वातायनलम्बितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः ते द्वितीयम् आभरणम आमुञ्चतीव ।

वाच्य०—हे चण्डि ! कुतूहलिन्या त्वया वातायनलम्बितेन करेण स्पृष्टेन उद्भिन्नविद्युद्वलयेन घनेन ( कर्त्रा ) ते द्वितीयम् आभरणम् आमुच्यत इव ।

चन्द्रिका—हे चण्डि ! परमक्रोधने ! हेतुगर्भमिदमामन्त्रणम् । कुतूहलिन्या कौतुकवत्या, त्वया, वातायने पवनगतागतमार्गे, गवाक्षे, 'वातायनं गवाक्षः' इत्यमरः । लम्बितेन बहिरवतारितेन, करेण पाणिना सृष्टः कृतस्पर्शः, उद्भिन्नः स्फुटितः, विद्युदेव सौदामिन्येव वलयः कङ्कणः यस्यैवम्भूतः घनः मेघः, ते तव, द्वितीयम् आभरणं कटकम्, वर्तुलविद्युच्चमत्कृतिरूपम् । आमुञ्चतीव परिधापय-तीव । क्षणकालमेवेदं तस्य साहसम्, यदेव त्वां कुपितामलक्षयत् मेघः तदैवापसृत-वानिति ध्वननाय चण्डीति सम्बोधनम् । विद्युद्वलयेति रूपणात् रूपकालंकारः । स चोत्प्रेक्षालंकारेण संसृष्ट इति दिक् । आमुञ्चतीवेति क्रियोत्प्रेक्षा ।

समासः—कुतूहलम् अस्या अस्तीति कुतूहलिनी ( मत्वर्थी० ) तया कुतू-हलिन्या । वातस्यायनं वातायनम्, वातायने लम्बितः वातायनलम्बितः (स०त०), तेन वातायनलम्बितेन । विद्युदेव वलयः ( अवधारणापूर्व० कर्म० ) विद्युद्वलयः उद्भिन्नः विद्युद्वलयः येन सः ( बहु० ) उद्भिन्नविद्युद्वलयः ।

कोशः—'कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम् ।' 'वातायनं गवाक्षोऽथ'

'बलिहस्तांशवः कराः' 'तडित्सौदामिनी विद्युत्' 'दारिते भिन्नभेदितौ' 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' 'चण्डस्त्वत्यन्तकोपनः' 'आमुक्तः प्रतिमुक्तश्च विनद्धश्चापिनद्धवत् ।' इत्यमरः ।

भावार्थः—अयि क्रोधने ! ( यतः श्रीरामचन्द्रः नीलाम्बुदश्यामलः, विद्युदन्वितं घनं विलोक्य सीताया अयं भ्रम उत्पन्नः यत् 'श्रीरामचन्द्रः अपरललनया समन्वितः किम्' इति । अतस्तस्याः क्रोधोन्मेषो जातः—इति ईदृशं सम्बोधनम्—इति कापि प्राचीना टीका ) । कुतूहलाकुलत्वं विमानस्य वातायने करमवतार्य तत्र लम्बमानं घनं यदा स्पृष्टवती तदैव विद्युच्चमत्कारं विलोक्य मेघस्त्वत्करे सौवर्णकङ्कणं पर्यधापयदिवेति उत्प्रेक्षितं कविनिवद्धवक्त्रा श्रीरामेण ।

हिन्दीश्लोकार्थः—हे क्रोध करनेवाली सीते ! तुमने विनोदार्थ खिड़की से हाथ लटकाकर जब मेघ को छूआ तब विजली चमकाकर मानो मेघ तुम्हारे हाथ में दूसरा आभरण ( कंकण ) पहना रहा है । विजली का रंग सुवर्ण जैसा है, अतः कवि ने ऐसी उत्प्रेक्षा अपने पात्र श्रीरामचन्द्र के मुख से कराई है । चण्डि ! इस संवोधन से तत्क्षण ही मेघ डरकर भागता है—यह द्योतित हुआ ॥ २१ ॥

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥२२॥

सञ्जीविनी—अमीति । अमी चीरभृतस्तापसा जनस्थानमपोढविघ्नमपास्तविघ्नं मत्वा ज्ञात्वा समारब्धा नवा उटजाः पर्णशाला येषु तानि । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । चिरोज्झितानि, राक्षसभयादित्यर्थः । आश्रममण्डलान्याश्रमविभागान् यथास्वं स्वं स्वमनतिक्रम्याध्यासतेऽधितिष्ठन्ति ।

अन्वयः—अमी चीरभृतः जनस्थानम् अपोढविघ्नं मत्वा समारब्धनवोटजानि चिरोज्झितानि आश्रममण्डलानि यथास्वम् अध्यासते ।

वाच्य०—अमीभिः चीरभृद्भिः जनस्थानम् अपोढविघ्नं मत्वा समारब्धनवोटजानि चिरोज्झिता-आश्रममण्डलानि यथास्वम् अध्यास्यन्ते ।

चन्द्रिका—अमी एते, चीरभृतः वल्कलधारिणः तपस्विनः, जनस्थानं दण्डकारण्यैकभागम् अपोढा अपाकृता विघ्ना राक्षसकृतान्तराया यस्य तत् तादृशम्, मत्वा विदित्वा, समारब्धानि समुपक्रान्तानि नवोटजानि नवीनपर्णशालाः येषु तानि तथोक्तानि आश्रममण्डलानि धर्मारण्यस्थानानि, यथास्वं पूर्वं यदात्मीयमासीत् तदनतिक्रम्येति । क्रियाविशेषणमेतत् । अध्यासते निवसन्ति । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य आश्रममण्डलस्य कर्मता । ततश्च 'कर्मणि द्वितीया' इति द्वितीया ।

समासः—चीराणि बिभ्रतीति चीरभृतः । अपोढा विघ्ना यस्य ( बहु० ) तत् अपोढविघ्नम्, तत् पुनस्तदेव । नवानि च तानि उटजानि च नवोटजानि

( कर्म० ) समारब्धानि नवोटजानि येषु ( बहु० ) तानि समारब्धनवोटजानि, तानि पुनस्तद्वत् । चिरम् उज्झितानि चिरोज्झितानि, तानि । आश्रमाणां मण्डलानि आश्रममण्डलानि, । तानि पुनस्तदेव । स्वम् अनतिक्रम्येति यथास्वम् ।

कोशः—'विघ्नोऽन्तरायः प्रत्यूहः' 'नवीनो नूतनो नवः' 'पर्णशालोटजोऽस्त्रियाम्' 'आश्रमोऽस्त्री' 'मण्डलं त्रिषु' 'यथास्वन्तु यथायथम्' इत्यमरः । 'चीरन्तु मुनिवासः स्यात्' इति शाश्वतः ।

भावार्थः—इमे मुनयः राक्षसोपद्रवेण परित्यक्तं जनस्थानं साम्प्रतं मया निहतराक्षसं विचार्य अत्र नूतनां पर्णशालां तत्रैव–यत्र पूर्वं स्वकीया पर्णशाला आसीत् रचयन्तो दृश्यन्ते । पश्यैतानीति भावः ।

हिन्दीश्लोकार्थः—ये वल्कलधारी तपस्वी लोग, जनस्थान को विघ्नरहित समझकर, नयी-नयी पर्णशाला, पहले जहाँ अपनी पर्णशाला रही वहीं, बनाकर रह रहे हैं । पहले तो राक्षसों के मारे जनस्थान में रहा नहीं जा सकता था, अब तो उन राक्षसों का मेरे द्वारा तेरे लिए वध कर दिया गया है ॥ २२ ॥

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ २३ ॥

सञ्जीविनी—सैषेति । सा पूर्वानुभूता स्थल्येषा, दृश्यत इत्यर्थः । अत्र स्थल्यां त्वां विचिन्वताऽन्विष्यता मया । त्वच्चरणारविन्देन यो विश्लेषो वियोगस्तेन यद् दुःखं तस्मादिव बद्धमौनं निःशब्दम् उर्व्यां भ्रष्टमेकं नूपुरं मञ्जीरः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । अदृश्यत दृष्टम् । हेतूत्प्रेक्षा ।

अन्वयः—सा एषा स्थली, यत्र त्वां विचिन्वता मया उर्व्यां भ्रष्टम् एकं नूपुरं त्वच्चरणारविन्दविश्लेषादुःखात् बद्धमौनम् इव अदृश्यत ।

वाच्य०—सा एषा स्थली, यत्र त्वां विचिन्वन् अहं उर्व्यां भ्रष्टम् एकं नूपुरं त्वच्चरणारविन्दविश्लेषदुःखात् बद्धमौनम् इवाहमपश्यम् । ( कर्तृ० )

चन्द्रिका—सा एषेति पूर्वानुभूता संप्रति दृश्यमाना च भूः प्रत्यभिज्ञायते । यत्र स्थल्याम्, त्वां त्वा, विचिन्वता मार्गमाणेन, गवेषयता, मया, उर्व्यां धरायाम्, भ्रष्टं पतितम्, एकं नूपुरं मञ्जीरम्, त्वच्चरणारविन्देन तव पद्मतुल्यपादेन, यः विश्लेषः विरहः, तेन यद् दुःखं पीडा, तस्मादिव । 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । यद्वा त्वच्चरणारविन्दविश्लेष एव दुःखं तस्मादिव तादृशदुःखाद्धेतोः बद्धमौनम् इव धृताभाषणं यथा अदृश्यत अलक्ष्यत । रावणेन प्रसभम् अपह्रियमाणा सीता श्रीरामस्य 'अनेनैव मार्गेण सीता नीता' इति परिज्ञानार्थं पादात् नूपुरं पातयामास, इति रामायणे श्रूयते । उत्प्रेक्षालंकारः, तत्र नूपुरे जडतया स्वाभाविकस्य मौनस्य विश्लेषदुःखजन्मत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा. विश्लेषस्य सिद्धत्वात् सिद्धहेतूत्प्रेक्षेति दिक् । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाऽद्यात्र सिद्धासिद्धास्पदे परे ॥' इति कुवलयानन्दे तल्लक्षणम् ।

**समासः**— चरणम् अरविन्दम् इव ( उपमानोत्तरपदकर्म० ) चरणारविन्दम् । तव चरणारविन्दे ( ष०त० ) त्वच्चरणारविन्दम् । त्वच्चरणारविन्दात् विश्लेषः ( पं०त० ) त्वच्चरणारविन्दविश्लेषः, त्वच्चरणारविन्दविश्लेषाद् दुःखं ( पं०त० ) यद्वा विश्लेष एव दुःखं ( कर्म० ) त्वच्चरणारविन्दविश्लेषदुःखम्, तस्मात् त्वच्चरणारविन्दविश्लेषदुःखात् । बद्धं मौनं येन तत् ( बहु० ) बद्धमौनम् ।

**कोशः**—'ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ।' 'स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्' 'मञ्जीरो नूपुरोऽस्त्रियाम्' 'वसुधोर्वी वसुन्धरा ।' 'पदंघ्रिश्चरणोऽस्त्रियाम्' 'अरविन्दं महोत्पलम्' 'पीडा बाधा व्यथा दुःखम्' 'अथ मौनमभाषणम्' इत्यमरः ।

**भावार्थः**—इदं तदेव स्थानं विद्यते, यत्र त्वां रावणापहृतां मार्गमाणः अहं तव पादाद् गलितम् एकं नूपुरम् अपश्यम्, तत्पादाभरणं नूनं त्वत्पादपद्मवियोगाद् दुःखितं मत एव धृतमौनञ्चासीत् ।

**हिन्दीश्लोकार्थः**—यह वही स्थल है, जहाँ तुम्हें खोजनेवाले मुझसे भूमि पर पड़ा हुआ तुम्हारा एक नूपुर ( पायजेब ) देखा गया था, जो मानो तुम्हारे पादारविन्द के वियोग के दुःख से मौन धारण किया हुआ पड़ा है ॥ २३ ॥

**त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे ।**
**अदर्शयन् वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ २४ ॥**

**सञ्जीविनी**—त्वमिति । हे भीरु भयशीले ! "ऊङुतः" इत्यूङ्, ततो नदीत्वात्सम्बुद्धौ ह्रस्वः । त्वं रक्षसा रावणेन यतो येन मार्गेण । सार्वविभक्तिकस्तसिः । अपनीताऽपहृता तं मार्गं वागिन्द्रियाभावाद्वक्तुमशक्नुवत्य एता लता वीरुध आवर्जिता नमिताः पल्लवाः पाणिस्थानीया याभिस्ताभिः शाखाभिः कृपया मेऽदर्शयन् । हस्तचेष्टया सूचयन्नित्यर्थः । 'शाखा वृक्षान्तरे भुजे' इति विश्वः । लताऽऽदीनामपि ज्ञानमस्त्येव, तदुक्तं मनुना—"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति ।

**अन्वयः**—हे भीरु ! त्वं रक्षसा यतः अपनीता, तं मार्गं वक्तुमशक्नुवत्यः एताः लताः आवर्जितपल्लवाभिः शाखाभिः कृपया मे अदर्शयन् ।

**वाच्य०**—हे भीरु ! त्वां रक्षः यतः अपनीतवान् स मार्गः, वक्तुमशक्नुवतीभिः एताभिः लताभिः आवर्जितपल्लवाभिः शाखाभिः कृपया मे अदर्शि । ( कर्मवा० )

**चन्द्रिका**—हे भीरु ! अयि भीलुके कातरे ! त्वं रक्षसा रात्रिञ्चरेण रावणेन, यतः येन पथा, अपनीता पर्णशालातः अपसारिता, तं मार्गं तं पन्थानम्, वक्तुं कथयितुम्, वाण्या प्रकाशयितुम्, अशक्नुवत्यः अक्षमाः, अपारयन्त्यः, एता पुरो दृश्यमानाः, लताः वल्ल्यः, 'वल्ली तु व्रततिर्लता' इत्यमरः । आवर्जिताः आनमिताः, प्रह्वीकृता, पल्लवाः किसलयाः याभिस्तथोक्ताभिः, शाखाभिः विटपैः, अङ्गुलि-

सदृशाभिः, कृपया दयया, मे मह्यम्, अदर्शयन् दर्शितवत्यः। सदया इमास्ते सख्यः। एताः विलोकयेत्यर्थः।

समासः—न शक्नुवत्यः अशक्नुवत्यः (नञ्तत्पु०)। आवर्जिताः पल्लवाः याभिः ताः आवर्जितपल्लवाः, ताभिः आवर्जितपल्लवाभिः (बहु०)।

कोशः—'रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः। यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी॥' 'अधीरे कातरस्त्रस्ते भीरुभीलुकभीरुकाः।' 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः।' 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः।' 'वल्ली तु व्रततिर्लता' 'समे शाखालते' 'पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम्।' इत्यमराः।

भावार्थः—यदहं स्मारयामि तेन तव भीतिर्मा भूत्, इदमस्ति अतीतं वृत्तम्। यदा रावणस्त्वाम् अपहृत्य नीतवान् तं मार्गं मानववत् वक्तुमसमर्था एता लता अन्तःसंज्ञचेतनत्वात् दयार्द्राः येन मार्गेण निजकिसलयान् कम्पयन्त्यः मे दर्शयामासुः।

हिन्दीश्लोकार्थः—हे भीरु! तुम रावण राक्षस से हरकर जिस मार्ग से ले जाई गई, उस मार्ग को मुख से बताने में असमर्थ, ये लताएँ झुके हुए पल्लवों वाली शाखाओं से, कृपा पूर्वक, मुझे दरशाती थीं॥ २४॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि॥ २५॥

सञ्जीविनी—मृग्य इति। दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षा निःस्पृहा मृग्यो मृगाङ्गनाश्चोत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः प्रवर्तयन्त्यः सत्यस्तवागतिज्ञं गत्यनभिज्ञं मां समबोधयन्, दृष्टिचेष्टया त्वद्गतिमबोधयन्नित्यर्थः।

अन्वयः—दर्भाङ्कुरनिर्व्यपेक्षाः मृग्यः उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः तव अगतिज्ञं मां समबोधयन्।

वाच्य०—दर्भाङ्कुरनिर्व्यपेक्षाभिः मृगीभिः उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्तीभिः तव अगतिज्ञः अहं समबोध्ये। (कर्म०)

चन्द्रिका—दर्भाङ्कुरेषु कुशप्ररोहेषु स्वखाद्येषु, निर्व्यपेक्षाः निरभिलाषाः, मृग्यः हरिण्यः, उत्पक्ष्मराजीनि उद्गतनेत्ररोमपङ्क्तीनि, विलोचनानि नयनानि, दक्षिणस्याम् अवाच्याम्, याम्यायाम्, दिशि हरिति व्यापारयन्त्यः प्रेरयन्त्यः। दक्षिणदिशाभिमुखं पक्ष्मणी उद्गमय्य पश्यन्त्यः, इत्यर्थः। तव ते अगतिज्ञं गमनज्ञानहीनम्, मां मा, समबोधयन् ज्ञापयामासुः।

समासः—दर्भाणामङ्कुराः दर्भाङ्कुराः (ष०त०), निर्गता व्यपेक्षा याभ्यः ताः निर्व्यपेक्षाः (बहु०), दर्भाङ्कुरेषु निर्व्यपेक्षाः (स०त०) दर्भाङ्कुरनिर्व्यपेक्षाः।

गतिं जानाति इति गतिज्ञः, न गतिज्ञः अगतिज्ञः ( नञ्त० ), तम् अगतिज्ञम् । पक्ष्मणां राजयः पक्ष्मराजयः ( ष०त० ), उद्गताः पक्ष्मराजयः येषां ( बहु० ) तानि उत्पक्ष्मराजीनि, तानि पुनस्तद्वत् । मृगाणां स्त्रियः मृग्यः ।

कोशः —'मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।' 'अस्त्री कुशं कुथो दर्भः पवित्रम्' 'अङ्कुरोऽभिनवोद्भिदि ।' 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।' 'पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यं शेप्यणीयसि ।' वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।' 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।' इत्यमरः ।

भावार्थः—कोमलकुशाङ्कुरचर्वणं परित्यज्य हरिणाङ्गनाः खेदयोतकैः उद्गत-नेत्रलोमावलिभिः नयनैः दक्षिणां दिशं मुहुः पश्यन्त्यः त्वामन्वेषयन्तं मां 'दक्षिणस्यां दिशि त्वं नीता' इति समसूचयन् ।

हिन्दीश्लोकार्थः—कुशों के अंकुरों का खाना परित्याग कर मृगाङ्गनाएँ आँखों की बरौनी ऊपर उठाये हुए नयनों से दक्षिण दिशा की ओर देखती हुई 'तुम किस मार्ग से गईं' न जाननेवाले मुझको समझाती थीं ॥ २५ ॥

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६ ॥

सञ्जीविनी—एतदिति । माल्यवतो नाम गिरेरम्बरलेख्यभ्रङ्कषं शृङ्गं शिखरमेतत्पुरस्तादग्रे आविर्भवति यत्र शृङ्गे घनैर्मेघैर्नवं पयो मया त्वद्विप्रयोगेण यदश्रु तच्च समं युगपद्विसृष्टं मुक्तम् । मेघदर्शनाद्वर्षतुल्यमश्रु विमुक्तमिति भावः ।

अन्वयः—माल्यवतः गिरेः अम्बरलेखि शृङ्गं एतत् पुरस्तात् आविर्भवति, यत्र घनैः नवं पयः मया च त्वद्विप्रयोगाश्रु समं 'यथातथा' विसृष्टम् ।

वाच्य०—माल्यवतः गिरेः अम्बरलेखिना शृङ्गेण एतेन पुरस्तादाविर्भूयते । यत्र घनाः नवं पयः अहं च त्वद्विप्रयोगाश्रु समं 'यथातथा' विसृष्टवन्तः ।

चन्द्रिका—माल्यवतः 'माल्यवान्' इति नामधारिणः, गिरेः अद्रेः अम्बरलेखि आकाशस्पर्शि, शृङ्गं शिखरम्, एतत् अङ्गुलीनिर्दिश्यमानं समीपतरवर्ति, पुरस्तात् सम्मुखे, आविर्भवति प्रादुर्भवति, 'प्राकाश्ये प्रादुराविः स्यात्' समक्षं दृश्यते इत्यर्थः। यत्र माल्यवच्छिखरे, घनैः जलदैः, नवं नूतनम्, पयः उदकम्, मया च मयाऽपि, त्वद्विप्रयोगाश्रु तव विरहजातं बाष्पम्, समम् एककालं यथा भवतीति क्रिया-विशेषणमेतत्, विसृष्टं विमुक्तम् । सहोक्तिरलंकारः ।

समासः—अम्बरं लिखतीति अम्बरलेखि । तव विप्रयोगः त्वद्विप्रयोगः ( ष०त० ) । त्वद्विप्रयोगेण अश्रु ( तृ०त० ) त्वद्विप्रयोगाश्रु ।

कोशः—'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।' 'हिमवान्निषधो विन्ध्यो माल्यवान् परियात्रकः' 'प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ।' 'अम्बरं

व्योम्नि वाससि' 'कूटोऽस्त्री शिखरं शृङ्गम्' 'नवीनो नूतनो नवः' 'पयः क्षीरं पयोऽम्बु च' 'चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ।' 'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।' इत्यमरः ।

भावार्थः—अयि सीते ! इतः पश्य, 'माल्यवान्' इति नामकस्य पर्वतस्य गगनचुम्बि शिखरमेतत् समक्षं प्रकाशते । यत्र वर्षाकाले मेघैः प्रथमं पयः विमुक्तम्, आकाशे मेघं विलोक्य त्वद्वियोगे तस्य उद्दीपकतया खिन्नेन मयाऽपि तदैव भूरि रुदितम्–इति भावः ।

हिन्दीश्लोकार्थ—'माल्यवान्' नामक पर्वत का गगनचुम्बि शिखर सामने प्रकाशित हो रहा है, जहाँपर मेघों ने वर्षा का प्रथम जल और मैंने तुम्हारे वियोग से आँसू, साथ ही बहाये थे ॥ २६ ॥

गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरं च ।
स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे ॥२७॥

सञ्जीविनी—गन्ध इति । यस्मिञ्छृङ्गे धाराभिर्वर्षधाराभिराहतानां पल्वलानां गन्धश्च अर्धोद्गतकेसरं कादम्बं नीपकुसुमं च स्निग्धाः मधुराः शिखिनां बर्हिणाम् 'शिखिनौ वह्निबर्हिणौ' इत्यमरः । केकाश्च त्वया विना मेऽसह्यानि बभूवुः । 'नपुंसकमनपुंसकेन—'' इति नपुंसकैकशेषः ।

अन्वयः—यस्मिन् धाराहतपल्वलानां गन्धः अर्धोद्गतकेसरं कादम्बञ्च स्निग्धाः शिखिनां केकाश्च त्वया विना मे असह्यानि बभूवुः ।

वाच्य०—यस्मिन् धाराहतपल्वलानां गन्धेन अर्धोद्गतकेसरेण कादम्बेन स्निग्धाभिः शिखिनां केकाभिश्च त्वया विना मे असह्यैः बभूवे । ( भाववा० )

चन्द्रिका—यस्मिन् शिखरे, धाराभिः जलस्रावैः, आहतपल्वलानां ताडिताल्पसरसाम् पल्वलं चाऽल्पसरः' इत्यमरः । गन्धः सौरभम् । अर्धोद्गतकेसरं स्वल्पविकसितकिञ्जल्कम्, कादम्बञ्च प्रियकप्रसूनञ्च, पुष्पमूलेषु बहुलम् । इति तद्धितलुक् । 'नीपप्रियककदम्बास्तु हलिप्रियः' इत्यमरः । स्निग्धाः मसृणाः, अकर्कशाः, शिखिनां मयूराणाम्, केकाश्च मयूरवाण्योऽपि, 'केका वाणी मयूरस्य' इत्यमरः । त्वया विना त्वद्वियुक्तस्य मे मम, असह्यानि सोढुमशक्यानि, वियोगे उद्दीपकत्वाद् दुःसहानि इत्यर्थः । बभूवुः जातानि । विकल्पेनैकशेषः, अक्लीबेन सहोक्तस्य क्लीबस्य शिष्यतायामेकवद्भावोऽपि वैकल्पिकः । नाऽत्र स कृत इति बभूवुरिति बहुवचनम् ।

समासः—धाराभिः आहतानि (तृ०त० ) धाराहतानि, धाराहतानि च तानि पल्वलानि च धाराहतपल्वलानि ( कर्म० ) । तेषां धाराहतपल्वलानाम् । अर्धं ( यथा तथा ) उद्गताः केसराः यस्मिन् तत् ( बहु० ) अर्धोद्गतकेसरम् । शिखा एषामस्तीति शिखिनः, तेषां शिखिनाम् ( मत्वर्थी० ) सोढुं शक्यानि सह्यानि, न सह्यानि असह्यानि ( नञ्त० ) ।

कोशः—'पल्वलं चाल्पसरः' 'नीपप्रियककदम्बास्तु हलिप्रियः ।' 'किञ्जल्कः केसरोऽस्त्रियाम्' 'चिक्कणं मसृणं स्निग्धम्' 'केका वाणी मयूरस्य' 'शिखावलः शिखी केकी मेघनादानुलास्यपि ।' इत्यमरः ।

भावार्थः—त्वद्विरहे मम इमे सर्वेऽप्युद्दीपकत्वाद् दुःसहा अभूवन् । माल्यवच्छिखरे कञ्चित्कालं निवसतो मे प्रथममेघजलधारापातेन शुष्काल्पजलाशयेभ्यः समुत्थितो गन्धः वर्षाकाले किञ्चिद् विकसितं कादम्वकुसुमम् मेघदर्शनोत्पन्ना मधुरा मयूरवाणी चेति भावः ।

हिन्दीश्लोकार्थः—जिस शिखर पर मेघजलधाराओं के अल्पजलाशयों ( पोखरा आदि ) पर गिरने से उठी हुई गन्ध, आधे निकले ( थोड़े से खिले ) केसरवाले नीपपुष्प, और मोरों के मधुर नाद-तुम्हारे वियोग में रहनेवाले मेरे लिए असहनीय हो गये थे ॥ २७ ॥

पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथञ्चिद्घनगर्जितानि ॥ २८ ॥

सञ्जीविनी—पूर्वेति । किञ्च हे भीरु ! यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तवोपगूढमुपगूहनं मेघस्तनितश्रवणेन भीरुस्वभावत्वात्त्वया, कृतमालिङ्गनमित्यर्थः । स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चिदतिवाहितानि स्मारकत्वेनोद्दीपकत्वात्, क्लेशेन गमितानीत्यर्थः ।

अन्वयः—भीरु यत्र पूर्वानुभूतं कम्पोत्तरं तव उपगूढं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चिद् अतिवाहितानि ।

वाच्य०—भीरु ! यत्र पूर्वानुभूतं कम्पोत्तरं तव उपगूढं स्मरन् अहं गुहाविसारीणि घनगर्जितानि कथञ्चिद् अतिवाहितवान् । ( कर्तृ० )

चन्द्रिका—हे भीरु ! अयि कातरे ! अतीतविरहस्मरणेनापि तव भीतिर्जायेतेतीदं सम्बोधनम् । यत्र माल्यवच्छिखरे, पूर्वानुभूतं संयुक्तदशायां साक्षाद् भुक्तम्, कम्पोत्तरं सात्त्विकभावरूपे कम्पबहुलम्, तव ते, उपगूढम् आलिङ्गनम्, स्मरता चिन्तयता, मया, गुहाविसारीणि कन्दरेषु प्रतिध्वनितानि, घनगर्जितानि मेघस्तनितानि, 'स्तनितं गर्जितं मेघनिर्घोषे' इत्यमरः । कथञ्चित् उत्तेजकत्वात् महता क्लेशेन, अतिवाहितानि सोढानि, अतिक्रान्तानि ।

समासः—पूर्वम् अनुभूतं पूर्वानुभूतम् ( कर्म० ), तत् । कम्पः उत्तरः यस्मिन् तत् ( बहु० ) कम्पोत्तरम् । गुहासु विसरन्तीति गुहाविसारीणि । घनानां गर्जितानि ( ष० त० ) घनगर्जितानि ।

कोशः—'पूर्वोऽन्यलिङ्गः प्रागाह' पुंबहुत्वेऽपि पूर्वजान् ।' 'वेपथुः । कम्पः' 'अधीरे कातरस्त्रस्ते भीरुभीलुकभीरुकाः ।' 'परिरम्भः परिष्वङ्गः सश्लेष उपगूह-

नम् ।' 'दरी तु कन्दरो वाणी देवखातबिले गुहा ।' 'प्रसृत्वरो विसृमरो विसारी च प्रसारिणि ।' 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ।' इत्यमरः ।

भावार्थः—यस्मिन् शिखरे आवयोः संयोगावस्थायां मयाऽनुभूतं तव सानुरागमालिङ्गनं स्मरन्नहं कन्दरेषु प्रतिध्वनितानि घनगर्जितानि उद्दीपकत्वेन विरहे कष्टकरत्वात् अतिकाठिन्येन अश्रौषम् इति भावः ।

हिन्दीश्लोकार्थः—हे भीरु ! जिस माल्यवान के शिखर पर, पहले ( तुम्हारे साथ रहते समय ) अनुभव किये गये, कम्प्रप्रधान तुम्हारे आलिङ्गन को स्मरण करनेवाले मुझ से गुफाओं में प्रतिध्वनित होनेवाले मेघों के गर्जन, अतिकठिनता से सुने गये ( सहे गये ) ।। २८ ।।

आसारसिक्तक्षितिबाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः ।
विडम्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः ।।२९।।

सञ्जीविनी—आसारेति । यत्र शृङ्गे विभिन्नकोशैर्विकसितकुड्मलैर्नवकन्दलैः कन्दलीपुष्पैररुणवर्णैरासारेण धारासम्पातेन । 'धारासम्पात आसारः' इत्यमरः । सिक्तायाः क्षितेर्बाष्पस्य धूमवर्णस्य योगाद्धेतोर्विडम्ब्यमानाऽनुक्रियमाणा ते विवाहधूमेनारुणा लोचनश्रीः सादृश्यात्स्मर्यमाणेति शेषः । मामक्षिणोदपीडयत् ।

अन्वयः—यत्र विभिन्नकोशैः नवकन्दलैः आसारसिक्तक्षितिबाष्पयोगात् विडम्ब्यमाना ते विवाहधूमारुणलोचनश्रीः माम् अक्षिणोत् ।

वाच्य०—यत्र विभिन्नकोशैः नवकन्दलैः आसारसिक्तक्षितिबाष्पयोगात् विडम्ब्यमानया ते विवाहधूमारुणलोचनश्रिया अहम् अक्षीये ( कर्म० ) ।

चन्द्रिका—यत्र यस्मिन् शृङ्गे, विभिन्नकोशैः प्रस्फुटितमुकुलैः, नवकन्दलैः नूतनकन्दलकुसुमैः. आसारसिक्तायाः वृष्टिधाराभिः क्लिन्नायाः, क्षितेः पृथिव्याः, बाष्पस्य ऊष्मण धूमवर्णस्य,योगात् सम्बन्धाद् हेतोः,विडम्ब्यमाना अनुस्त्रियमाणा, अनुह्रियमाणा, ते तव, विवाहधूमेन पाणिग्रहणहवनजातेन बाष्पेण ( धूमार्थकः ), अरुणा अव्यक्तरागा 'अव्यक्तरागस्त्वरुणः' या लोचनश्रीः नयनसुन्दरता, मां मा, अक्षिणोत् व्यथयामास । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् इति न्यायात् त्वल्लोचनसौन्दर्यस्मरणं विरहदशायां नितान्तपीडाकरमासीदिति भावः ।

समासः—आसारेण सिक्ता ( तृ० त० ) आसारसिक्ता, आसारसिक्ता चासौ क्षितिश्च (कर्म०) आसारसिक्तक्षितिः, आसारसिक्तक्षितेः बाष्पं (ष०त०) आसारसिक्तक्षितिबाष्पम्,...बाष्पस्य योगः ( ष० त० ) आसारसिक्तक्षितिबाष्पयोगः, तस्मात् आसारसिक्तक्षितिबाष्पयोगात् । विभिन्नाः कोशाः येषां तानि ( बहु० ) विभिन्नकोशानि । तैः विभिन्नकोशैः । नवानि च तानि कन्दलानि च ( कर्म० ) नवकन्दलानि, तैः नवकन्दलैः । विवाहस्य धूमः, ( ष० त० ) विवाहधूमः, विवाहधूमेन अरुणा (तृ०त०) विवाहधूमारुणा, लोचनयोः श्रीः (ष० त०) लोचनश्रीः, विवाहधूमारुणा चासौ लोचनश्रीश्च ( कर्म० ) विवाहधूमारुणलोचनश्रीः ।

कोशः—'धारासम्पात आसारः' 'क्षोणिर्ज्या काश्यपी क्षितिः' 'वाष्पमुष्णमाश्रु' 'योगः संनहनोपायस्थानसंगतियुक्तिषु ।' 'कोशोऽस्त्री कुड्मले खड्गविधानेऽर्थौघदिव्ययोः ।' 'विवाहोपयमौ समौ' इत्यमरः ।

भावार्थः—जलधारया प्रथमप्रथमं सिक्तायाः भुवः समुत्थितोष्मसंपर्कात् विकसितानि अरुणवर्णानि नूतनकन्दलकुसुमानि पश्यन् अहं विवाहमण्डपे होमधूमेनारुणां तव नयनशोभां स्मारं स्मारं विषादेन क्षीणोऽभवम् ।

हिन्दीश्लोकार्थः—धारारूप से सींची गई पृथिवी से उठी गर्मी के संबन्ध से विकसित नये कन्दल पुष्पों के सदृश विवाह के हवनधूम से लाल तुम्हारे नयनों की शोभा ने मुझे व्यथित कर दिया था ॥ २९ ॥

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥३०॥

सञ्जीविनी—उपान्तेति । उपान्तवानीरवनोपगूढानि पार्श्ववञ्जुलवनच्छन्नान्यालक्ष्य ईषद्दृश्याः पारिप्लवाश्चञ्चलाः सारसा येषु तान्यमूनि पम्पासलिलानि पम्पासरोजलानि दूरादवतीर्णा मे दृष्टिरत एव खेदात् पिबतीव, न विहातुमुत्सहत इत्यर्थः ।

अन्वयः—उपान्तवानीरवनोपगूढानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि दूरावतीर्णा मे दृष्टिः खेदात् पिबतीव ।

वाच्य०—उपान्तवानीरवनोपगूढानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि दूरावतीर्णया मे दृष्ट्या खेदात् पीयन्ते इव ( कर्म० ) ।

चन्द्रिका—उपान्ते परितः, वानीरवनोपगूढानि वञ्जुलकाननव्याप्तानि, आलक्ष्याः किञ्चिद् दृश्याः, पारिप्लवाः तरलाः, अस्थिराः, सारसाः लक्ष्मणनामकाः पक्षिणः येषु तानि एवम्भूतानि, अमूनि एतानि, पम्पासलिलानि पम्पाख्यसरोजलानि, दूरावतीर्णा विप्रकृष्टात् प्रविष्टा, मे मम, दृष्टिः नेत्रम्, खेदात् परिश्रमात्, पिबतीव आदरात् पश्यतीव । त्यक्तुं नेच्छतीति भावः ।

समासः—वानीराणां वनानि ( ष० त० ) वानीरवनानि, उपान्ते वानीरवनानि ( स० त० ) उपान्तवानीरवनानि, उपान्तवानीरवनैः उपगूढानि ( तृ० त० ) उपान्तवानीरवनोपगूढानि, तानि पुनस्तद्वत् । आलक्ष्याः पारिप्लवाः सारसाः येषु तानि ( त्रिपदबहु० ) आलक्ष्यपारिप्लवसारसानि, तानि पुनस्तद्वत् । दूराद् अवतीर्णा ( पं० त० ) दूरावतीर्णा । पम्पायाः सलिलानि ( ष० त० ) पम्पासलिलानि, तानि पुनस्तदेव ।

कोशः—'रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ।' 'गहनं काननं वनम्' 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।' 'पुष्कराह्वस्तु सारसः' 'याद् दूरं विप्रकृष्टकम्' 'सलिलं कमलं जलम्' 'दृग्दृष्टी' इत्यमरः ।

भावार्थः—परितो वञ्जुलवनावृतानि, चञ्चलाः सारसपक्षिणः यत्र किञ्चित्कालमेव अवस्थिता लक्ष्यन्ते, एवंविधानि पम्पासरोजलानि, दूरादेव कौतुकात् अधः समागतं मे नयनं, सस्पृहं सादरञ्च पश्यति—मम लोचनमितो नान्यत्र गन्तुमिच्छति। त्वद्वियोगावस्थायां त्वामन्विष्यन् सानुजोऽहं भ्रमन् तत्रागत्य कञ्चित्कालं वासमकरवमिति अत्र मे महती प्रीतिरिति भावः।

हिन्दीश्लोकार्थः—पास में चारों ओर बेंत के जंगलों से घिरे हुए तथा थोड़ा सा दीख पड़ रहे हैं चंचल सारसपक्षियां जिनमें ऐसे इन पम्पासरोवर के जलों पर दूर से उतरी हुई मेरी आँख थकावट के कारण, दूर से उतरने के श्रम के कारण मानों यहाँ से हटना नहीं चाहती ॥ ३० ॥

अत्राविमुक्तानि रथाङ्गनाम्नामन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्तिना ते मया प्रिये सस्पृहमीक्षितानि ॥३१॥

सञ्जीविनी—अत्रेति। अत्र पम्पासरस्यन्योन्यस्मै दत्तोत्पलकेसराण्यवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथुनानि ते तव दूरान्तरवर्तिना दूरदेशवर्तिना मया हे प्रिये! सस्पृहं साभिलाषमीक्षितानि। तदानीं त्वामस्मार्षमित्यर्थः।

अन्वयः—हे प्रिये! अत्र अन्योन्यदत्तोत्पलकेसराणि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि ते दूरान्तरवर्तिना मया सस्पृहम् ईक्षितानि।

वाच्य०—हे प्रिये! अत्र अन्योन्यदत्तोत्पलकेसराणि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि ते दूरान्तरवर्ती अहं सस्पृहम् ईक्षितवान् ( कर्तृ० )।

चन्द्रिका—अत्र पम्पासलिलेषु, अन्योन्यं परस्परं यथा तथेति क्रियाविशेषणम्, दत्तानि वितीर्णानि, उत्पलकेसराणि कुवलयकिञ्जल्कानि यैरेवम्भूतानि, अवियुक्तानि संयुक्तानि, रथाङ्गस्य चक्रस्य नाम अभिधानं येषां तादृशानां चक्रवाकपक्षिणामित्यर्थः, द्वन्द्वानि स्त्रीपुंसान्, ते तव, दूरान्तरे अधिकविप्रकृष्टे वर्तिना निवासिना, मया सस्पृहं साकाङ्क्षम्, ईक्षितानि विलोकितानि। संयुक्तपक्षिमिथुनानां सानुरागं व्यवहारं विलोक्य विरहाकुलोऽहं त्वां स्मृतवान् इत्यर्थः।

समासः—उत्पलानां केसराणि उत्पलकेसराणि ( ष० त० ), अन्योन्यं दत्तानि उत्पलकेसराणि यैस्तानि ( बहु० ) अन्योन्यदत्तोत्पलकेसराणि, तानि पुनस्तदेव। रथस्य अङ्गं ( ष० त० ) रथाङ्गं, रथाङ्गस्य नाम येषां ते रथाङ्गनामानः ( बहु० ), तेषां रथाङ्गनाम्नाम्। दूरञ्च तद् अन्तरञ्च दूरान्तरम् ( कर्म० ) दूरान्तरे वर्तते इति दूरान्तरवर्ती, तेन दूरान्तरवर्तिना। स्पृहया सह सस्पृहम् ( क्रियाविशेषणमेतत्। बहु० )।

कोशः—'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः।' 'आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च।' स्यादुत्पलं कुवलयम्' 'किञ्जल्कः केसरोऽस्त्रियाम्' 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' 'स्याद् दूरं विप्रकृष्टकम्' 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदता-

दर्थ्ये' 'दयितं वल्लभं प्रियम्' 'इच्छा काङ्क्षा स्पृहेहातृड् वाञ्छा लिप्सा मनोरथः।' इत्यमरः।

भावार्थः—हे प्रिये ! अस्मिन् पम्पासरसि चक्रवाकपक्षिणां मिथुनानि परस्परं सानुरागं कमलकेसरान् खादितुं ददति स्म तानि संयुक्तानि धान्यानि द्वन्द्वानि त्वद्वियुक्तोऽहं स्वस्य मन्दभाग्यतां स्मरन् साभिलाषं पश्यामि स्म। कदाचित् पुनरीदृशं सौभाग्यमावाभ्यामपि लभ्येत किमित्यौत्सुक्यमासीत्तदा ममेति भावः।

हिन्दीश्लोकार्थः—हे प्रिये ! यहाँ पर कमल के केसरों को परस्पर एक दूसरे को देते हुए संयुक्त दशा में रहने वाले चकवा-चकवी के जोड़ों को—तुम से अति दूर देश में वियोग-दुःख भोगता हुआ मैं बड़े चाव से देखता रहा। ( यह सुख कदाचित् हमें भी प्राप्त होगा क्या ? यही उत्सुकता थी मुझे। ) ॥ ३१ ॥

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम्।
त्वत्प्राप्तिबुद्धया परिलब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः ॥३२॥

सञ्जीविनी—इमामिति। किञ्च स्तनवदभिरामाभ्यां स्तवकाभ्यामभिनम्रां तन्वीमिमां तटाशोकस्य लतां शाखामतस्त्वत्प्राप्तिबुद्धया त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुमालिङ्गितुं कामो यस्य सोऽहं सौमित्रिणा लक्ष्मणेन साश्रुनिषिद्धः नेयं सीतेति निवारितः। परिरब्धुकाम इत्यत्र "तुं काममनसोरपि" इति वचनान्म-कारलोपः।

अन्वयः—स्तनाभिरामस्तवकाभिनम्रां तन्वीम् इमां तटाशोकलतां त्वत्प्राप्ति-बुद्धया परिरब्धुकामः साश्रुः अहं सौमित्रिणा निषिद्धः।

वाच्य०—स्तनाभिरामस्तवकाभिनम्रां तन्वीम् इमां तटाशोकलतां त्वत्प्राप्ति-बुद्धया परिरब्धकामं साश्रुं मां सौमित्रीं निषिद्धवान्। ( कर्तृ० )

चन्द्रिका—स्तनाभिरामैः पयोधरवत् सुन्दरैः, स्तबकैः पुष्पगुच्छैः, अभिनम्रां संनताम् तन्वीं कृशाङ्गीम्, इमां पुरोवर्तिनीम्, तटाशोकस्य तीरस्थवञ्जुलस्य, लतां व्रततिम्, त्वत्प्राप्तिबुद्धया त्वं लब्धेति धिया, परिरब्धुकामः आलिङ्गनेच्छुः, साश्रुः त्वमागतेति उद्गतबाष्पः, अहं, सौमित्रिणा अनुजेन लक्ष्मणेन, निषिद्धः भ्रातः ! इयं लतेति वारितः।

समासः—स्तनवत् अभिरामाः स्तनाभिरामाः ( कर्म० ), स्तनाभिरामाश्च ते स्तबकाश्च ( कर्म० ) स्तनाभिरामस्तबकाः, स्तनाभिरामस्तबकैः अभिनम्रा स्तनाभिरामस्तबकाभिनम्रा ( तृ० त० ), तां स्तनाभिरामस्तबकाभिनम्राम्। अशोकस्य लता ( ष० त० ) अशोकलता, तटस्य अशोकलता ( ष० त० ) तटाशोकलता, तां तटाशोकलताम्। तव प्राप्तिः ( ष० त० ) त्वत्प्राप्तिः, त्वत्प्राप्तेः बुद्धिः त्वत्प्राप्तिः इति बुद्धिर्वा (क०धा०, ष०त०) त्वत्प्राप्तिबुद्धिः, तया त्वत्प्राप्ति-बुद्धया। परिरब्धुं कामः यस्य सः ( बहु० ) परिरब्धुकामः। अश्रुणा सह वर्तते इति ( बहु० ) साश्रुः। सुमित्राया अपत्यं पुमान् सौमित्रिः।

कोशः—'कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु ।' 'वञ्जुलोऽशोके' 'स्तोकं दभ्रं कृशं तनु' ( स्त्रीत्वविवक्षायां ङीपि तन्वी ) 'स्तनौ कुचौ' 'स्याद् गुच्छकस्तु स्तवकः' 'रोदनं चास्रमश्रु च' इत्यमरः ।

भावार्थः—हे सीते ! रमणीयस्तनसुन्दरैः पुष्पगुच्छैः नतां कृशाम् इमां तीरवर्तिनीम् अशोकलतां 'त्वमेवेयम्' इति भ्रमेण ( 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति कामिसुलभेयं भ्रान्तिः ) आनन्दाश्रु मुञ्चन् आलिङ्गितुम् अहं बाहू प्रसारितवान् । तदा लक्ष्मणः 'अग्रज ! नेयम् आर्या वैदेही, अपितु अशोकलता' इति बोधयन् मां वारयामासेति भावः ।

हिन्दीश्लोकार्थः—स्तन जैसे रमणीय पुष्पगुच्छों से झुकी हुई कृशाङ्गी इस पम्पातीरवर्ती अशोकलता को तुम मिल गई इस बुद्धि से आलिंगन करना चाहनेवाले एवं आँसू (आनन्द से) बहाते हुए मुझको लक्ष्मण ने रोक दिया ॥ ३२ ॥

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम् ॥ ३३ ॥

सञ्जीविनी—अमूरिति । विमानस्यान्तरेष्ववकाशेषु लम्बन्ते यास्तासां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथशब्दभ्रमात्खमाकाशमुत्पतन्त्योऽमूर्गोदावरीसारसपङ्क्तयस्त्वां प्रत्युद्व्रजन्तीव ।

अन्वयः—विमानान्तरलम्बिनीनां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा खम् उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्तीव ।

वाच्य०—विमानान्तरलम्बिनीनां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा खम् उत्पतन्तीभिः अमूभिः गोदावरीसारसपङ्क्तिभिः त्वं प्रत्युद्व्रज्यसे इव ।

चन्द्रिका—विमानस्य व्योमयानस्य, पुष्पकस्य, अन्तरे मध्ये, लम्बिनीनां स्रसन्तीनाम् स्थितानामित्यर्थः । काञ्चनस्य सुवर्णस्य, किङ्किणीनां क्षुद्रघण्टिकानाम्, स्वनं नादम्, श्रुत्वा आकर्ण्य, खं गगनम्, उत्पतन्त्यः उड्डीयमानाः, अमूः इमाः, गोदावरीसारसपङ्क्तयः गोदावरीपुष्कराह्वपक्षिराजयः, त्वां पूर्वसहवासिनीं सखीम्, प्रत्युद्व्रजन्तीव आदरप्रकाशनाय प्रत्युद्गच्छन्तीव । इवोऽत्रोत्प्रेक्षायाम् ।

समासः—विमानस्य अन्तरं विमानान्तरम् ( ष०त० ) विमानान्तरे लम्बन्ते इति विमानान्तरलम्बिन्यः ( उपपदसमा० ), तासां विमानान्तरलम्बिनीनाम् । काञ्चनस्य किङ्किण्यः काञ्चनकिङ्किण्यः ( ष०त० ), तासां काञ्चनकिङ्किणीनाम् । सारसानां पङ्क्तयः ( ष०त० ) सारसपङ्क्तयः । गोदावर्याः सारसपङ्क्तयः ( ष०त० ), गोदावरीसारसपङ्क्तयः ।

कोशः—'व्योमयानं विमानोऽस्त्री' 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मनि च ॥' 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥' 'चामीकरं

जातरूपं महारजतकाञ्चने ।' 'किङ्किणी क्षुद्रघण्टिका' 'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ।' 'पुष्कराह्वस्तु सारसः' 'वीथ्यालिरावलिः पङ्क्तिः' इत्यमरः ।

भावार्थः—पुष्पकविमानमध्यबद्धानां शब्दायमानसुवर्णक्षुद्रघण्टिकानां रवं श्रुत्वा आकाशम् उड्डीयमानाः इमे गोदावरीजलविहारिणः सारसपक्षिणः तव स्वागतार्थमागच्छन्तीव दृश्यन्ते ।

हिन्दीश्लोकार्थः—पुष्पविमानके मध्य में लटकनेवाली सोने की घंटियों की ध्वनि सुनकर आकाशकी ओर उड़ती हुई गोदावरी नदी में रहनेवाले सारसों की कतारें तुम्हारी मानों अगवानी करने आ रही हैं ॥ ३३ ॥

एषा त्वया पेशलमध्ययाऽपि घटाम्बुसंवर्धितबालचूना ।
आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात्पञ्चवटी मनो मे ॥ ३४ ॥

सञ्जीविनी—एषेति । पेशलमध्ययाऽपि, भाराक्षमयाऽपीत्यर्थः । त्वया घटाम्बुभिः संवर्धिता बालचूता यस्याः सा, उन्मुखा अस्मदभिमुखास्त्वत्संवर्धिता एव कृष्णसारा यस्याः सा चिराद् दृष्टैषा पञ्चवटी मे मन आनन्दयत्याह्लादयति । पञ्चवटीशब्दः पूर्वमेव व्याख्यातः ।

अन्वयः—पेशलमध्ययाऽपि त्वया घटाम्बुसंवर्धितबालचूता उन्मुखकृष्णसारा चिरात् दृष्टा एषा पञ्चवटी मे मनः आनन्दयति ।

वाच्य०—पेशलमध्ययाऽपि त्वया घटाम्बुसंवर्द्धितबालचूतया उन्मुखकृष्णसारया चिराद् दृष्ट्या एतया पञ्चवट्या मे मनः आनन्द्यते ( कर्म० ) ।

चन्द्रिका—पेशलमध्ययाऽपि सुन्दरमध्यभागयाऽपि, अर्थात् तनुमध्ययाऽपि गुरुभारासहनयाऽपीति यावत् । त्वया घटाम्बुभिः कुम्भसलिलैः, संवर्द्धिताः पोषिताः, बालचूताः नवरसालवृक्षाः यस्याः सा तथोक्ता, उन्मुखाः त्वां द्रष्टुमुपरिवदनाः, कृष्णसाराः हरिणविशेषाः यस्याः सा एवम्भूता, चिराद् बहुकालानन्तरम्, दृष्टा अवलोकिता, एषा पुरोवर्तिनी, पञ्चवटी वटपञ्चकवती भूमिः, मे मम, मनः चित्तम्, आनन्दयति मोदयति ।

समास—पेशलं मध्यं यस्याः ( बहु० ) सा पेशलमध्या, तया पेशलमध्यया । घटस्य अम्बूनि घटाम्बूनि ( ष०त० ) बालाश्च ते चूताश्च ( कर्म० ) बालचूताः, घटाम्बुभिः संवर्धिताः बालचूताः यस्याः ( बहु० ) सा घटाम्बुसंवर्द्धितबालचूता । उद्गतं मुखं येषां ( बहु० ) ते उन्मुखाः, उन्मुखाः कृष्णसाराः यस्याः ( बहुव्रीहिगर्भो बहु० ) सा उन्मुखकृष्णसारा । पञ्चानां वटानां समाहारः पञ्चवटी ( द्विगु० ) ।

कोश—'चारौ दक्षे च पेशलः' 'मध्योऽस्त्री द्वौ परौ द्वयोः' 'कलशस्तु त्रिपु द्वयोः घटक-कुटनिपावस्त्री' 'नीरक्षीराम्बुशम्बरम्' 'आम्रश्चूतो रसालोऽसौ' 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।' 'स्वान्तं हृन्मानसं मनः ।' इत्यमरः ।

भावार्थः—कृशाङ्ग्यापि त्वया सदयास्नेहं कलशजलेन पोषिता नवा आम्रतरवः अत्र पञ्चवटीस्थाने विलसन्ति। पुष्पकविमानघोषमाकर्ण्य ऊर्ध्वमुखाः हरिणाः तव स्नेहदयादिकं स्मरन्तः समुत्सुकाः सन्त्यत्र। बहुकालानन्तरम् ईदृशीं पञ्चवटीं दृष्ट्वा मन्मनसः आनन्दो जायते इति भावः।

हिन्दीश्लोकार्थः—क्षीण मध्यभागवाली होने से भार न सहती हुई भी तुमने घड़ों से सींचकर जिस ( पंचवटी ) के छोटे-छोटे आम के वृक्षों को बड़ा किया और जहाँ के कृष्णसार मृग ऊपर मुख करके तुम्हें देख रहे हैं ऐसी बहुत समय के बाद देखी हुई यह पंचवटी मेरे मन को आनन्दित कर रही है ॥३४॥

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्ग-निषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः॥ ३५ ॥

सञ्जीविनी—अत्रेति। अत्र पञ्चवट्यां गोदा गोदावरी तस्याः समीपेऽनुगोदम् "अनुर्यत्समया" इत्यव्ययीभावः। मृगयाया निवृत्तस्तरङ्गवातेन विनीतखेदो रहो रहसि अत्यन्तसंयोगे द्वितीया। त्वदुत्सङ्गनिषण्णमूर्धा सन्नहं वानीरगृहेषु सुप्तः स्मरामि। वाक्यार्थः कर्म। सुप्त इति यत्तत्स्मरामीत्यर्थः।

अन्वयः—अत्र अनुगोदं मृगयानिवृत्तः तरङ्गवातेन विनीतखेदः रहः त्वदुत्सङ्गनिषण्णमूर्धा वानीरगृहेषु सुप्तः 'इति यत् तत्' स्मरामि।

वाच्य०—अत्रानुगोदं मृगयानिवृत्तः तरङ्गवातेन विनीतखेदः रहस्त्वदुत्सङ्ग-निषण्णमूर्धा वानीरगृहेषु सुप्त 'इति यत् तत्' मया स्मर्यते। ( कर्म० )

चन्द्रिका—अत्र पञ्चवटीभूमौ, अनुगोदं गोदावर्याः समीपे, गोदेति भीमसेनस्य भीमेतिवत् नामैकदेशग्रहणम्। मृगयानिवृत्तः आखेटात् प्रत्यागतः, तरङ्गवातेन ऊर्मिपवनेन, विनीतखेदः अपगतश्रमः, रहः एकान्ते, 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' त्वदुत्सङ्गे तवाङ्के, 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। निषण्णमूर्धा आसीनमस्तकः, सन् वानीरगृहेषु जलकुञ्जेषु, 'गृहाः पुंसि च भूम्न्येव' इति बहुवचनान्तगृहशब्दः, यद्वा अनेकवारमेवमनेककुञ्जेषु—इति बहुवचनविवक्षया गृहशब्दः क्लीब एवायम्। सुप्तः शयितः, इति यत् तत् इति वाक्यार्थः कर्म, स्मरामि चिन्तयामि। तान् मधुरान् क्षणान् गोदादर्शनेनोद्बुद्धसंस्कारः सन् चिन्तयामीत्यर्थः।

समासः—गोदायाः समीपे इत्यनुगोदम् ( अव्ययी० )। मृगयायाः निवृत्तः ( पं०त० ) मृगयानिवृत्तः। तरङ्गाणां वातः ( ष०त० ) तरङ्गवातः, तेन तरङ्गवातेन। विनीत खेदः यस्य सः ( बहु० ) विनीतखेदः। तव उत्सङ्गः त्वदुत्सङ्गः ( ष०त० ) त्वदुत्सङ्गे निषण्णः मूर्धा यस्य सः ( बहु० ) त्वदुत्सङ्गनिषण्णमूर्धा। वानीराणां गृहाणि वानीरगृहाणि, तेषु वानीरगृहेषु ( ष०त० )।

कोशः—'आखेटो मृगया स्त्रियाम्' 'भङ्गस्तरङ्ग ऊर्मिर्वा' 'नभस्वद्वातपवन-पवमानप्रभञ्जनाः।' 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु।' 'उत्तमाङ्गं शिरः

शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।' 'रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ।' 'गृहं गेहोदवसितं' इत्यमरः ।

भावार्थः—अत्र पञ्चवट्यां अस्मिन्निवाससमये आखेटात्परावृत्तः अहं गोदावरीवीचिसम्पर्के शीतलेन पवनेन अपाकृतश्रमः त्वदङ्के शिरो निधाय रहसि वञ्जुलनिकुञ्जेषु यद् बहुबारं सानन्दं सुप्तोऽभूवं तत् सम्प्रति स्मरामि । कियान्मधुरः स समय आसीत् हन्त !!

हिन्दीश्लोकार्थः—इस पञ्चवटी पर गोदावरी के पास शिकारसे लौटा हुआ मैं तरङ्गों के वायु से थकान हटाया गया जिसका—ऐसा होकर एकान्त में वंजुलकुञ्जों ( लतागृहों ) में तुम्हारी गोद में सिर रख कर जो सोता था उसे याद कर रहा हूँ ॥ ३५ ॥

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भः परिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६ ॥

सञ्जीविनी—भ्रूभेदेति । यो मुनिर्भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव नहुषं राजानं मघोनः पदादिन्द्रत्वात्प्रभ्रंशयाञ्चकार प्रभ्रंशयति स्म । आविलाम्भः परिशुद्धिहेतोः कलुषजलप्रसादहेतोस्तस्य मुनेरगस्त्यस्य । अगस्त्योदये शरदि जलं प्रसीदतीत्युक्तं प्राक् । भूमौ भवो भौमः स्थानपरिग्रह आश्रमोऽयं दृश्यत इति शेषः । भौम इत्यनेन दिव्योऽप्यस्तीत्युक्तम् । परिगृह्यते इति परिग्रहः, स्थानमेव परिग्रह इति विग्रहः ।

अन्वयः—यः भ्रूभेदमात्रेण नहुषं मघोनः पदात् प्रभ्रंशयां चकार, आविलाम्भः परिशुद्धिहेतोः मुनेः भौमः स्थानपरिग्रहः अयम् ( अस्ति ) ।

वाच्य०—येन भ्रूभेदमात्रेण नहुषः मघोनः पदात् प्रभ्रंशयाञ्चक्रे ( कर्म० ) । आविलम्भः परिशुद्धिहेतोः मुनेः भौमेन स्थानपरिग्रहेण अनेन ( भूयते ) ।

चन्द्रिका—यः अगस्त्यमुनिः, केवलेन भ्रूविलासेन, न तु अन्योपकरणेनेत्यर्थः । नहुषं तन्नामकराजम्, मघोनः इन्द्रस्य, पदात् स्थानात्, त्रैलोक्याधिपत्यादित्यर्थः । प्रभ्रंशयाञ्चकार प्रच्यावयामास, आविलाम्भसा कलुषजलानाम्, परिशुद्धिहेतोः विमलीकरणकारणस्य, मुनेः अगस्त्यस्य, भौमः पार्थिवः, स्थानपरिग्रहः धर्मभूमिः, निवासस्थानम्, अयम् एषः, दृश्यते इति शेषः ।

समासः—भ्रुवोः भेदः भ्रूभेदः ( ष०त० ) भ्रूभेद एव ( अस्वपदविग्रहत्वान्नित्यसमा० ) भ्रूभेदमात्रम्, तेन भ्रूभेदमात्रेण । आविलानि च तानि अम्भांसि च आविलाम्भांसि ( कर्म० ), आविलाम्भसां परिशुद्धिः आविलाम्भःपरिशुद्धिः ( ष०त० ) आविलाम्भःपरिशुद्धेः हेतुः ( ष०त० ) आविलाम्भःपरिशुद्धिहेतुः, तस्य आविलाम्भःपरिशुद्धिहेतोः । भूमौ भवः भौमः । परिगृह्यते इति परिग्रहः ( कर्मण्यप्रत्ययः ) स्थानमेव परिग्रहः स्थानपरिग्रहः ।

कोशः—'ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ' 'मात्रं कार्त्स्न्येऽवधारणे' 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ।' 'इन्द्रो मरुत्वान् मघवा' 'कलुषोऽनच्छ आविलः'

'अम्भोऽर्णस्तोयपानीयम्' 'हेतुर्ना कारणं बीजम्' 'पारिकाङ्क्षी वाचंयमो मुनिः' 'पत्नीपरिजनादानमूलशापाः परिग्रहः ।' इत्यमरः ।

भावार्थः—यः मुनिः अनायासेनैव नहुषं महेन्द्रस्थानाधिष्ठितं तस्मात् पदात् शापद्वारा अधः पातयामास तादृशमहिमशालिनः अगस्त्यस्यायं सम्मुखवर्ती पृथिवीस्थित आश्रमः । दिवि तु अन्यदेव स्थानमस्ति इति भावः । शरत्काले गगने दक्षिणस्यां दिशि अगस्त्योदये वर्षाकालकलुषितं जलं निर्मलं संपद्यते इति लोकशास्त्रोभयसिद्धम् ।

पुरुवंशीयः कश्चिद् नहुषनामा राजा शतमश्वमेधयागान् अनुष्ठाय तत्पुण्यप्रभावेण इन्द्रपदं लेभे । तत्राऽयं सर्वमप्यैन्द्रं भोगजातं स्वायत्तं कृत्वा बुभुजे । परस्तात् इन्द्रपत्नीं शचीमपि स्वायत्तां कर्तुमिच्छन् तस्यै दूतं प्रेषयामास । इन्द्रशासनमन्यथाकर्तुमसमर्था सा यदा चिन्ताकुला बभूव तदा देवगुरूपदेशेन "यदि त्वं सप्तर्षिभिः बाह्यमानायां पालङ्क्याम् उपविश्यात्र आगमिष्यसि तदाऽहं त्वां स्वीकरिष्यामि" इति सन्देशं नहुषाय प्राहिणोत् । दृप्तः स इदं सुकरं विचिन्त्य सप्तर्षीन् स्वारूढं यानवहनायादिदेश । सप्तर्षिषु अन्यतमोऽगस्त्यः अङ्गुष्ठमात्रदेहः मन्दं चलितुं प्रवृत्तः । तदा क्रोधमोहावेशेन नहुषः तमगस्त्यं पादेन प्रहरन् 'सर्प सर्प' ( चल चल ) इति साधिक्षेपं बभाषे । तदाकर्ण्य कुम्भसम्भवो मुनिस्तं नहुषं 'सर्पो भव' इत्यशपत् । नहुषस्तत्क्षणमेवाजगरो भूत्वा भूमौ पपात । यस्योद्धारः परस्तात् श्रीकृष्णावतारे जात इति पौराणिकमाख्यानमत्रानुसन्धेयम् ।

हिन्दीश्लोकार्थः—जिन्होंने अपने भ्रूस्पन्दन मात्र से नहुष को इन्द्रपद से गिरा दिया, और बरसात के कारण कलुषित हुए जलों के स्वच्छ करने के कारणभूत अगस्त्य मुनि का पृथ्वी पर स्थित यह आश्रम दीख रहा है ॥ ३६ ॥

त्रेताऽग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७ ॥

सञ्जीविनी—त्रेताऽग्नीति । अनिन्द्यकीर्तेस्तस्यागस्त्यस्याक्रान्तविमानमार्गं हविर्गन्धोऽस्यास्तीति हविर्गन्धि त्रेताऽग्निरग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । पृषोदरादित्वादेत्वम् । त्रेताऽग्नेर्धूमाग्रमिद घ्रात्वाऽऽघ्राय रजसो गुणाद् विमुक्तो मे ममात्माऽन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति ।

अन्वयः—अनिन्द्यकीर्तेः तस्य आक्रान्तविमानमार्गं हविर्गन्धि त्रेताग्निधूमाग्रम् इदं घ्रात्वा रजोविमुक्तः मे आत्मा लघिमानं समश्नुते ।

वाच्य०—अनिन्द्यकीर्तेः तस्य आक्रान्तविमानमार्गं हविर्गन्धि इदं त्रेताग्निधूमाग्रं घ्रात्वा रजोविमुक्तेन मे आत्मना लघिमा समश्नूयते ( कर्म० ) ।

चन्द्रिका—अनिन्द्यकीर्तेः प्रशंसनीययशसः, तस्य अगस्त्यस्य, आक्रान्तः व्याप्तः, विमानमार्गः गगनं येन तथोक्तम् । आकाशव्यापीत्यर्थः । हविर्गन्धि

हविः सौरभयुक्तम् 'देवतोद्देशेन समन्त्रं वह्नौ हूयमानं द्रव्यं हविरित्युच्यते । त्रेताग्नेः अग्नित्रयस्य, 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ।' इत्युक्तस्य । धूमाग्रं बाष्पमुखभागम् । ( 'बाष्पोऽश्रुण्यम्बुधूमे च' इति वैजयन्ती ) घ्रात्वा समाघ्राय, रजसः रजोगुणाद्, विमुक्तः रहितः, मे मम, आत्मा मनः, लघिमानं लाघवम् समश्नुते भजते । 'त्रेताग्निः' इत्यस्यामरविवेके महेश्वरेण 'त्रित्वम् इता त्रेता' इति व्याख्यातम् ।

समासः—धूमस्य अग्रं धूमाग्रम्, त्रेताग्नेः धूमाग्रं त्रेताग्निधूमाग्रम्, तत् तदेव पुनः । निन्दितुं योग्या निन्द्या, न निन्द्या अनिन्द्या ( नञ्त० ), अनिन्द्या कीर्तिः यस्य सः ( बहु० ) अनिन्द्यकीर्तिः, तस्य अनिन्द्यकीर्तेः । विमानस्य मार्गः विमानमार्गः ( ष०त० ), आक्रान्तः विमानमार्गः येन ( बहु० ) तत् आक्रान्तविमानमार्गम्, तत् पुनस्तदेव, हविषः गन्धः अस्यास्तीति हविर्गन्धि, तत् पुनस्तत्, रजसः विमुक्तः रजोविमुक्तः । लघोर्भावः लघिमा, तं लघिमानम् ।

कोशः—'यशः कीर्तिः समज्ञा च' 'अग्नित्रयमिदं त्रेता' 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ।' 'रजोगुणे च स्त्रीपुष्पु' इत्यमरः ।

भावार्थः—श्लाघनीययशसः तस्यागस्त्यमुनेः गगनोपरि प्रसृतं हविर्गन्धयुक्तम् अग्नित्रयोत्थितं धूममाघ्राय ममान्तःकरणस्य कलुषिता भावाः प्रशान्ताः । अत एव ममात्मा सम्प्रति लघुः संवृत्तः ।

हिन्दीश्लोकार्थः—प्रशंसा करने योग्य कीर्तिवाले उस अगस्त्य मुनि की तीनों अग्नियों ( दाक्षिणाग्नि, गार्हपत्याग्नि, आहवनीयाग्नि ) से उठे हुए, तथा आकाश के ऊपर भी फैले हुए हवि ( देवता के उद्देश्य से मन्त्रपूर्वक अग्नि में डाले हुए पदार्थ ) की गन्ध से युक्त धुँए को सूँघ कर मेरा मन राजस भावों से रहित होकर हलका बन गया है ॥ ३७ ॥

एतन्मुनेर्मानिनि शातकर्णेः पञ्चाप्सरो नाम विहारवारि ।
आभाति पर्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥३८॥

सञ्जीविनी—एतदिति । हे मानिनि ! शातकर्णेर्मुनेः सम्बन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम् । पञ्चाप्सरसो यस्मिन्निति विग्रहः । पर्यन्तेषु वनानि यस्य तत्पर्यन्तवनमेतद्विहारवारि क्रीडासरो विदूरात् । मेघानामन्तरे मध्य आलक्ष्यमीषद् दृश्यम् । आङीषदर्थेऽभिव्याप्तौ । इन्दुबिम्बमिव आभाति ।

अन्वयः—हे मानिनि ! शातकर्णेः मुनेः पञ्चाप्सरो नाम पर्यन्तवनम् एतद् विहारवारि विदूरात् मेघान्तरालक्ष्यम् इन्दुबिम्बम् इव आभाति ।

वाच्य०—हे मानिनि ! शातकर्णेः मुनेः पञ्चाप्सरोनाम्ना पर्यन्तवनेन एतेन विहारवारिणा विदूरात् मेघान्तरालक्ष्येण इन्दुबिम्बेनेव आभायते ।

चन्द्रिका—हे मानिनि ! अभिमानयुक्ते ! शातकर्णेः मुनेः शातकर्णिनामक-ऋषेः, पञ्चाप्सरो नाम पञ्चाप्सरो इति विख्यातम् । पर्यन्तवनं परिसरेषु अरण्य-युतम्, एतद् इदम्, विहारवारि क्रीडाजलम्, विदूरात् विप्रकृष्टात्, मेघान्तरे घनमध्ये, आलक्ष्यं किञ्चिद् दृश्यम्, इन्दुबिम्बमिव चन्द्रमण्डलं यथा, आभाति आसमन्तात् शोभते । उपमालङ्कारः—चतुर्णामप्युपादानात् पूर्णोपमा ।

समासः—मानः अस्या अस्तीति मानिनी ( मत्वर्थीय० ), तत्सम्बुद्धौ मानिनि । शतकर्णस्यापत्यं पुमान् शातकर्णिः, तस्य शातकर्णेः । (रामायणे पुनः—'इदं पञ्चाप्सरो नाम तटाकं सार्वत्रकालिकम् । निर्मितं तपसा राम ! मुनिना माण्डकर्णिना ॥' इति दृश्यते नामभेदः ) पञ्च अप्सरसः यस्मिन् तत् ( बहु० ) पञ्चाप्सरः । पर्यन्तेषु वनानि यस्य ( बहु० ) तत् पर्यन्तवनम् । विहारस्य वारि ( ष० त० ) विहारवारि । मेघानाम् अन्तरं मेघान्तरम्, आ ( ईषद् ) लक्षितुं योग्यम् आलक्ष्यम्, मेघान्तरे आलक्ष्यम् ( स० त० ) मेघान्तरालक्ष्यम् । इन्दोः बिम्बम् ( ष० त० ) इन्दुबिम्बम् ।

कोशः—'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'नामप्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने ।' 'पर्यन्तभूः परिसरः' 'गहनं काननं वनम्' 'आपः स्त्रीभूम्नि वार्वारि' 'स्याद् दूरं विप्रकृष्टकम्' 'अभ्रं मेघो वारिवाहः' 'इन्दुः कुमुदबान्धवः' 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः ।

भावार्थः—सम्मुखे दृश्यमानम् एतत्सरः शातकर्णिमुनेः पञ्चाप्सरः इति प्रसिद्धं परितो वनैरावृतं क्रीडाजलमस्ति । श्यामलवनमध्ये शुभ्रमिदं जलं दूरात् दर्शनावसरे मेघमध्ये किञ्चिद् दृश्यं चन्द्रमण्डलमिव भासते पश्य । अत्र मानि-नीति सम्बोधनं सम्भवार्थकमेव । 'पञ्चाप्सरो नाम' इति व्यस्तपदद्वयस्य 'पञ्चाप्सरोनामकम्' इति व्याख्यानं केषाञ्चित् अनवधानमूलकम् । बहुव्रीह्यर्थस्य प्रकृते दुर्लभत्वात् इति ध्येयम् ।

हिन्दीश्लोकार्थः—हे मानवति ! शातकर्णि मुनि का चारों ओर वनों से घिरा यह 'पञ्चाप्सरः' ऐसा प्रसिद्ध वन दूर से ( देखने पर ) मेघों से घिरा चन्द्रमण्डल-सा दीख रहा है ॥ ३८ ॥

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगैः सार्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥३९॥

सञ्जीविनी—पुरेति । पुरा पूर्वस्मिन्काले दर्भाङ्कुरमात्रवृत्तिस्तन्मात्राहारो मृगैः सार्धं सह चरन् स ऋषिः समाधेस्तपसो भीतेन मघोनेन्द्रेण पञ्चानामप्सरसां यौवनम् । 'तद्धितार्थोत्तरपदसमाहारे च" इत्यनेनोत्तरपदसमासः । तदेव कूटबन्धं कपटयन्त्रमुपनीतः । 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः । किलेत्यैतिह्ये । मृगसाह-चर्यान्मृगवदेव बद्ध इति भावः ।

अन्वयः—पुरा दर्भाङ्कुरमात्रवृत्तिः मृगैः साधं चरन् स समाधिभीतेन मघोना पञ्चाप्सरोयौवनकूटबन्धम् उपनीतः किल।

वाच्य०—पुरा दर्भांकुरमात्रवृत्ति मृगैः साधं चरन्तम् ऋषिं समाधिभीतः मघवा पञ्चाप्सरोयौवनकूटबन्धम् उपनीतवान् ( कर्तृ० )।

चन्द्रिका—पुरा प्राचीनकाले. दर्भांकुरमात्रं कुशप्ररोह एव, वृत्तिः आहारो यस्य एवम्भूतः, मृगैः साधं हरिणैः सह, चरन् वसन्, सः ऋषिः समाधेः चित्तैकाग्रचरूपतपसः, भीतेन भीरुणा, मघोना शक्रेण, पञ्चाप्सरोयौवनं पञ्चसंख्यकाप्सरसां तारुण्यम्, एव कूटवन्धं छलवन्धनयन्त्रम्। हरिणग्रहणाय यथा आनायः प्रसार्यते व्याधैः, तन्मध्ये खाद्यं किमपि निधीयते, तल्लोभेन तत्र प्रविष्टा मृगाः समन्तत आबद्धा भवन्ति, एवमेव प्रकृते मृगसहचारी ऋषिः अप्सरोयौवनरूपकूटयन्त्रेण जिघृक्षित इन्द्रेणेति रूपकेण वर्णित कविना। उपनीतः प्रापितः। किलेति सम्भाव्यतायाम् 'वार्तासम्भाव्ययोः किल' इत्यमरः। नीङो द्विकर्मकत्वात् प्रधाने कर्मणि क्तः।

समासः—दर्भाणाम् अङ्कुरः ( ष० त० ) दर्भाङ्कुरः, दर्भाङ्कुर एव दर्भाङ्कुरमात्रं ( अस्वपदविग्र० ) दुर्भाङ्कुरमात्रं वृत्तिः यस्य ( बहु० ) स दर्भाङ्कुरमात्रवृत्तिः। समाधेः भीतः समाधिभीतः ( पं० त० ), तेन समाधिभीतेन। पञ्चानाम् अप्सरसां यौवनमेव कूटबन्धः पञ्चाप्सरोयौवनकूटवन्धः, तं पञ्चाप्सरोयौवनकूटबन्धम्।

कोशः—'स्यात्प्रबन्धे पुरातीते निकटागामिके पुरा।' 'अस्त्री कुशो कुशो दर्भः' 'अङ्कुरोऽभिनवोद्भिदि' 'मात्रं कार्त्स्न्येऽवधारणे' 'वृत्तिर्वर्तनजीवने' 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः।' 'साधं साकं सत्रा समं सह' 'ऋषयः सत्यवसचः' 'इन्द्रो मरुत्वान् मघवा' 'वार्तासंभाव्ययोः किल' 'तारुण्यं यौवनं समे' इत्यमरः।

भावार्थः—पूर्वकाले कुशाङ्कुरमात्राहारं मृगसहचारिणं तं शातकर्णिमुनिं तदुग्रतपसो भीत इन्द्रस्तत्तपसो विघ्नावाहनार्थं पञ्चयुवतीः अप्सरसस्तन्मोहनाय प्रेषयामासेति भावः।

हिन्दीश्लोकार्थः—पूर्वकाल में केवल कुशों के अंकुरों पर ही निर्वाह (आहार) करते हुए हिरनों के साथ रहता हुआ वह मुनि, शातकर्णि, उनके तप से डरे हुए इन्द्र के द्वारा पाँच अप्सराओं के यौवन रूप कूटबन्धनयन्त्र ( जाल ) में, फाँस दिया गया॥ ३९॥

तस्यायमन्तर्हितसौधभाजः प्रसक्तसङ्गीतमृदङ्गघोषः।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति॥४०॥

सञ्जीविनी—तस्येति। अन्तर्हितसौधभाजो जलान्तर्गतप्रासादगतस्य तस्य शातकर्णेरयं प्रसक्तः सन्ततः सङ्गीतमृदङ्गघोषो वियद्गतः सन् पुष्पकस्य 'चन्द्र-

शाला: 'शिरोगृहाणि चन्द्रशाला शिरोगृहम्' इति हलायुधः। क्षणं प्रतिश्रुद्भिः प्रतिध्वानैर्मुखरा ध्वनन्तीः करोति। 'स्त्री प्रतिश्रुत्प्रतिध्वाने' इत्यमरः।

अन्वयः—अन्तर्हितसौधभाजः तस्य प्रसक्तसंगीतमृदङ्गघोषः वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति।

वाच्य०—अन्तर्हितसौधभाजः तस्य प्रसक्तसङ्गीतमृदङ्गघोषेण वियद्गतेन 'सता' चन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः क्रियन्ते ( कर्म० )।

चन्द्रिका—अन्तर्हितसौधभाजः सलिलान्तःस्थितभवनाश्रयिणः, तस्य शातकर्णिमुनेः, अयम् एष श्रूयमाणः, प्रसक्तः प्रवृत्तः, सङ्गीतमृदङ्गस्य गानस्य मुरजस्य च, घोषः नादः, वियद्गतः गगनं प्राप्तः 'सन् भवन्' क्षणं मुहूर्तम्, अत्यन्तसंयोगे द्वितीया। पुष्पकस्य पुष्पकविमानस्यास्मदारूढस्य चन्द्रशालाः उपरितलानि, प्रतिश्रुद्भिः प्रतिध्वनिभिः, मुखराः शब्दायमानाः, करोति विदधाति।

समासः—अन्तर्हितञ्च तत् सौधञ्च अन्तर्हितसौधम् ( कर्म० ), अन्तर्हितसौधं भजतीति अन्तर्हितसौधभाक्, तस्य अन्तर्हितसौधभाजः। सङ्गीतञ्च मृदङ्गश्च अनयोः समाहारः सङ्गीतमृदङ्गम्, ( समाहारद्वन्द्वः तूर्याङ्गत्वात् ) सङ्गीतमृदङ्गस्य घोषः ( ष० त० ) सङ्गीतमृदङ्गघोषः, प्रसक्तश्चासौ सङ्गीतमृदङ्गघोषश्च ( कर्मधा० ) प्रसक्तसङ्गीतमृदङ्गघोषः। वियद् गतः वियद्गतः ( द्वितीयाश्रितेति द्वितीयात० )। पुष्पकस्य चन्द्रशालाः पुष्पकचन्द्रशालाः, ताः पुनस्तद्वत्। प्रतिश्रुद्भिः मुखराः प्रतिश्रुन्मुखराः, ताः पुनस्तत्।

कोशः—सौधोऽस्त्री राजसदनमुपकार्योपकारिका' 'गीतं गानमिमे समे' 'मृदङ्गा मुरजाः' 'वियद् विष्णुपदं वातु पुंस्याकाशविहायसी।' 'चन्द्रशाला शिरोगृहम्' 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः।' 'स्त्री प्रतिश्रुत्–प्रतिध्वाने' इत्यमरः।

भावार्थः—ताभिः पञ्चभिरप्सरोभिः सह भोगविलासार्थं शातकर्णिना जलान्तः भवनं रचितम्। तत्रत्य एवायं गानस्य मृदङ्गस्य च ध्वनिः आकाशे अस्माकं पुष्पकयानं प्रविश्य अस्योपरितलं किञ्चित्कालं प्रतिध्वनितं कुर्वन् अस्ति–इति भावः।

हिन्दीश्लोकार्थः—उस सरोवर के भीतर बने महल में रहते हुए उस शातकर्णि मुनि के उन अप्सराओं के साथ होनेवाले संगीत और मृदंग की ध्वनि आकाश में जाकर ( इस ) पुष्पक विमान के ऊपर के तले को क्षणभर प्रतिध्वनि से शब्दायमान बना रही है॥ ४०॥

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः॥४१॥

सञ्जीविनी—हविरिति। नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः

सौम्योऽसावपरस्तपस्वी एधवतामिन्धनवताम् । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । चतुर्णां हविर्भुजामग्नीनां मध्ये । ललाट तपतीति ललाटन्तपः सूर्यः । "असूर्यललाटयोर्दृशितपोः" इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमः । ललाटन्तपः सप्तसप्तिः सप्ताश्वः सूर्यो यस्य स तथोक्तः सन् । तपस्यति तपश्चरति । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । "तपसः परस्मैपदं च" इति वक्तव्यम् ।

अन्वयः—नाम्ना सुतीक्ष्णः, चरितेन दान्तः असौ अपरः तपस्वी एधवतां चतुर्णां हविर्भुजां मध्ये ललाटन्तपसप्तसप्तिः 'सन्' तपस्यति ।

वाच्य०—नाम्ना सुतीक्ष्णेन चरितेन दान्तेन अमुना अपरेण तपस्विना एधवतां चतुर्णां हविर्भुजां मध्ये ललाटन्तपसप्तसप्तिना 'सता' तपस्यते ।

चन्द्रिका—नाम्ना अभिधानेन, सुतीक्ष्णः 'सुतीक्ष्ण अतिकर्कशः' इति, चरितेन कर्मणा, दान्तः विनीतः, असौ एषः, अपरः अन्यः, तपस्वी मुनिः, एधवतां प्रज्वलत्काष्ठयुक्तानाम्, चतुर्णां चतुरसंख्यकानाम्, चतुर्षु भागेषु ज्वलतामित्यर्थः । हविर्भुजां पावकानाम्, मध्ये मध्यभागे, ललाटन्तपः अलिकसन्तापकः 'ललाटमलिकं गोधिः' इत्यमरः, सप्तसप्तिः भास्करः यस्यैवम्भूतः 'सन् भवन्' तपस्यति तपः करोति । एनं पश्येत्यर्थः ।

समास—एधाः एषां सन्तीति एधवन्तः, तेषाम् एधवताम् ( एधशब्दः प्रायेण सान्तः, अत्रादन्तः प्रयुक्तः ) हविः भुञ्जतीति हविर्भुजः, तेषां हविर्भुजाम् । ललाटं तपतीति ललाटन्तपः सप्त सप्तयः यस्य सः सप्तसप्तिः, ललाटन्तपः सप्तसप्तिः यस्य सः ( बहुव्रीहिगर्भो बहु० ) ललाटन्तपसप्तसप्तिः ।

कोशः—'नामधेयं च नाम च' 'तिग्मं तीक्ष्णं खरं तद्वत्' 'तपः क्लेशसहो दान्तः' 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् ।' 'मध्योऽस्त्री' 'ललाटमलिकं गोधिः' 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।' इत्यमरः ।

भावार्थः—विमानमग्रे सरति, परिचयोऽपि नूतनस्तत्रत्यो दीयते । इदानीमपरं मुनिं प्रदर्शयन् रामः सीतां बोधयति—हे सीते, एष कोऽप्यपरो मुनिः, अस्य नामैव केवल सुतीक्ष्ण इति शीलन्तु कोमलमस्ति । अयं सुतीक्ष्णमुनिः चतुर्षु ज्वलताम् अग्नीनां मध्ये उपविश्य ( शास्त्रानुसारं पञ्चाग्निषु सूर्योऽपि गण्यते ) आकाशमध्यस्थितं मध्याह्नसूर्यं भागेषु पश्यन् तपस्यति । पञ्चाग्नितपः करोत्ययमिति भावः ।

हिन्दीश्लोकार्थः -नाम से केवल सुतीक्ष्ण—कठोर और चरित्र से शान्त यह दूसरे तपस्वी जलती ( काठवाली ) हुई चार अग्नियों के मध्य में मध्याह्न के सूर्य को देखते हुए तपस्या ( पंचाग्नि तप ) कर रहे हैं ॥ ४१ ॥

अमुं सहासप्रहितेक्षणानि व्याजार्धसन्दर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥४२॥

सञ्जीविनी—अमुमिति । जनितेन्द्रशङ्कं जनिता इन्द्रस्य शङ्का भयं येन तं, तपसेति शेषः । अमुं सुतीक्ष्णं सहासं प्रहितानीक्षणानि दृष्टयो येषु तानि व्याजेन केनचिन्मिषेण । 'पुंस्यर्धोऽर्धं समेंऽशके' इति विश्वः । अर्धमात्रसन्दर्शिना मेखला काञ्ची येषु तानि सुराङ्गनानामिन्द्रप्रेषितानां विभ्रमा विलासा एव चेष्टितानि विकर्तुं स्खलयितुमलं, समर्थानि न बभूवुरिति शेषः ।

अन्वयः—जनितेन्द्रशङ्कम् अमुं सहासप्रहितेक्षणानि व्याजार्धसन्दर्शितमेखलानि सुराङ्गनाविभ्रमचेष्टितानि विकर्तुं न अलम् बभूवुः ।

वाच्य०—जनितेन्द्रशङ्कम् अयं सहासप्रहितेक्षणैः व्याजार्धसन्दर्शितमेखलैः सुराङ्गनाविभ्रमचेष्टितैः विकर्तुम् न अलं 'बभूवे' ( भाव० ) ।

चन्द्रिका—जनिता उत्पादिता, इन्द्रस्य शङ्का येन तादृशम् । घोरयानया तपस्ययाऽयं सुतीक्ष्णः मत्पदं ग्रहीतुमिच्छति किमिति इन्द्रः शङ्कते स्मेत्यर्थः । अमुं सुतीक्ष्णमुनिम् सहासं सस्मितं यथा तथेति क्रियाविशेषणम् । प्रहितानि प्रेषितानि ईक्षणानि लोचनानि येषु तादृशानि, भावपूर्णकटाक्षवीक्षणानीति यावत् । व्याजेन केनचित्कपटेन अर्धं स्वल्पं यथा तथेति क्रियाविशेषणमेतत् । सन्दर्शिता प्रदर्शिता मेखला काञ्ची नितम्बाभरणं येषु तानि तथोक्तानि, सुराङ्गनानाम् अप्सरसाम्, देवविलासिनीनाम्, विभ्रमचेष्टितानि हावव्यञ्जककृत्यानि । 'स्त्रीणां विलास-विव्वोकविभ्रमा ललितं तथा । हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥' इत्यमरः । विकर्तुं विकृतं कर्तुम् दूषयितुम्, अलं शक्तानि, न नाभूवन्निति शेषः ।

समासः—इन्द्रस्य शङ्का ( ष० त० ) इन्द्रशङ्का, जनिता इन्द्रशङ्का येन ( बहु० ) सः जनितेन्द्रशङ्कः तं जनितेन्द्रशङ्कम् । हासेन सह वर्तते इति सहासम् ( बहु० ), सहासं प्रहितानि ईक्षणानि येषु तानि ( बहु० ) सहासप्रहितेक्षणानि । व्याजेन अर्धं यथा सन्दर्शिता मेखला येषु तानि ( बहु० ) व्याजार्धसन्दर्शितमेखलानि । विभ्रमाणां चेष्टितानि विभ्रमचेष्टितानि, सुराणाम् अङ्गनाः सुराङ्गनाः, सुराङ्गनानां विभ्रमचेष्टितानि ( सर्वत्र ष०तत्पु० ) तानि ।

कोशः—'हासो हास्यञ्च' 'ईक्षणं चक्षुरक्षिणी ।' 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।' 'पुंस्यर्धोऽर्धं समेंऽशके' 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ।' 'विबुधाः सुराः' 'विशेषास्त्वङ्गना भीरुः' 'विभ्रमा ललितं तथा' 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।' इत्यमरः ।

भावार्थः—इन्द्रप्रेषितानां विलासिनीनां भावपूर्णानि कटाक्षवीक्षणानि छलेन प्रदर्शितगुप्ताङ्गानि अन्या अपि कामोद्दीपकचेष्टाश्च 'एष तपसा ममासनं वांछति किम् ।' इति इन्द्रस्यापि शङ्कां जनयन्तं सुतीक्ष्णमुनिमेनं दूषयितुं (भग्नतपसं कर्तुं) नापारयन् इति भावः ।

हिन्दीश्लोकार्थः—तप से इन्द्र को भी शंका ( यह मेरा स्थान लेना चाहते हैं क्या ? ) उत्पन्न करनेवाले इस सुतीक्ष्ण मुनि को इन्द्र से भेजी गई अप्सराओं के भावपूर्ण मुसकान से युक्त कटाक्ष वाण तथा अन्य किसी बहाने से थोड़ी दिखायी जा रही है करधनी आदि जिनमें ऐसे विलासों की चेष्टाएँ दूषित करने में समर्थ न हुईं ॥ ४२ ॥

एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥

सञ्जीविनी—एष इति । ऊर्ध्वबाहुरेष सुतीक्ष्णोऽक्षमालैव वलयं यस्य तं मृगाणां कण्डूयितारं कुशा एव सूचयस्ता लुनातीति कुशसूचिलावस्तम् । "कर्मण्यण्" इत्यण् । एभिर्विशेषणैर्जपशीलत्व भूतदया कर्मक्षमत्वं च द्योत्यते । सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्माननिमित्ते "निमित्तात्कर्मयोगे" इति सप्तमी । इतः प्राध्वं प्रकृतानुकूलबन्धं प्रयुङ्क्ते प्रेरयति । 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । अव्ययं चैतत् ।

अन्वयः—ऊर्ध्वबाहुः एषः अक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावं सव्येतरं भुजं मे सभा इतः प्राध्वं प्रयुङ्क्ते ।

वाच्य०—ऊर्ध्वबाहुना एतेन अक्षमालावलयः मृगाणां कण्डूयिता कुशसूचिलावः सव्येतरः भुजः मे सभाजने इतः प्राध्वं प्रयुज्यते । ( कर्मवा० )

चन्द्रिका—ऊर्ध्वबाहुः उच्छ्रितभुजः, उद्गतहस्तः, एषः पुरोवर्ती, अक्षमालावलयं बिभीतकमाल्यरूपकटकधारिणम्, मृगाणां हरिणानाम्, कण्डूयितारं खर्जनकर्तारम्, कुशसूचोः दर्भाग्राणि लुनाति छिनत्तीति तादृशम्, सव्येतरं दक्षिणम्, भुजं बाहुम्, मे मम, सभाजने आदराभिनन्दने, इतः अत्र, सार्वविभक्तिकस्तसिः । प्राध्वम् आनुकूल्येन, अव्ययमिदम् । प्रयुङ्क्ते दर्शयति ।

समासः—ऊर्ध्वौ बाहुर्यस्य सः ( बहु० ) ऊर्ध्वबाहुः । अक्षाणां माला ( ष०त० ) अक्षमाला, अक्षमालैव वलयो यस्य ( बहु० ) सः अक्षमालावलयः, तम् अक्षमालावलयम् । कुशानां सूचयः कुशसूचयः ( ष०त० ) कुशसूचीः लुनातीति कुशसूचिलावः, तं कुशसूचिलावम् । सव्याद् इतरः ( पं०त० ) सव्येतरः, तं सव्येतरम् ।

कोशः—'भुजबाहू प्रवेष्टो दोः' 'बिभीतकः । नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ।' 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' 'अस्त्री कुशं कुथो दर्भः' 'वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणे ।' 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।' 'इतरस्त्वन्यनीचयोः' 'आनन्दनसभाजने । आप्रच्छन्नम्' 'आनुकूल्यार्थकं प्राध्वम्' इत्यमराः ।

भावार्थः—एष सुतीक्ष्णमुनिः जपमालारूपकङ्कणधारिणं कृपया हरिणदेह-

खजंकं होमार्थं कुशाग्रोच्छेदकं दक्षिणं बाहुं मम स्वागताभिनन्दनाय अत्रानुकूल्येन उत्थापयति-पश्येमम् ।

हिन्दीश्लोकार्थः—ऊपर हाथ उठाये हुए यह मुनि, जपमालरूपी कंकण धारण किये हुए, दया से, हरिनों को खुजलानेवाले, होमादि के लिए, कुशाग्रों को तोड़नेवाले अपने दाहिने हाथ को मेरे स्वागत सम्मान में, ठीक ही, उठा रहे हैं ॥ ४३ ॥

वाचंयमत्वात्प्रणतिं ममैष कम्पेन किञ्चित्प्रतिगृह्य मूर्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते ॥ ४४ ॥

सञ्जीविनी—वाचंयमत्वादिति । एष सुतीक्ष्णः । वाचं यच्छति नियमयतीति वाचंयमो मौनव्रती । "वाचि यमो व्रते" इति खच्प्रत्ययः । "वाचंयमपुरन्दरौ च" इति मुम् । तस्य भावस्तत्त्वान्मम प्रणतिं किञ्चिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मान्मुक्ताम् । "अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" इत्यनेन पञ्चमीसमासः । दृष्टिं पुनः सहस्रार्चिषि सूर्ये सन्निधत्ते, सम्यङ्निधत्त इत्यर्थः । अन्यथाऽकर्मकत्वप्रसङ्गात् ।

अन्वयः—एषः वाचंयमत्वात् मम प्रणतिं मूर्ध्नः किञ्चित् कम्पेन प्रतिगृह्य विमानव्यवधानमुक्तां दृष्टिं पुनः सहस्रार्चिषि सन्निधत्ते ।

वाच्य०—एतेन वाचंयमत्वात् मम प्रणतिं मूर्ध्नः किञ्चित् कम्पेन प्रतिगृह्य विमानव्यवधानमुक्ता दृष्टिः पुनः सहस्रार्चिषि सन्निधीयते ।

चन्द्रिका—एषः सुतीक्ष्णर्षिः, वाचंयमत्वात् मौनव्रतत्वात्, अभाषणनियमात्, मम मे प्रणतिं प्रणामम्, मूर्ध्नः मस्तकस्य, किञ्चित् ईषत् कम्पेन धूननेन, प्रतिगृह्य स्वीकृत्य, उररीकृत्य, विमानस्य व्योमयानस्य, व्यवधानात् अन्तरागमनात्, प्रतिबन्धात्, मुक्तां विसृष्टाम्, परित्यक्ताम्, दृष्टिं दृशम्, पुनः मुहुः, सहस्रार्चिषि सहस्रांशौ, सूर्ये, सन्निधत्ते सम्यक् स्थापयति, निदधाति ।

समासः—वाचं यच्छतीति वाचंयमः, वाचंयमस्य भावः वाचंयमत्वम्, तस्मात् वाचंयमत्वात् । विमानस्य व्यवधानं विमानव्यवधानम् ( ष०त० ), विमानव्यवधानात् मुक्ता विमानव्यवधानमुक्ता, तां विमानव्यवधानमुक्ताम् । सहस्रम् अर्चिषो यस्य सः ( बहु० ) सहस्रार्चिः, तस्मिन् सहस्रार्चिषि ।

कोशः—'वाचंयमो मुनिः' वेपथुः । कम्पः' 'मूर्धा ना मस्तकोऽस्त्रियाम्' 'दृग्दृष्टी' 'व्योमयानं विमानोऽस्त्री' 'मुहुः पुनः शश्वत्' इत्यमरः ।

भावार्थः—एष मुनिः मौनव्रतधारणात् किमपि अनुक्त्वा किञ्चित् मस्तकचालनेन मम प्रणामं स्वीकृत्य पुष्पकविमानेन तिरोधानात् मुक्तां निजदृष्टिं भगवति सूर्ये एव सयोजयति ।

हिन्दीश्लोकार्थः—मौन धारण करने के कारण मेरे नमस्कार को थोड़ा सा

सिर हिलाकर स्वीकार कर यह सुतीक्ष्णमुनि पुष्पकविमान मध्यमें आने से सूर्य से हटी हुई दृष्टि को पुनः सूर्य में ही लगा रहे हैं ॥ ४४ ॥

अदः शरण्यं शरभङ्गनाम्नस्तपावनं पावनमाहिताग्नेः ।
चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥

सञ्जीविनी—अद इति । शरणे रक्षणे साधु शरण्यं पावयतीति पावनम् । अदो दृश्यमानं तपोवनमाहिताग्नेः शरभङ्गनाम्नो मुनेः सम्बन्धि, यः शरभङ्गश्चिराय चिरमग्निं समिद्भिः सन्तर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां तनुमप्यहौषीद्धुतवान्, जुहोतेर्लुङ् ।

अन्वयः—शरण्यं पावनम् अदः तपोवनम् आहिताग्नेः शरभङ्गनाम्नः 'मुनेः अस्ति' यः चिराय समिद्भिः अग्निं सन्तर्प्य मन्त्रपूतां तनुमपि अहौषीत् ।

वाच्य०—शरण्येन पावनेन अमुना तपोवनेन शरभङ्गः 'मुनेः भूयते' ( भाव० )। येन चिराय समिद्भिः अग्निं सन्तर्प्य मन्त्रपूता तनुरपि अहौष्यत ( कर्मवा० )।

चन्द्रिका—शरण्यं शरणागतहितकारि, पावनं पवित्रताकारि अदः एतत्, तपोवनम् धर्मारण्यम्. आहिताग्नेः आधानेन संस्कृताः त्रयोऽग्नयः येन तथोक्तस्य, गृहीताग्निहोत्रदीक्षस्येत्यर्थः । शरभङ्गनाम्नः शरभङ्गनामकस्य, मुनेरस्तीति शेषः । यः शरभङ्गमुनिः, चिराय बहुकालपर्यन्तम्, चिरायेति विभक्तिप्रतिरूपकमव्ययम् । अग्निं पावकम्, समिद्भिः इन्धनैः, उपलक्षणविधयाऽन्यैरपि हवनीयद्रव्यैः चरुघृतादिभिरित्यर्थः । सन्तर्प्य सन्तोष्य, मन्त्रपूतां जपमन्त्रैः प्रत्यहमुच्चार्यमाणैः पवित्राम्, तनुमपि देहमपि, अहौषीत् जुहाव । शरभङ्गमुनिः दण्डकारण्ये श्रीरामागमनं प्रतीक्षमाणः प्राणान् धारयन्नासीत् । श्रीरामे समागते तद्दर्शनं विधाय मुनिः योगाग्नौ तत्समक्षमेव स्वशरीरं भस्मसाञ्चकारेति रामायणकथाऽत्रानुसन्धेया ।

समासः—शरणे साधु शरण्यम् । पावयतीति ( नन्द्यादित्वात् ल्युः ) पावनम्, तपसः वनं तपोवनम्, आहिताः अग्नयो येन सः ( बहु० आहिताग्निः, तस्य आहिताग्नेः । शरभङ्ग इति नाम यस्य ( बहु० ) सः सरभङ्गनामा, तस्य शरभङ्गनाम्नः । मन्त्रैः पूता ( तृ०त० ) मन्त्रपूता, तां मन्त्रपूताम् ।

कोशः—'शरणं गृहरक्षित्रोः' 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।' काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ।' 'अग्निर्वैश्वानरो वह्निः' 'वेदभेदे गुप्तवादे मन्त्रः' 'पवित्रः प्रयतः पूतः' 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः ।

भावार्थः—शरणागतरक्षकम् अपवित्रस्यापि पवित्रताकारकम् इदम् अग्निहोत्रदीक्षितस्य शरभङ्गमुनेः तपोवनमस्ति । यः शरभङ्गमुनिः चिरकालं समिधादिभिः

अग्निं सन्तोष्य पर्यन्ते मन्त्रजपैः पवित्रं शरीरमपि तत्र जुहावेति भावः। इच्छमरणोऽयं पुण्यात्माऽऽसीत्।

हिन्दीश्लोकार्थः—शरणागतों का रक्षण करनेवाला यह आश्रम अग्निहोत्री शरभङ्गऋषि का है। जो ऋषि बहुकाल तक समिधादि से अग्नि को तृप्त कर मंत्रों से पवित्र निजशरीर को भी उसमें होम कर दिया था॥ ४५॥

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु॥ ४६॥

सञ्जीविनी—छायेति। अधुनाऽस्मिन्काले तस्य शरभङ्गस्य सम्बन्धिन्यतिथीनां सपर्याऽतिथिपूजा। 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः। छायाभिर्विनीतोऽध्वपरिश्रमो यैस्तेषु भूयिष्ठानि बहुतमानि सम्भाव्यानि श्लाघ्यानि फलानि येषां तेष्वमीषु पादपेष्वाश्रमवृक्षेषु सुपुत्रेष्विव स्थिता तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः।

अन्वयः—अधुना तस्य अतिथीनां सपर्या छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेषु अमीषु पादपेषु सुपुत्रेषु इव स्थिता।

वाच्य०—अधुना तस्य अतिथीनां सपर्यया छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेषु अमीषु पादपेषु सुपुत्रेष्विव स्थितया 'भूयते' यद्वा स्थीयते (भाववा०)।

चन्द्रिका अधुना सम्प्रति तस्य शरभङ्गर्षेः, सम्बन्धसामान्ये षष्ठी, अतिथिनां प्राघुणिकानां सपर्या अर्चनम्, आतिथ्यमित्यर्थः। छायया अनातपेन, विनीतः अपाकृतः, अध्वपरिश्रमः मार्गखेदः, भूयिष्ठानि बहूनि सम्भाव्यानि सरसानि, स्वादूनि, फलानि येषु तेषु, अमीषु एतेषु, पादपेषु तपोवनतरुषु, सुपुत्रेषु इव आज्ञाकारितनयेषु यथा। स्थिता विद्यमाना, अस्तीति शेषः।

समासः छायया विनीतः (अध्वनः परिश्रमः अध्वपरिश्रमः, ष० त०) अध्वपरिश्रमो यैस्ते छायाविनीताध्वपरिश्रमाः (बहु०), तेषु छायाविनीताध्वपरिश्रमेषु। भूयिष्ठानि सम्भाव्यानि फलानि येषु (त्रिपदबहु०) ते भूयिष्ठसम्भाव्यफलाः, तेषु भूयिष्ठसम्भाव्यफलेषु। पादैः पिबन्तीति पादपाः, तेषु पादपेषु।

कोशः—'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः।' 'पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च।' 'सस्ये हेतुकृते फलम्' 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते। प्राघूणिकः प्राघुणकः' 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः।' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः।

भावार्थः—यथा म्रियमाणः पिता सत्पुत्रेषु अतिथिसत्कारादिकस्य प्रातिभवं

( जिम्मेदारी ) निदधाति तथैव दिव्यलोकं जिगमिषुः शरभङ्गमुनिः तदाश्रमवृक्षेषु अभ्यागतानां मार्गश्रमस्य छायया दूरीकरणस्य स्वादुफलैश्च तेषां सन्तर्पणस्य चोत्तरदायित्वं निहितवानिव पादपा अतिथीन् सत्कुर्वन्ति ।

**हिन्दीश्लोकार्थः**—जैसे सत्पुत्र पर पिता के अनन्तर अतिथिसत्कारादि की जिम्मेदारी रहती है ऐसे ही शरभङ्ग मुनि के दिव्यलोक पधारने पर उनके आश्रम के वृक्षों पर अतिथियों के मार्गश्रम छाया से दूर कर स्वादुफलों से उनका आतिथ्य करने की जिम्मेदारी रह गई है ॥ ४६ ॥

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥

**सञ्जीविनी**—धारेति । धारा निर्झरधाराः, यद्वा, धारया सातत्येन स्वनोद्गारि-दर्येव मुखं यस्य सः । शृङ्गं शिखरं विषाणं च तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्को वप्रक्रीडासक्तपङ्को यस्य सः । असौ चित्रकूटो हे बन्धुरगात्रि ! उन्नतानताङ्गि ! 'बन्धुरं तून्नतानतम्' इत्यमरः । दृप्तः ककुद्मान्वृषभ इव मे चक्षुर्बध्नात्यनन्यासक्तं करोति ।

**अन्वयः**—धारास्वनोद्गारिदरीमुखः शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः असौ चित्रकूटः हे बन्धुरगात्रि ! दृप्तः ककुद्मानिव मे चक्षुः बध्नाति ।

**वाच्य०**—धारास्वनोद्गारिदरीमुखेन शृङ्गाग्रलग्नाम्बुदवप्रपङ्केन अमुना चित्र-कूटेन दृप्तेन ककुद्मता इव मे चक्षुः बध्यते ( कर्मवा० ) ।

**चन्द्रिका**—धाराणां झरप्रवाहाणां, स्वनोद्गारि ध्वनिप्रादुर्भावकम्, दर्येव कन्दर एव मुखं यस्यैवम्भूतः, अथवा धारया नैरन्तर्येण स्वनोद्गारि शब्दकारि—इति व्याख्येयम् । शृङ्गाग्रे शिखराग्रभागे विषाणमुखभागे च । उपमानभूतककुद्मतोऽपि श्लिष्टविशेषणमेतत् प्राचीनञ्च । लग्नः संसक्तः, अम्बुद एव मेघ एव, वप्रपङ्कः वप्रक्रीडाङ्कितकर्दमः, 'उत्खातकेलिः क्रीडाद्यैर्वप्रक्रीडा निगद्यते ।' इति शब्दार्णवः । ककुद्मत्यपि योजनायेदं रूपकम्, यस्यैवम्भूतः, असौ एषः, चित्रकूटः चित्रकूटगिरिः, यत्र श्रीरामचन्द्रेण सदारानुजेन प्रथमं वासः कृतः । हे बन्धुरगात्रि ! हे यथोचित-नतोन्नतशरीरे ! सीते ! दृप्तः मत्तः, ककुद्मानिव बलीवर्दो यथा, मे मम, चक्षुः नेत्रम् बध्नाति आकर्षति, सन्नह्यति, चित्रकूट एव मे दृष्टिः संल्लग्नान्यत्र गन्तुं नेच्छतीवेत्यर्थः । उपमालङ्कारः ।

**समासः**—धाराणां ( धारया वा ) स्वनम् उद्गिरतीति धारास्वनोद्गारि, दर्येव मुखं दरीमुखम् ( कर्म० ), धारास्वनोद्गारि दरीमुखं यस्य ( बहु० ) सः धारास्वनोद्गारिदरीमुखः । शृङ्गस्य ( शृङ्गयोश्च—ककुद्मत्पक्षे ) अग्रं शृङ्गा-ग्रम् (ष०त०), शृङ्गाग्रे लग्नः शृङ्गाग्रलग्नः (स० त०), वप्रस्य पङ्कः वप्रपङ्कः, अम्बु ददातीति अम्बुदः, अम्बुद एव वप्रपङ्कः (कर्म०) अम्बुदवप्रपङ्कः ।

शृङ्गाग्रलग्नः अम्बुदवप्रपङ्कः यस्य ( बहु० ) सः शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः । बन्धुरं गात्रं यस्याः सा ( बहु० ) बन्धुरगात्री, तत्सम्बुद्धौ हे बन्धुरगात्रि ! ककुत् अस्यास्तीति ककुद्मान् । चित्राणि कूटानि ( शिखराणि ) यस्य (बहु०) सः चित्रकूटः ।

कोशः—'ध्वनिध्वानरवस्वनाः ।' 'दरी तु कन्दरो वा स्त्री' 'शृङ्गं प्राधान्यसान्वोश्च' ( चकारेण विषाणमपि समुचितम् ) । 'पुरोऽधिकमुपर्यग्राणि' 'पङ्कोऽस्त्री शादकर्दमौ' 'बन्धुरं तून्नतानतम्' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।' 'ईक्षणं चक्षुरक्षिणी' 'ववा यथा तथेवैवं साम्ये' 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूममस्त्रियाम् ।।' इत्यमरः ।

भावार्थः—चित्रकूटगिरिरयं मदमत्तवलीवर्द इव दृष्टिमाकर्षति । हे सुन्दरि ! एष चित्रकूटः दरीमुखेन सततं धारापातस्य नादं करोति, मत्तवृषभोऽपि प्रायः नादं कुरुते । एतस्योच्चशिखरोपरिभागे मेघखण्डो लग्नः संदृश्यते, एवमेव वृषभशृङ्गाग्रभागे उत्खातकेलिसंलग्नः पङ्कखण्डो दृश्यते । उभयान्वयाय शृङ्गशब्दः क्लिष्टः प्रयुक्तः, एवमम्बुदे वप्रपङ्करूपणेनाभेदः सम्पादितः । एतादृशश्चित्रकूटपर्वतः समुद्धतवलीवर्द इव प्रसह्य दृष्टिं स्वस्मिन्निदधाति । कियान्मनोरमोऽयं गिरिरिति भावः ।

हिन्दीश्लोकार्थः—झरनों की धाराओं से जिसकी गुफारूपी मुख से ध्वनि निकल रही है (ध्वनि निकलना ( रंभाना ) सांड़ के मुख से भी है) और जिसके शृङ्ग में ( सींग में भी ) लगा बादल ( का टुकड़ा ) सींग और खुरों से खोदने के खेल में लगा हुआ कीचड़ सा लग रहा है—ऐसा यह चित्रकूटपर्वत मदमस्त सांड़ की तरह मेरी दृष्टि को अन्यत्र से हटाकर अपने में ही बाँध देता है ।।४७।।

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ४८ ॥

सञ्जीविनी—एषेति । प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा विदुरस्यान्तरस्य मध्यवर्त्यवकाशस्य भावात्तन्वी दूरदेशवर्तित्वात्तनुत्वेनावभासमाना मन्दाकिनी नाम काचिच्चित्रकूटनिकटगैषा सरित् गोपकण्ठेन भूमेः कण्ठगता मुक्तावलीव भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वं च गम्यते ।

अन्वयः प्रसन्नस्तिमितप्रवाहा विदूरान्तरभावतन्वी एषा मन्दाकिनी सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावलीव भाति ।

वाच्य०—प्रसन्नस्तिमितप्रवाहया विदूरान्तरभावतन्व्या एतया मन्दाकिन्या सरिता नगोपकण्ठे भूमेः कण्ठगतया मुक्तावल्येव भायते । ( भाववा० ) ।

चन्द्रिका—प्रसन्नः विमलः, स्वच्छः, स्तिमितः निश्चलः, स्तब्धः प्रवाहः निरन्तरगमनं यस्याः सा तथाभूता । विदूरस्य विप्रकृष्टस्य, व्यवहितस्य अन्तरस्य अवकाशस्य, भावात् सत्त्वात्, तन्वी कृशा, दूरस्थितत्वात् कृशेति दृश्यमानेत्यर्थः ।

एषा इयम्, मन्दाकिनी वियद्गङ्गा, चित्रकूटगिरेरधस्तत् प्रवहन्ती मन्दाकिनीति प्रख्याता नदीत्यर्थः। सरित् नदी, नगोपकण्ठे पर्वतनिकटे, भूमेः धरायाः, कण्ठगता ग्रीवस्थिता, मुक्तावलीव मौक्तिकमाला यथा हार इव, भाति शोभते।

**समासः**—प्रसन्नः स्तिमितः प्रवाहः यस्याः ( बहु०त्रिपदः ) सा प्रसन्नस्तिमितप्रवाहा। विदूरञ्च तत् अन्तरञ्च विदूरान्तरम् ( कर्म० ), विदूरान्तरस्य भावः ( ष० त० ) विदूरान्तरभावः, विदूरान्तरभावात् तन्वी ( पं० त० ) विदूरान्तरभावतन्वी। नगस्य उपकण्ठं नगोपकण्ठम् ( ष० त० ), तस्मिन् नगोपकण्ठे ( 'तृतीयासप्तम्योर्बहुलम्' इत्यनेन सप्तमीश्रवणम् )। यद्वा अमरानुसारम् 'उपकण्ठः पुमान्।' मुक्तानाम् आवलिः मुक्तावलिः ( ष० त० ), कण्ठं गता कण्ठगता ( द्वि० त० )।

**कोशः**—'प्रसन्नोऽच्छः' 'प्रवाहस्तु प्रवृत्तिः स्यात्' 'नदी सरित्।' 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।' 'भावः सत्तास्वभावाभिप्रायश्चेष्टात्मजन्मसु।' 'दभ्रं कृशं तनु' 'मन्दाकिनीवियद्गङ्गा' 'शैलवृक्षौ नगावगौ' 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्।' 'हारो मुक्तावली' 'कण्ठो गलोऽथ ग्रीवायाम्' 'भूर्भूमिरचलाऽनन्ता' इत्यमरः।

**भावार्थः**—चित्रकूटपर्वताधः प्रवहन्ती स्वच्छनिश्चलप्रवाहवती दूरात् कृशा दृश्यमाना एषा मन्दाकिनी नदी भूम्याः पर्वतरूपकण्ठे लम्बमानहार इव भासते। पर्वतरूपेण कण्ठः समुत्थितोऽस्ति भूमेः।

**हिन्दीश्लोकार्थः**—स्वच्छ और निश्चलप्रवाहवाली, दूर से देखने से पतली-सी लगनेवाली यह मन्दाकिनी नदी पर्वत के समीप भाग में ऐसी शोभा दे रही है जैसे भूमि के गले में हार हो ॥ ४८ ॥

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य।
यवाङ्कुरापाण्डुकपोलशोभी मयाऽवतंसः परिकल्पितस्ते ॥४९॥

**सञ्जीविनी**—अयमिति। गिरेः समीपेऽनुगिरम्। "गिरेश्च सेनकस्य" इति समासान्तष्टच्प्रत्ययः। सुजातः स तमालोऽयं दृश्यते। यस्य तमालस्य। शोभनो गन्धो यस्य तत्सुगन्धि। "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारः समासान्तः। प्रवालं पल्लवमादाय मया ते यवाङ्कुरवदा पाण्डौ कपोले शोभी शोभते यः सोऽवतंसः कर्णालङ्कारः परिकल्पितः।

**अन्वयः**—अनुगिरं सुजातः अयं तमालः यस्य सुगन्धि प्रवालम् आदाय मया यवाङ्कुरापाण्डुकपोलशोभी अवतंसः ते परिकल्पितः।

**वाच्य०**—अनुगिरं सुजातेन अनेन तमालेन भूयते ( भाव० ) यस्य सुगन्धि प्रवालम् आदाय अहं यवाङ्कुरपाण्डुकपालशोभिनम् अवतंसं परिकल्पिवान्। ( कर्तृ० )

**चन्द्रिका**—अनुगिरं पर्वतसमीपे, सजातः सुन्दरः, अयं एषः तमालः कालस्कन्धतरुः, अस्ति। यस्य तमालस्य, सुगन्धि शोभनसौरभयुक्तम्, प्रवालं

किसलयम्, आदाय अवचित्य, गृहीत्वा, मया, यवाङ्कुरवत् शितशूकप्ररोहवत् 'शितशूकयवौ समौ' इत्यमरः। आपाण्डवोः ईषत्पाण्डुरयोः, कपोलयोः गण्डस्थलयोः शोभते भासते इति तादृशः, अवतंसः कर्णभूषणम्, परिकल्पितः रचितः, आसीदिति शेषः।

समासः—गिरेः समीपे अनुगिरम् ( अव्ययी० )। सु शोभनं जातं ( जन्म ) यस्य ( बहु० ) सुजातः। शोभनो गन्धो यस्य तत् सुगन्धि ( बहु० ), तत् तदेव। यवस्य अङ्कुरः यवाङ्कुरः ( ष० त० ), यवाङ्कुरवत् आपाण्डु यवाङ्कुरापाण्डू ( कर्म० )। यवाङ्कुरापाण्डू च तौ कपोलौ च ( कर्म० ) यवाङ्कुरापाण्डुकपोलौ। यवाङ्कुरापाण्डुकपालयोः शोभते इति यवाङ्कुरापाण्डुकपोलशोभी ( उपपदसमा० )।

कोशः—'कालस्कन्धस्तमालः स्यात्' 'प्रवालमङ्कुरेऽप्यस्त्री' 'शितशूकयवौ समौ।' 'अङ्कुरोऽभिनवोद्भिदि' 'हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः।' 'अधस्ताच्चिवुकं गण्डौ कपोलौ' 'अवतंसः कर्णभूषणम्' इत्यमरः।

भावार्थः—एष पर्वतोपत्यकायां सुन्दरः स तमालवृक्षोऽस्ति, यस्य सुरभिपल्लवौ अवचित्याहं तव श्वेतरक्तवर्णयोः गण्डस्थलयोः शोभाधायके कर्णाभरणे सम्पादितवान्। मूले प्रवालावतंसयोरेकवचनं जात्यभिप्रायेण। एककर्णभूषणं न तावद् व्यवहारानुगुणम्, नाप्येकेन प्रवालेनोभयोः कर्णयोरवतंसनं सुकरम्।

हिन्दीश्लोकार्थः—यह पर्वत के समीपवर्ती और सुन्दर तमाल वृक्ष वही है, जिसको सुगन्धि पल्लव लेकर मैंने तुम्हारे लाल-गोरे गाल पर शोभा देने वाला कान का आभूषण बनाया था। अर्थात् पल्लवों को मैंने कानों में खोस दिया था, जिससे श्वेतरक्त गालों पर कान्ति आती थी॥ ४९॥

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात्फलबन्धिवृक्षम्।
वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम्॥ ५०॥

सञ्जीविनी—अनिग्रहेति। अनिग्रहत्रासा दण्डभयरहिता अपि विनीताः सत्त्वा जन्तवो यस्मिंस्तत्। अपुष्पलिङ्गात्पुष्परूपनिमित्तं विनैव फलबन्धिनः फलग्राहिणो वृक्षा यस्मिंस्तत्। अत एवाविष्कृतोदग्रतरप्रभावमत्रेर्मुनेस्तपसः साधनं वनमेतत्।

अन्वयः—अनिग्रहत्रासविनीतसत्त्वम् अपुष्पलिङ्गात् फलबन्धिवृक्षम् आविष्कृतोदग्रतरप्रभावम् अत्रेः तपःसाधनं वनम् एतद् अस्ति।

वाच्य०—अनिग्रहत्रासविनीतसत्त्वेन अपुष्पलिङ्गात् फलबन्धिवृक्षेण आविष्कृतोदग्रतरप्रभावेण अत्रेः तपस्साधनेन एतेन वनेन भूयते ( भाव० )।

चन्द्रिका—अनिग्रहत्रासाः शासनभीतिशून्याः, अपि विनीताः प्रश्रिताः, सत्त्वाः प्राणिनो यस्मिन् तथोक्तम्। अपुष्पलिङ्गात् कुसुमोद्गमं विनैव, फलबन्धिनः फलवन्तः, वृक्षाः तरवः यस्मिन् तादृशम्। आविष्कृतः प्रकटितः, उदग्रतरः अत्यन्तोत्कृष्टः प्रभावः सामर्थ्यं येन तादृशम्। अत्रेः एतन्नामकमुनेः, तपस्साधनं

तपस्याकारणम्, अधिष्ठानस्य (देशस्य) प्रथमकारणत्वात्। वनम् आश्रमः, एतदस्ति इदं वर्तते।

समासः—न निग्रहात् त्रासः येषां (बहु०) ते अनिग्रहत्रासाः। अनिग्रहत्रासाश्च ते विनीताश्च (विशेषणयोरपि वैवक्षिकविशेषणविशेष्यभावमादाय कर्मधारयः शीतोष्णमित्यत्रेव) अनिग्रहत्रासविनीताः सत्त्वाः यस्मिन् (बहु०) तत् अनिग्रहत्रासविनीतसत्त्वम्। पुष्पाणां लिङ्गं पुष्पलिङ्गम् (ष० त०), न पुष्पलिङ्गम् अपुष्पलिङ्गम् (नञ्त०), तस्मात् अपुष्पलिंगात्। फलानि बध्नन्तीति फलबन्धिनः, फलबन्धिनः वृक्षाः यस्मिन् तत् फलबन्धिवृक्षम् (बहु०)। तपसः साधनं (ष० त०) तपस्साधनम्। आविष्कृतः उदग्रतरः (अधिकमुदग्रः) प्रभावः येन तत् (बहु०) आविष्कृतोदग्रतरप्रभावम्।

कोशः—'अभ्युपपत्तिरनुग्रहः' निग्रहस्तद्विरुद्धः स्यात्' 'दरस्त्रासो भीतिर्भीः साध्वसं भयम्।' 'निभृतविनीतप्रश्रिताः समाः।' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्रीति जन्तुषु।' 'स्त्रियः सुमनसः पुष्पम्' 'लिङ्गं चिह्नशेफसोः' 'सस्ये हेतुकृते फलम्' 'वृक्षो महीरुहः शाखी' 'प्राकाश्ये प्रादुराविः स्यात्' 'उच्चप्रांशून्नतोदग्राः' 'स प्रतापः प्रभावश्च यत्तेजःकोशदण्डजम्।' 'गहनं काननं वनम्।' इत्यमराः।

भावार्थः—अस्मिन् वने महामुनिरत्रिस्तपोऽनुतिष्ठति। अत एवाऽत्र प्राणिनः विनम्राः सन्ति। दण्डभयं विनैव पुष्पोद्गमं विनैवात्र प्रथममेव तरुषु फलानि उद्भवन्ति। इदं वन महर्षेः उत्कृष्टं प्रभावं प्रकटयति।

हिन्दीश्लोकार्थः—दण्डभय के विना ही जहाँ प्राणी विनम्र हैं, विना फूल हुए ही जहाँ पेड़ों पर फल उत्पन्न होते हैं, जहाँ अधिक उत्कृष्ट प्रभाव प्रकटित होता है, ऐसा महर्षि अत्रि का तपोवन यह है ॥ ५० ॥

**अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम्।**
**प्रवर्तयामास किलानुसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥**

सञ्जीविनी—अत्रेति। अत्र वनेऽनुसूयात्रिपत्नी। सप्त च ऋषयश्च सप्तर्षयः। "दिक्संख्ये संज्ञायाम्" इति तत्पुरुषसमासः। तेषां हस्तैरुद्धृतानि हेमपद्मानि यस्यास्तां त्र्यम्बकमौलिमालां हरशिरःस्रजं त्रिस्रोतसं भागीरथीं तपोधनानामृषीणामभिषेकाय स्नानाय प्रवर्तयामास प्रवाहयामास। किलेत्यैतिह्ये।

अन्वयः—अत्र अनुसूया सप्तर्षिहस्तोद्धृतहेमपद्मां त्र्यम्बकमौलिमालां त्रिस्रोतसं तपोधनानाम् अभिषेकाय प्रवर्तयामास किल।

वाच्य०—अत्र अनुसूयया सप्तर्षिहस्तोद्धृतहेमपद्मा त्र्यम्बकमौलिमाला त्रिस्रोताः तपोधनानाम् अभिषेकाय प्रावर्त्यत किल (कर्म०)।

चन्द्रिका—अत्र अस्मिन् तपोवने। अनसूया अत्रिधर्मपत्नी, सप्तर्षीणां मरीच्यादीनां सप्तानाम् ऋषीणाम्, (इमे ते सप्तर्षयः—"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥" यद्वा—

"कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथगौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥" इत्युक्ताः ) हस्तैः करैः, उद्धृतानि अवचितानि हेमपद्मानि काञ्चन-कमलानि यस्यास्तथोक्ताम् । त्र्यम्बकस्य त्रिलोचनस्य, मौलिमालां मस्तकमाल्य-भूताम्, त्रिस्रोतसं त्रिपथगाम्, गङ्गाम्, तपोधनानां तापसानाम्, अभिषेकाय स्नानाय, प्रवर्तयामास आनयामास । किलेति प्रसिद्धचादौ ।

समासः—सप्त च ते ऋषयश्च सप्तर्षयः, सप्तर्षीणां हस्ताः सप्तर्षिहस्ताः, सप्तर्षिहस्तैः उद्धृतानि ( हेम्नः पद्मानि ष० त०, हेमपद्मानि ) हेमपद्मानि यस्याः ( बहु० ) सा सप्तर्षिहस्तोद्धृतहेमपद्मा, ताम् । त्रीणि ( स्वर्गमर्त्यपाताल-गतानि ) स्रोतांसि यस्याः सा ( बहु० ) त्रिस्रोताः, तां त्रिस्रोतसम् । त्रीणि अम्बकानि ( नेत्राणि ) यस्य सः ( बहु० ) त्र्यम्बकः, त्र्यम्बकस्य मौलिः (ष०त०) त्र्यम्बकमौलिः, त्र्यम्बकमौलेः माला त्र्यम्बकमौलिमाला ( ष०त० ), ताम् ।

कोशः—'अभिषेकाप्लवौ स्नानम्' इति धनञ्जयः । ( सप्तर्षयो मरीच्यर्प-त्रिमुखाश्चित्रशिखण्डिनः ।' 'हस्तौ तु पाणिनक्षत्रे' 'सुवर्णं हेमहाटकम्' 'वा पुंसि पद्मं नलिनम्' 'त्र्यम्बकस्त्रिपुरान्तकः ।' 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।' 'माल्यं माला स्रजः' 'वार्तासम्भाव्ययोः किल' 'त्रिस्रोता भीष्मसूरपि' इत्यमरः ।

भावार्थः—अस्मिन् तपोवने सतीप्रवरा अनुसूया स्वपातिव्रत्यमहिम्ना अत्रत्यऋषीणां स्नानार्थं त्रिपथगां भागीरथीं प्रवाहयामास, यस्याः स्वर्णकमलानि परमात्मसमर्पणार्थं सप्तर्षयो दिवि अवचिन्वन्ति, या च भागीरथी गङ्गाधरस्य शिरसि मालेव भ्राजते । कदाचित् अनसूयायाः पातिव्रत्यपरीक्षार्थं ब्रह्मविष्णु-महेश्वराः गुप्तवेषेण मध्याह्नवेलायामभ्यागतवदागत्य अनुसूयां 'दिगम्बरा भूत्वास्मभ्यम् अन्नं परिवेषय' इत्यर्थयामासुः, तदा साध्वीमणिः साऽनुसूया पति-चरणोदकं तेषु संप्रोक्ष्य शिशून् सम्पाद्य स्वाश्रमे एव दुग्धाद्यैः खाद्यैः पोषयामास । तदानीं गङ्गाऽपि तदाश्रमं समागत्य तत्समीपे प्रववाह । तदनन्तरं चिराय स्वस्वामिनः अपश्यन्त्यः सरस्वतीलक्ष्मीपार्वत्यः सानुसन्धानं तत्रागत्य अनुसूयां वरादिभिः सन्तोष्य निजपतीन् प्रसन्नाया अनुसूयायाः सकाशात् पुनरलभन्त । अनुसूया तान् त्रीन् देवान् निजपतिचरणोदकप्रोक्षणेनैव बालभावान्मोचयामासेति पौराणिकी कथाऽत्रानुसन्धेया ।

हिन्दीश्लोकार्थः—अत्रि की पत्नी ( पतिव्रताशिरोमणि ) अनुसूया ने इस आश्रम में ऋषियों के स्नानार्थ गंगा जी को प्रवाहित किया, जिसके सुवर्ण कमलों को आकाश में सप्तर्षि पूजा के लिए तोड़ा करते थे और वह गंगा जी त्रिलोचन भगवान् के सिरपर माला के समान शोभा देती हैं ॥ ५१ ॥

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥५२॥

सञ्जीविनी—वीरासनैरिति । वीरासनैर्जयसाधनैः ध्यानं जुषन्ते सेवन्त इति

ध्यानजुषः, समाधिसेविन इत्यर्थः। तेषां तैरुपविश्य ध्यायतामृषीणां सम्बन्धिनः समध्यासितवेदिमध्या इदं वीरासनस्थानीयम्। अमी शाखिनोऽपि निवाते निष्कम्पतया योगाधिरूढा इव ध्यानभाज इव विभान्ति ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति। वीरासने वसिष्ठः—"एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम्। इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम्॥" इति

अन्वय.—वीरासनैः ध्यानजुषाम् ऋषीणां समध्यासितवेदिमध्याः अमी शाखिनः अपि निवातनिष्कम्पतया विभान्ति।

वाच्य०—वीरासनैः ध्यानजुषाम् ऋषीणाम् अमीभिः समध्यासितवेदिमध्यैः शाखिभिरपि निवातनिष्कम्पतया योगाधिरूढैरिव विभायते (भाववा०)।

चन्द्रिका—वीरासनैः योगासनविशेषैः, ध्यानजुषां चित्तैकाग्रतां विदधानानाम्, समाधिस्थानामिति यावत्, ऋषीणां मुनीनाम्, सत्यवचसां 'ऋषयः सत्यवचसः' इत्यमरात्। समध्यासितं सम्यग् आरूढम्, वेदिमध्यं परिष्कृतभूम्यवकाशं यैस्ते तथोक्ताः, अमी इमे, शाखिनोऽपि विटपिनोऽपि, तरवोऽपि, निवाते पवनशून्यस्थाने निष्कम्पतया निष्पन्दतया, अचञ्चलतया, योगाधिरूढा इव चित्तवृत्तिनिरोधरूप-योगाभ्यासरता यथा, विभान्ति, भासन्ते, प्रतीयन्ते।

समासः—वीराणि च तानि आसनानि च (कर्म०) वीरासनानि, तैः। ध्यानं जुषन्ते इति ध्यानजुषः, तेषां ध्यानजुषाम्। वेदीनां मध्यानि वेदिमध्यानि, समध्यासितानि वेदिमध्यानि यैस्ते (बहु०) समध्यासितवेदिमध्याः। शाखाम् आसां सन्तीति शाखिनः (मत्वर्थीय०)। कम्पात् निष्क्रान्ताः निष्कम्पाः (बहु०), निवाते निष्कम्पाः निवातनिष्कम्पाः (स० त०), निवातनिष्कम्पाणां भावः निवातनिष्कम्पता, तया निवातनिष्कम्पतया। योगेऽधिरूढाः योगाधिरूढाः।

कोशः—'आसनं द्विरदस्कन्धे पीठे यात्रासनेऽपि च।' इति विश्वः। 'ऋषयः सत्यवचसः' 'वेदिः परिष्कृता भूमिः' 'मध्यो स्त्री' 'निवातस्तु गतेऽनिले' 'शाखी विटपी पादपस्तरुः' इत्यमरः।

भावार्थः—वीरासनेन ध्यानं कुर्वतां निश्चलाङ्गानां मुनीनाम् आश्रमस्था एते वृक्षा अपि परिष्कृतोच्चभूमिस्थिता (एतद् वीरासनस्थानीयम्) वातोपद्रवा-भावात् निश्चलाः सन्तो योगाभ्यासिन इव भासन्ते। तपस्विसंबन्धादेतेष्वपि वृक्षेषु तपस्विगुणाः संक्रान्ताः 'संसर्गजा दोषगुणा भवन्ति' इत्युक्तिं स्मार-यन्तीति भावः।

हिन्दीश्लोकार्थः—वीरासनों में बैठकर (स्थिर होकर) ध्यान में लगे ऋषियों के चबूतरों पर खड़े ये आश्रम के वृक्ष भी वायु न होने के स्थान पर स्थित होने के कारण निश्चलता से योगाभ्यास में लगे योगियों जैसे लग रहे हैं॥ ५२॥

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥५३॥

**सञ्जीविनी**—त्वयेति । त्वया पुरस्तात्पूर्वं य उपयाचितः प्रार्थितः । तथा च रामायणे—"न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष पालयेन्मे व्रतं पतिः ॥" इति । श्याम इति प्रतीतः सवटोऽयं फलितः सन् । सपद्मरागो गारुडानां मणीनां मरकानां राशिरिव विभाति ।

**अन्वयः**—त्वया पुरस्तात् यः उपयाचितः श्याम इति प्रतीतः सोऽयं वटः फलितः सपद्मरागः गारुडानां मणीनां राशिरिव विभाति ।

**वाच्य०**—त्वं पुरस्तात् यम् उपयाचितवती, 'श्यामः' इति प्रतीतेन तेनानेन वटेन फलितेन 'सता' सपद्मरागाणां गारुडानां मणीनां राशिनेव विभायते ( भाववा० ) ।

**चन्द्रिका**—त्वया पुरस्तात् प्राक्, यः वटः, उपयाचितः अर्थितः, प्रणतः, श्याम इति श्यामनाम्नां प्रसिद्धः, स वटः अयं पुरोवर्ती, फलितः जातफलः 'सन् भवन्' सपद्मरागः पद्मरागमणिभिः रक्तवर्णैः सहितः, गारुडानां मरकतमणीनां हरिद्वर्णानाम्, राशिरिव पुञ्जो यथा, विभाति विद्योतते ।

**समासः**—पद्मरागैः सह वर्तते इति सपद्मरागः ( बहु० ) ।

**कोशः**—'प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ।' 'न्यग्रोधो बहुपाद् वटः' 'स्यान्निकायः पुञ्जराशी' 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ।' 'शोणरत्नं लोहितकः पद्मरागः' इत्यमरः ।

**भावार्थः**—त्वं प्रथमं मया सहात्रागता यं वटवृक्षं प्रार्थितवती श्याम इति नाम्ना प्रख्यातः सः सम्प्रति फलसभृतः स्वयं पत्रेषु हरिद्वर्णः फलेषु च रक्तवर्णः रक्तवर्णपद्मरागमणिभिः युक्तः हरिद्वर्णगारुडमणिराशिरिव भासते इति भावः ।

**हिन्दीश्लोकार्थः**—तुम प्रथम-प्रथम जिस वट वृक्ष से सौभाग्य के लिए प्रार्थना की थी, वह वट वृक्ष इस समय फल से भरा हुआ ऐसा लग रहा है जैसे लालमणि (पद्मराग) यों से मिला हुआ हरितवर्णवाली मरकत मणियों का ढेर हो ॥ ५३ ॥

'क्वचित्'—इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासङ्गमं वर्णयति—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥५४॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ।५५॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शवलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥५६॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥५७॥

सञ्जीविनी—क्वचिदित्यादि । हे अनवद्याङ्गि ! यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति । त्वं पश्य । केव क्वचित्प्रदेशे प्रभया लिम्पन्ति सन्निहितमिति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा सह गुम्फिता मुक्तामयी यष्टिरिव हारावलिरिव विभाति । अन्यत्र प्रदेशे इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां मालेव विभातीति सर्वत्र सम्बन्धः । क्वचित्कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । अन्यत्र कालागुरुणा दत्तपत्रा रचितमकरिकापत्रा भुवश्चन्दनकल्पिता भक्तिरिव क्वचिच्छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिकेव । अन्यत्र रन्ध्रेष्वालक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव क्वचित्कृष्णोरगभूषणा भस्माङ्गरागेश्वरस्य तनुरिव विभाति । शेषो व्याख्यातः । कलापकम् ।

अन्वयः—हे अनवद्याङ्गि ! यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा विभाति—पश्य । क्वचित् प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा मुक्तामयी यष्टिरिव, अन्यत्र इन्दीवरैः उत्खचितान्तरा सितपङ्कजानां माला इव, क्वचित् कादम्बसंसर्गवती प्रियमानसानां खगानां पङ्क्तिरिव, अन्यत्र कालागुरुदत्तपत्रा भुवः चन्दनकल्पिता भक्तिरिव, क्वचित् छायाविलीनैः तमोभिः शबलीकृता चान्द्रमसी प्रभेव, अन्यत्र रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखेव, क्वचिच्च कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुरिव विभाति ।

वाच्य०— ..भिन्नप्रवाहया गङ्गया...अनुविद्धया मुक्तामय्या यष्ट्येव... मालयेव, ..कादम्बसंसर्गवत्या ..पंक्त्येव,...कालागुरुदत्तया भुवः चन्दनकल्पितया भक्त्येव,...शबलीकृतया चान्द्रमस्या प्रभयेव,...नभःप्रदेशया शुभ्रया शरदभ्रलेखयेव, कृष्णोरगभूषणया भस्माङ्गरागया ईश्वरस्य तन्वेव भायते ( भाव० ) ।

चन्द्रिका—कलापकेन ( एकान्वयिश्लोकचतुष्टयेन ) गङ्गायमुनयोः सङ्गमम् उपमासप्तकेन वर्णयति । हे अनवद्याङ्गि ! हे निर्दुष्टावयवे !, हे सर्वाङ्गसुन्दरि !, यमुनातरङ्गैः कालिन्दीवीचिभिः, भिन्नप्रवाहा सपृक्तनिर्झरा । सितासितगङ्गा-यमुनासम्मिश्रस्रोतांसीत्यर्थः । गङ्गा भागीरथी विभाति विद्योतते—पश्य अवलोकय । वाक्यार्थः कर्म । केव विभातीति निरूपयति रामः—क्वचित् कुत्रचित् प्रभालेपिभिः कान्तिप्रसारकैः, इन्द्रनीलैः हरिद्वर्णमणिभिः, अनुविद्धा सममेव ग्रथिता, प्रोता, मुक्तामयी मौक्तिकी । तत्प्रकृतवचने मयट्प्रत्ययः, टित्वाच्च 'टिड्ढाणञ्०' इत्या-दिना ङीष् । यष्टिरिव मालेव, नीलमणिसह स्यूतो मुक्ताहार इवेत्यर्थः । अन्यत्र परत्र, इन्दीवरैः नीलकमलैः उत्खचितान्तरा प्रोतमध्या, सितपङ्कजानां श्वेतपद्मा-

नाम्, 'पुण्डरीकं सिताम्भोजम्' इत्यमरः। मालेव स्रगिव। क्वचित् कस्मिंश्चित् भागे, कादम्बसंसर्गवती असिताङ्गहंससंमिश्रा, प्रियमानसानां दयित मानससरसाम्, खगानां हंसपक्षिणाम्, श्वेताङ्गानाम्. पङ्क्तिरिव श्रेणिर्यथा, अन्यत्र अपरत्र, कालागुरुणा कृष्णवर्णागुरुणा, दत्तपत्रा निर्मितपत्राकारा। अलंकारार्थं चन्दनादिभिः शरीरादिषु विविधा रचनाः क्रियन्ते स्म पूर्वम्। भुवः भूमेः, चन्दनकल्पिता मलयजरचिता, भक्तिरिव आलेख्यं यथा, रचनेव। क्वचित् कस्मिंश्चन प्रदेशे, छायासु अनातपेषु, वृक्षादिप्रतिबिम्बेषु, विलीनैः छन्नैः, तमोभिः ध्वान्तैः, शबलीकृता किर्मीरिता, चित्रीकृता, 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।' इत्यमरः। चान्द्रमसी प्रभेव कौमुदीव, अन्यत्र इतरत्र, रन्ध्रेषु अवकाशेषु, छिद्रेषु, आलक्ष्याः ईषद् दृश्याः, नभःप्रदेशाः गगनभागाः यस्यास्तादृशी, शुभ्रा श्वेता शरदभ्रलेखेव शरत्कालिकमेघश्रेणीव, क्वचित् अन्यस्मिन् प्रदेशे कृष्णोरगाः कृष्णसर्पाः भूषणम् अलङ्कारः यस्याः सा, भस्माङ्गरागा भसिताङ्गलेपना, ईश्वरस्य हरस्य, तनुरिव गात्रं यथा, विभाति भासते। शुक्लकृष्णयोः गङ्गायमुनाप्रवाहयोः सङ्गमः विभिन्नोपमाभिः वर्णितः। कवेः प्रकृतिदर्शनप्रगल्भतासु कल्पनासु प्रतिबिम्बिता।

समासः—न अवद्यानि अनवद्यानि (नञ्त०), अनवद्यानि अङ्गानि यस्याः सा (बहु०) अनवद्याङ्गी, तत्सम्बुद्धौ हे अनवद्याङ्गि!, यमुनायाः तरङ्गाः यमुनातरङ्गाः (ष० त०), तैः यमुनातरङ्गैः। भिन्नाः प्रवाहा यस्याः (बहु०) सा भिन्नप्रवाहा। प्रभां लिम्पन्तीति प्रभालेपिनः, तैः प्रभालेपिभिः। मुक्ताः प्रचुराः यत्र सा मुक्तामयी। उत्खचितानि अन्तराणि यस्याः (बहु०) सा उत्खचितान्तरा। सितानि च तानि पङ्कजानि च (कर्म०) सितपङ्कजानि, तेषां सितपङ्कजानाम्। कादम्बानां संसर्गः अस्या अस्तीति (मत्वर्थीय०) कादम्बसंसर्गवती। प्रियं मानस येषां (बहु०) ते प्रियमानसाः, तेषां प्रियमानसानाम्। कालागुरुणा दत्तानि पत्राणि यस्याः (बहु०) सा कालागुरुदत्तपत्रा। चन्दनेन कल्पिता (तृ० त०) चन्दनकल्पिता। छायायां विलीनानि (स० त०) छायाविलीनानि, तैः। अशबला शबला सम्पद्यमाना कृता शबलीकृता। चन्द्रमस इयं चान्द्रमसी। नभसः प्रदेशाः (ष० त०) नभःप्रदेशाः, आ (ईषत्) लक्ष्यः नभःप्रदेशाः यस्याः (बहु०) सा आलक्ष्यनभःप्रदेशा। शरदः अभ्राणि (ष०त०) शरदभ्राणि, शरदभ्राणां लेखा (ष० त०) शरदभ्रलेखा। कृष्णाश्च ते उरगाश्च (कर्म०) कृष्णोरगाः, कृष्णोरगाः भूषण यस्याः (बहु०) सा कृष्णोरगभूषणा। भस्मनः अङ्गरागः यस्याः (बहु०) सा भस्माङ्गरागा।

कोशः—'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः। कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः॥' 'अङ्गं प्रतीकोऽवयवः' 'कालिन्दी सूर्यतनया यमुना शमन एव सा।' 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः।' 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगाः' 'स्युः प्रभारुग्रुचि' 'मौक्तिकम्। मुक्ता'

'इन्दीवरञ्च नीलेऽस्मिन्' 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च ॥' 'अवदातः सितो गौरः' 'माल्यं माला स्रजः' 'कादम्बः कलहंसः स्यात्' 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' 'खगे विहङ्गविहगविहङ्गमविहायसः ।' 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।' 'कालागुर्वगुरु स्यात्' 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' 'भूर्भूमिरचलानन्ता' 'छाया सूर्यप्रिया कान्तिः' 'प्रतिबिम्बमनातपः ।' 'राहौ ध्वान्ते गुणे तमः' 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।' 'शुक्लशुभ्रशुचिश्वेत–' 'अभ्रं मेघो वारिवाहः' 'रन्ध्रं श्वभ्रं वपा शुषिः ।' 'नभोऽन्तरिक्षं गगनम्' 'कृष्णे नीलासितश्यामकाल–' 'उरगः पन्नगो भोगी' 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम्' 'भूतिर्भसितभस्मनी' 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।' 'ईश्वरः शर्व ईशानः' 'वा यथा तथैवैवं साम्ये' इत्यमरः ।

भावार्थः—हे सुन्दराङ्गि ! पश्य, इमाम् अपूर्वां गङ्गायमुनासङ्गमच्छटाम् । यमुनायाः असितः प्रवाहः श्वेतेन भागीरथीप्रवाहेण संसृष्टः विभिन्नभागेषु विविधां शोभामुपहरति । क्वचित् मौक्तिकहारः कान्तिप्रसारिभिः इन्द्रनीलमणिभिः सहप्रोत इव भाति गङ्गायमुनाप्रवाहसङ्गमः, कस्मिंश्चित् प्रदेशे नीलकमलैः मध्ये मध्ये ग्रथिता श्वेतनलिनमालेव, कुत्रचन नीलहंससंमिश्रा श्वेताङ्गहंसपङ्क्तिरिव, क्वचन कालागुरुपत्ररचनासंमिलिता पृथिव्याः श्वेतचन्दनचित्रणमिव, कुत्रचित् छायासु तमःकर्बुरिता चन्द्रज्योत्स्ना यथा, कर्हिचन छिद्रेषु किञ्चिद् दृश्यमाननभोभागा शारदमेघराजिरिव, क्वचन तु भस्मसंलिप्ता कृष्णसर्पालंकृता हरतनुरिव अनयोः प्रवाहसङ्गमः प्रतिभासते इति भावः ।

हिन्दीश्लोकार्थः हे सुन्दराङ्गि ! देखो, यमुना की नील तरङ्गें गंगाजी की श्वेत लहरों से मिलकर कैसी छटा उत्पन्न कर रही हैं—कहीं उज्ज्वल कान्ति नीलम जिसमें जड़े हों ऐसे मोतियों के हार जैसी, कहीं पर नीलकमल (इन्दीवर) जिसमें बीच-बीच में गुम्फित हों ऐसे श्वेतपद्मों ( पुण्डरीक ) की माला के समान कहीं काले हंसों से मिश्रित श्वेताङ्ग हंसों की कतार के समान, एक स्थान में, काले अगुरु से मध्य मध्य में जहाँ चित्रण है ऐसी भूमि की श्वेतचन्दन की रचना जैसी, कहीं छाया में इकट्ठे हुए अन्धकारों से बनी चितकबरी चाँदनी की तरह, और कहीं छेदों में आकाश की नीलिमा जिसमें से दिखाई देती है ऐसी निर्मल शरदृतु की मेघ पंक्ति की तरह, कहीं तो भस्म पोतने से श्वेत, काले सर्प लिपटे रहने से मध्य-मध्य में काले—महादेव की देह जैसी विचित्र शोभा दिखाई दे रही है इन गंगायमुना-नदियों के संगम की ॥ ५४–५७ ॥

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनाऽपि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥५८॥

सञ्जीविनी—समुद्रेति । अत्र समुद्रपत्न्योर्गङ्गायमुनयोर्जलसन्निपाते सङ्गमे-

ऽभिषेकात्स्नानात् पूतात्मनां शुद्धात्मनां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन विनाऽपि तनुत्यजां प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगो नास्ति किल। अन्यत्र ज्ञानादेव मुक्तिः। अत्र तु स्नानादेव मुक्तिरित्यर्थः।

अन्वयः—समुद्रपत्न्योः जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वावबोधेन विना अपि भूयः शरीरबन्धः नास्ति किल।

वाच्य०—समुद्रपत्न्योः जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वावबोधेन विनाऽपि भूयः शरीरबन्धेन न भूयते ( भाववा० ) किल।

चन्द्रिका—समुद्रपत्न्योः कालिन्दीभागीरथ्योः जलसन्निपाते प्रवाहसम्भेदे, वारिसंयोगे, अभिषेकात् स्नानात् आप्लवात्, पूतात्मनां पवित्रमनसाम्, तनुत्यजानां देहत्यागिनाम्, तत्त्वावबोधेन विनापि तत्त्वज्ञानमन्तरेणापि, 'पृथग्विना—' इत्यादिना विकल्पेन तृतीया, 'पञ्चमीद्वितीये अनुवर्तेते' इत्युक्तत्वात्। 'अपि ऋते ज्ञानान्न मुक्तिः' इति प्रमाणविरोधे। भूयः पुनः, द्वितीयवारम्, शरीरबन्धः देहग्रहणम्, नास्ति किल न वर्तते खलु।

समासः—समुद्रस्य पत्न्यौ ( ष० त० ) समुद्रपत्न्यौ, तयोः समुद्रपत्न्योः। जलयोः सन्निपातः ( ष० त० ) जलसन्निपातः। तस्मिन्। पूत आत्मा येषां ते पूतात्मानः, तेषां पूतात्मनाम्। तनुं त्यजन्तीति तनुत्यजः, तेषां तनुत्यजाम्। तत्त्वस्य अवबोधः तत्त्वावबोधः, तेन तत्त्वावबोधेन। शरीरस्य बन्धः शरीरबन्धः ( ष० त० )।

कोशः—'समुद्रोऽब्धिरकूपारः' 'पत्नी पाणिगृहीती च' 'सलिलं कमलं जलम्' 'पूतं पवित्रं मेध्यञ्च' ( 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥' इति धरणिः। ) 'स्त्रियां मूर्तिस्तनुस्तनूः' 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने।' 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।' 'शरीरं वर्ष्मविग्रहः' इत्यमरः।

भावार्थः—अत्र गङ्गायमुनयोः सङ्गमस्थाने स्नानेन पवित्रात्मनां तत्त्वज्ञानं विनाऽपि ससारबन्धान्मोक्षो भविष्यति। तादृशमिदं लोकोत्तरं धामेति भावः। 'ये वै तन्वा अँविसृजन्ति धीरास्तेजनासो अमृतत्वं भजन्ते' इति श्रुतिप्रामाण्यादत्र विसृष्टशरीराणां ज्ञानमन्तराऽपि मुक्तिरवश्यम्भाविनीति पुनः शरीरान्तरसम्बन्धो न भवतीति।

हिन्दीश्लोकार्थः—गङ्गायमुना के जल जहाँ मिलते हैं ऐसे इस संगमस्थान पर स्नान करने से जिनकी आत्मा पवित्र हो जाती है, उनको तत्त्वज्ञान के बिना भी मुक्ति हो जाती है। पुनः देहसंबन्ध नहीं होता—यह प्रमाण सिद्ध है ॥५८॥

पुरं निषादाधिपतेरिदं तद् यस्मिन् मया मौलिमणिं विहाय।
जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥

**सञ्जीविनी**—पुरमिति। निषादाधिपतेर्गुहस्य तत्पुरमिदम्। यस्मिन्पुरे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीषु सुमन्त्रः। 'हे कैकेयि! तव कामा मनोरथाः फलिताः सफला जाताः' इत्यरुदत्। 'रुदिर् अश्रुविमोचने' इति धातोर्लुङ्।

**अन्वयः**—निषादाधिपतेः तत् पुरम् इदम्, यस्मिन् मया मौलिमणिं विहाय जटासु बद्धासु सुमन्त्रः 'कैकेयि! तव कामाः फलिताः' इत्यरुदत्।

**वाच्य०**—निषादाधिपतेः तत् पुरम् इदम्, यस्मिन् मया मौलिमणिं विहाय, जटासु बद्धासु सुमन्त्रेण 'कैकेयि! तव कामैः फलितैः अभूयत' इत्यरोदि (भाववा०)।

**चन्द्रिका**—निषादाधिपतेः निषादराजस्य गुहस्य, तत् पूर्वानुभूतम्, पुरं नगरम्, इदम् एतत्, यस्मिन् पुरे मया मौलिमणिं केशगतम् अलंकारम्, विहाय उत्सृज्य, जटासु सटासु, असंयतकचेष्वित्यर्थः। बद्धासु विहितासु, कृतासु, सतीषु। 'ओदनं पच' इतिवदयं भाक्तः प्रयोगः, 'व्रतिनस्तु सटा जटा' इत्यमरः। सुमन्त्रः वृद्धामात्यः, हे कैकेयि! हे केकयपुत्रि! इति बुद्धिस्थायाः सम्बोधनम्। तव कामाः मनोरथाः, अभिलाषाः, वनवासिवेषेन रामस्य वनगमनादिरूपाः इत्यर्थः, फलिताः सार्थकाः सम्वृत्ताः, इति एवमभिधाय, अरुदत् अश्रुमोचनमकार्षीत्। तादृशकरुणाजनकघटनां विलोक्य द्रुतान्तःकरणः सुमन्त्रो भृशं चक्रन्देत्यर्थः।

**समासः**—निषादानाम् अधिपतिः निषादाधिपतिः (ष० त०), तस्य निषादाधिपतेः मौलेः मणिः मौलिमणिः, (ष० त०), तं मौलिमणिम्। केकयानां राजा कैकेयः, कैकयस्य अपत्यं स्त्री कैकेयी, तत्सम्बुद्धौ हे कैकेयि! पृषोदरादित्वात्साधुः।

**कोशः**—'निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे।' इति रभसः। 'अगारे नगरे पुरम्' 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः।' 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च।' 'मूले लग्नकचे जटा' 'कामोऽभिलापस्तर्षश्च' इत्यमरः।

**भावार्थः**—निषादराजस्य इदं तदेव नगरं यत्राहं शिरोगतमलङ्कारभूतं मणिं परित्यज्य केशान् जटारूपेण संश्लिष्टान् अकरवम्। चक्रवर्तिदशरथज्येष्ठनन्दनस्य ममेदं वनवासोपयोगिजटाधारणं विलोक्य कुलपरम्परागतमन्त्री वृद्धः पितृकल्पः सुमन्त्रः कैकेयीं संबोध्य तव मनोरथाः सफला जाताः इति वदन् मुक्तकण्ठं रुरोदेति भावः।

**हिन्दीश्लोकार्थः**—निषादराज गुह का वह नगर यही है, जहाँ पर सिरके आभूषण का मैंने वनवासोचित जटाएँ बाँधी तो मन्त्री सुमन्त्र 'हे कैकेयि! तुम्हारे मनोरथ पूर्ण हुए' ऐसा कहता हुआ रो पड़ा था॥ ५९॥

**पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः।**
**ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति॥ ६०॥**

**सञ्जीविनी**—पयोधरैरिति । पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरैः स्तनैर्निर्विष्ट उपभुक्तो हेमाम्बुजरेणुर्यस्य तत् । तत्र ताः क्रीडन्तीति व्यज्यते । ब्रह्मण इदं ब्राह्मणम् । "नस्तद्धिते" इति टिलोपः । ब्राह्मं सरो मानसाख्यं यस्याः सरय्वाः बुद्धेर्महत्तत्त्वस्याव्यक्तं प्रधानमिव कारणम् आप्तस्य वाच आत्मवाचा वेदाः । यद्वा बहुव्रीहिणा मुनयः उदाहरन्ति प्रचक्षते ।

**अन्वयः**—पुण्यजनाङ्गनानां पयोधरैः निर्विष्टहेमाम्बुजरेणु ब्राह्मं सरः, यस्याः बुद्धेः अव्यक्तम् इव कारणम् 'अस्तीति' आप्तवाच उदाहरन्ति ।

**वाच्य०**—पुण्यजनानां पयोधरैः निर्विष्टहेमाम्बुजरेणुना ब्राह्मेण सरसा, बुद्धेः अव्यक्तेनेव यस्याः कारणेन 'भूयते' इत्याप्तवाग्भिरुदाह्रियते ( कर्म० इत्यन्तो वाक्यार्थः कर्म ) ।

**चन्द्रिका**—पुण्यजनाङ्गनानां यक्षपत्नीनाम्, पयोधरैः स्तनैः, निर्विष्टाः भुक्ताः, संलेपिताः, हेमाम्बुजानां काञ्चनकमलानाम्, रेणवः धूलयः, परागाः यस्य तत् तथोक्तम् । 'निर्वेशो भृतिभोगयोः' इत्यमरः । ब्राह्मं ब्रह्मसम्बन्धि, सरः सरसी, 'कासारः सरसी सरः' इत्यमरः, मानससरोवरं ब्रह्मकमण्डलूत्पन्नमिति पौराणिकमाख्यानम् । यस्याः सरयूनद्याः, बुद्धेः महत्तत्त्वस्य, अव्यक्तमिव प्रकृतिर्यथा, कारणं हेतुः, इत्याप्तवाचः वेदवाण्यः, यद्वा आप्तवाग्विशिष्टा ऋषयः, उदाहरन्ति संगिरन्ते । भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहिताः वेदा यथार्थवक्तृत्वात् ( 'आप्तस्तु यथार्थवक्ता' तर्कसंग्रहोक्तेः ) आप्ताः, साक्षात्कृततत्त्वा ऋषयोऽपि आप्तवाचो भवितुमर्हन्ति । अत एवामरः 'ऋषयः सत्यवचसः' इत्यभाषिष्ट ।

**समासः**—पुण्यजनानाम् अङ्गनाः ( ष. त. ) पुण्यजनाङ्गनाः, तासां पुण्यजनाङ्गनानाम् । धरन्तीति धराः ( पचाद्यच् ) पयसां धराः पयोधराः, तैः पयोधरैः । हेम्नः अम्बुजानि हेमाम्बुजानि, हेमाम्बुजानां रेणवः ( ष त. ) हेमाम्बुजरेणवः, निर्विष्टा हेमाम्बुजरेणवः यस्य ( बहु० ) तत् निर्विष्टहेमाम्बुजरेणु । ब्रह्मण इदं ब्राह्मम् । आप्तानां वाचः ( ष. त. ) आप्तवाचः । आप्तस्य ( परमेश्वरस्य ) वाचः आप्तवाच इति वा । आप्ता वाग् येषां ( बहु० ) ते आप्तवाचः ।

**कोशः**—'पयः क्षीरं पयोऽम्बु च' 'यातुधानः पुण्यजनो नैरृतो यातुरक्षसी' ('यक्षैकपिङ्गैलनिलश्रीदपुण्यजनेश्वराः ।' इति कुबेरपर्यायः) 'विशेषास्त्वङ्गना भीरुः' 'हिरण्यं हेम हाटकम्' 'रेणुर्द्वयो स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ।' 'कासारः सरसी सरः ।' 'हेतुर्ना कारणं बीजम्' इत्यमरः ।

**भावार्थः**—यस्य काञ्चनकमलपरागाः यक्षस्त्रीणां स्तनेषु स्नानजलक्रीडादौ संलग्ना भवन्ति तादृशं ब्राह्मसरः ( मानससरोवरः ) यस्याः सरयूनद्याः यथा-प्रधानं महत्तत्त्वस्य कारणं तथा कारणमामनन्ति वेदाः । मानसं सरः ब्रह्मकमण्डलोर्निर्गतमिति स्कान्दपुराणे मानसखण्डे सविस्तरं वर्ण्यते । तत्रैव अलकापुरो

यक्षराज कुबेरराजधानी वर्तते। अत एव यक्षस्त्रीणां सुवर्णपद्मपरागभोगः सुप्रापः। तादृशं मानससरः अस्याः अयोध्यायां प्रवहन्त्याः सरयूनद्याः कारणमिति उत्कर्षः श्रुतिप्रसिद्ध इति भावः। सांख्यसिद्धान्ते प्रकृतेः महत्तत्वस्य कारणता वर्णितेति दत्तम्। स्तनैः जलविहारादौ ब्राह्मसरसः सरयूकारणतायाः।

हिन्दीश्लोकार्थः—जिस मानससर के सुवर्णपद्मों के पराग यक्षस्त्रियों के स्तनों में लग जाते हैं वैसा मानस सर सरयू नदी का वैसा ही कारण है, जैसा कि प्रकृति बुद्धितत्त्व ( महत्तत्त्व ) का कारण है ऐसा वेद अथवा मुनि लोग कहते हैं ॥ ६० ॥

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम्।
तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥६१॥

सञ्जीविनी—जलानीति। यूपः संस्कृतः पशुबन्धनार्हो दारुविशेषः। तीरनिखातयूपा या सरयूतुरङ्गमेधा अश्वमेधास्तेष्ववभृथार्थमेवावतीर्णैरवरूढैरिक्ष्वाकुभिरिक्ष्वाकुगोत्रापत्यैः पूर्वैः। तद्राजत्वादणो लुक्। पुण्यतरीकृतान्यतिशयेन पुण्यानि कृतानि जलान्ययोध्यां राजधानीं नगरीमनुसमीपे तया लक्षितयेत्यर्थः। अनुशब्दस्य "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः" इत्यनेन कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। वहति प्रापयति।

अन्वयः—तीरनिखातयूपा या तुरङ्गमेधावभृथावतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि जलानि अयोध्यां राजधानीम् अनुवहति।

वाच्य०—तीरनिखातयूपया यया तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि जलानि अयोध्यां राजधानीम् अनु उह्यन्ते। ( कर्म० )।

चन्द्रिका—तीरे सरयूकुले, निखाताः निहिताः, यूपाः यज्ञियस्तम्भविशेषाः यस्याः एवम्भूता, या सरयूः तन्नामकनदी, तुरङ्गमेधेषु अश्वमेधयागेषु, अवभृथाय यज्ञान्तस्नानार्थम्, अवतीर्णैः अन्तःप्रविष्टैः, इक्ष्वाकुभिः इक्ष्वाकुराजगोत्रापत्यैः, अस्मत्पूर्वपुरुषैरिति यावत्। पुण्यतरीकृतानि अधिकपुण्यानि कृतानि जलानि तोयानि, अयोध्यां राजधानीम् अयोध्यापुरीम्, अनु निकटे, वहति प्रापयति, गमयति। वहतिः सकर्मकोऽकर्मकोऽपि प्रयुज्यते 'भारं वहति नदी वहति' प्रकृते 'जलानी' ति कर्मण उपात्तत्वात् सकर्मकः।

समासः—तीरे निखाता यूपाः यस्याः ( बहु० ) सा तीरनिखातयूपा। तुरङ्गमेधानां तुरङ्गमेधेषु वा अवभृथः तुरङ्गमेधावभृथः, तुरङ्गमेधावभृथाय अवतीर्णाः तुरङ्गमेधावभृथावतीर्णाः ( च० त० ), तैः तुरङ्गमेधावभृथोत्तीर्णैः। इक्ष्वाकोः गोत्रापत्यानि पुमांसः इक्ष्वाकवः, तैः इक्ष्वाकुभिः। अतिशयेन पुण्यानि पुण्यतराणि, अपुण्यानि पुण्यतराणि सम्पद्यमानानि कृतानि इति पुण्यतरीकृतानि, तानि। राजानो धीयन्ते अस्यामिति राजधानी।

कोशः—'कुलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु।' 'दीक्षान्तोऽवभृथो यज्ञे'

('पुण्यं त्रिषु मनोज्ञे स्यात् क्लीवं सुकृतधर्मयोः।' इति विश्वः।) 'सलिलं कमलं जलम्' इत्यमरः।

भावार्थः—इयं सरयूनदी, तीरे यज्ञियस्तम्भविशेषान् निखात्य अश्वमेधावभृथस्नानेन इक्ष्वाकुवंशीयैरस्मत्पूर्वजैः अधिकपुण्यजनकानि कृतानि सलिलानि, अयोध्याराजधानीसमीपे प्रवाहयति। अत इयं वन्द्येति भावः।

हिन्दी—जिसके तीरपर यज्ञ के यूप ( पशु बाँधने की लकड़ी ) गाड़े गये हैं ऐसी जो सरयू अश्वमेधान्त स्नान के लिए उतरे हुए इक्ष्वाकुवंशोत्पन्न ( हमारे पूर्वजों ) राजाओं से अधिक पुण्यवाले बनाये गये जल को राजधानी अयोध्यानगरी के समीप पहुँचाती है ॥ ६१ ॥

यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम्।
सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम् ॥६२॥

सञ्जीविनी—यामिति। यां सरयूं मे मानसं कर्तृ सैकतं पुलिनं तदेवोत्सङ्गः तत्र यत्सुखं तत्रोचितानां प्राज्यैः प्रभूतैः पयोभिरम्बुभिः क्षीरैश्च। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। परिवर्धितानां पुष्टानामुत्तरकोसलानामुत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरमिव सम्भावयति। 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति विश्वः।

अन्वयः—यां मे मानसं सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् उत्तरकोसलानां सामान्यधात्रीमिव सम्भावयति।

वाच्य०—या मे मानसेन सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् उत्तरकोसलानां सामान्यधात्रीव सम्भाव्यते। (कर्म०)।

चन्द्रिका—यां नदीं सरयूम्, मे मम, मानसं मनः, सैकतं वालुकामयपुलिनम्, एवोत्सङ्गः ऊरुभागः क्रोडो वा ( भुजाभ्यन्तरस्थानम्, 'न ना क्रोडं भुजान्तरम्' इत्यमरः ) तस्मिन् यत् सुखं शर्म, तदुचितानां तदभ्यासवताम्, प्राज्यः प्रचुरैः पयोभिः सलिलैः, दुग्धैश्च, परिवर्धितानां परिपोषितानाम्, उत्तरकोसलानाम् उत्तरकोसलराजानाम्, तद्राजत्वादणो लुक्। सामान्यधात्रीमिव साधारणजननीं यथा सम्भावयति आद्रियते, पूज्यबुद्धया पश्यतीत्यर्थः। धात्री चोत्सङ्गे स्वापयति शिशून् क्षीरैश्च पोषयति, इयं सरयूरपि पुलिनरूपोत्सङ्गे पयोभिः ( जलैः ) पोषयत्यत्रत्यराजान्, अत एव सरयूर्धात्रीवेति श्लिष्टविशेषणेन ( रूपकेण च 'सैकतोत्सङ्ग' इत्यत्र ) वर्णितम्।

समासः—सिकताः सन्त्यस्मिन्निति सैकतम्, सैकतमेव उत्सङ्गः सैकतोत्सङ्गः, सैकतोत्सङ्गे सुखं ( स० त० ) सैकतोत्सङ्गसुखम्, सैकतोत्सङ्गसुखस्य उचिताः सैकतोत्सङ्गसुखे वा उचिताः सैकतोत्सङ्गसुखोचिताः, तेषां सैकतोत्सङ्गसुखोचितानाम्। सामान्या चासौ धात्री च सामान्यधात्री ( कर्म० ), तां सामान्य-

धात्रीम् । कोसलानामीश्वराः कोसलाः उत्तराश्च ते कोसलाश्च ( कर्म० ) उत्तर-कोसलाः, तेषाम् उत्तरकोसलानाम् ।

कोशः—'सैकतं सिकतामयम्' 'शर्मशातसुखानि च' 'प्रभूतं प्रचुरं प्राज्यम्' 'पयः क्षीरं पयोऽम्बु च' 'साधारणन्तु सामान्यम्' 'धात्री स्यादुपमातापि क्षिति-र्प्यामलक्यपि' इत्यमरः ।

भावार्थः—सरयूनदीमहम् उत्तरकोसलेश्वराणां मातृकल्पां मन्ये, मातेव सरयू निजपुलिनक्रोडे कोसलराजभ्यः सुखं ददाति, स्वपयोभिः ( दुग्धैः जलैश्च ) कोसलराजान् पोषयति चेति भावः ।

हिन्दी—जिस (सरयू) को मेरा मन, बालुकामय पुलिनरूप गोद के सुख का अभ्यास रखनेवाले ( नित्यपुलिनरूप गोद के सुख पाये हुए ) तथा प्रचुर पय ( जल तथा दूध ) द्वारा परिपोषित उत्तरकोसल के राजाओं की साधारण माता जैसा मानता है ॥ ६२ ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥

सञ्जीविनी—सेयमिति । मदीया जननी कौसल्येव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सेयं सरयूर्दूरे वसन्तम्, प्रोष्यागच्छन्तमित्यर्थः । मां पुत्रभूतं शिशिरानिलैस्तरङ्गैरेव हस्तैरुपगूहतीवालिङ्गतीव ।

अन्वयः—मदीया जननीव मान्येन तेन राज्ञा वियुक्ता सा इयं सरयूः दूरे वसन्तं मां शिशिरानिलैः तरङ्गहस्तैः उपगूहयतीव ।

वाच्य०—मदीयया जनन्येव मान्येन तेन राज्ञा वियुक्तया तया अनया सरय्वा दूरे वसन् अहं शिशिरानलैः तरङ्गहस्तैः उपगूह्य इव ( कर्म० ) ।

चन्द्रिका—मदीया मत्सम्बन्धिनी,जननी इव माता यथा, कौसल्यावदित्यर्थः । तेन राज्ञा प्रसिद्धेन दशरथभूपेन, वियुक्ता विरहिता, सेयं प्रत्यभिज्ञायमाना, पूर्वोक्तगुणविशिष्टा असौ 'तत्तेदन्तावगाहि ज्ञानं' प्रत्यभिज्ञा । सरयूनदी दूरे विप्रकृष्टे, वसन्तं वर्तमानम्, मां सुतायितम्, गतश्लोके उत्तरकोसलराजानां धात्री-वेत्युक्तमेव । शिशिरानलैः शीतलवातान्वितैः, तरङ्गा एव हस्ताः तैः ऊर्मिकरैः, उपगूहतीव आलिङ्गतीव, परिष्वजतीव ।

समासः—मम इयं मदीया । शिशिरः अनिलः येषु ते ( बहु० ) शिशि-रानिलाः, इवेत्युत्प्रेक्षायाम् । तैः शिशिरानिलैः । तरङ्गा एव हस्ताः तरङ्गहस्ताः, तैः तरङ्गहस्तैः ।

कोशः—'जनयित्री प्रसूर्माता जननी' 'राजा राट् पार्थिवक्ष्माभृत्' 'स्याद् दूरं विप्रकृष्टकम्' 'सुषीमः शिशिरो जडः' 'तुषारः शीतलः शीतः' 'गन्धवाहानिला-शुगाः ।' 'अङ्गस्तरङ्ग ऊर्मिर्वा हस्तौ तु पाणिनक्षत्रे' इत्यमरः ।

भावार्थः—मम जननी यथा पूज्येन तेन राज्ञा दशरथेन विरहिता चिरप्रवासात् परावर्तमानं मां करौ प्रसार्य वात्सल्येनालिङ्गितुं वाञ्छति, तथैवेयमपि सरयूः शीतवातान्वितैः तरङ्गरूपकरैः परिष्वजतीव ।

हिन्दीश्लोकार्थः—मेरी माता कौशल्या के समान उस पूज्य राजा दशरथ से विरहित हुई पूर्वोक्त गुणों से युक्त यह सरयू नदी दूर में रहनेवाले मुझको, ( मानों पुत्रवात्सल्य से प्रेरित होकर ) शीतल वायु से युक्त तरङ्ग रूपी हाथों से मानों आलिंगन कर रही है ॥ ६३ ॥

विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्मथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

सञ्जीविनी—विरक्तेति । विरक्ताऽतिरक्ता या सन्ध्या तद्वत्कपिशं ताम्रवर्णम् । पृथिव्या इदं पार्थिवम् । रजो धूलिः पुरस्तादग्रे यतो यस्मात्कारणादुज्जिहीते उद्गच्छति । तस्मात् हनुरस्यास्तीति हनूमान् । "शरादीनां च" इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्ता यस्मै स भरतः ससैन्यः सन्मां प्रत्युद्गत इति शङ्के तर्कयामि । 'शङ्का भयवितर्कयोः' इति शब्दार्णवे । अत्र यत्तदोर्नित्यसम्बन्धात्तच्छब्दलाभः ।

अन्वयः—विरक्तसन्ध्याकपिशं पार्थिवं रजः पुरस्तात् यतः उज्जिहीते, 'ततः' हनूमत्कथितप्रवृत्तिः भरतः ससैन्यः मां प्रत्युद्गतः 'इति' शङ्के ।

वाच्य०—विरक्तसन्ध्याकपिशेन पार्थिवेन रजसा पुरस्ताद् यत उज्जिहाते 'ततः' हनूमत्कथितप्रवृत्तिना भरतेन ससैन्येन अहं प्रत्युद्गत इति 'मया' शङ्क्यते ( कर्म० ) ।

चन्द्रिका—विशेषेण रक्ता या सन्ध्या सेव कपिशं धूम्रवर्णम्, 'कपिशो धूम्रः' इत्यमरः । पार्थिवं भौमं, रजः धूलिः पुरस्तात् सम्मुखे, यतः यस्मात् कारणात्, उज्जिहीते उत्सरति, उत्तिष्ठति, ततः कारणात् हनूमता आञ्जनेयेन कथिता उक्ता, प्रवृत्तिः वृत्तान्तः यस्मै स तथोक्तो भरतः कैकयीसुतः ससैन्यः सवाहिनीकः, सन् भवन् मां प्रत्युद्गतः मत्सागतार्थं समायातः, इति वाक्यार्थः कर्म, शङ्के सम्भावयामि । उत्प्रेक्षालङ्कारः ।

समासः—विरक्ता चासौ सन्ध्या च ( कर्मधा० ) विरक्तसन्ध्या, विरक्तसन्ध्येव कपिशं ( कर्म० ) विरक्तसन्ध्यकपिशम् । पृथिव्याः आगतं पार्थिवम्, हनूरस्यास्तीति हनूमान्, हनूमता कथिता प्रवृत्तिः यस्मै सः (बहु०) हनूमत्कथितप्रवृत्तिः । सैन्येन सह वर्तते इति ( बहु० ) ससैन्यः ।

कोशः—'सायं सन्ध्या पितृप्रसूः' 'श्यावः स्यात् कपिशो धूम्रधूमलौ कृष्णलोहिते ।' 'प्राच्यां पुरस्तात प्रथमे पुरार्थेऽग्रत इत्यपि ।' 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः' 'अनीकिनी बलं सैन्यम्' इत्यमरः ।

भावार्थः—सायंसमय इव कृष्णतामिश्रलोहितवर्णा पृथिव्या धूलिः उत्थिता

समक्षं दृश्यते। मन्ये हनूमत्सकाशादद्य ममागमनं ज्ञात्वा भरतः स्नेहादराभ्यां सैन्येन साकं मम स्वागतार्थं समायातीति।

**हिन्दीश्लोकार्थः**—सन्ध्या समय जैसी धूम्र वर्ण वाली धूल सामने जिस कारण से उड़ रही है उससे मैं कल्पना करता हूँ कि हनूमान् से मेरे आगमन का समाचार सुनकर भरत सेना के साथ मेरी अगवानी करने आ रहा है॥ ६४॥

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः।
हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे॥६५॥

**सञ्जीविनी**—अद्धेति। किञ्च साधुः सज्जनः स भरतः। 'साधुर्वार्धुषिके चारौ सज्जने चाऽपि वाच्यवत्' इति विश्वः। पालितसङ्गराय पालितपितृप्रतिज्ञाय मे मह्यमनघामदोषां भोगाभावादनुच्छिष्टां किन्तु संरक्षितां श्रियम्। मृधे युद्धे खरादीन्हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यत्यद्धा सत्यम्। 'तत्त्वे त्वद्धाऽञ्जसा द्वयम्' इत्यमरः।

**अन्वयः**— साधुः सः पालितसङ्गराय मे अनघां श्रियं मृधे खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितां त्वामिव प्रत्यर्पयिष्यति अद्धा।

**वाच्य०**—साधुना तेन पालितसङ्गराय मे अनघा संरक्षिता श्रीः, मृधे खरादीन् हत्वा निवृत्ताय मे लक्ष्मणेन संरक्षिता अनघा त्वमिव प्रत्यर्पयिष्यते (कर्म०)।

**चन्द्रिका**—साधुः सुजनः, सः भरतः, पालितसंगराय रक्षितवनवासप्रतिज्ञाय, मे मह्यम्, अनघां निर्दोषं भोगेनाकलुषिताम्, संरक्षिताम् पालिताम्, श्रियं राजलक्ष्मीम्, मृधे रणे,खरादीन् शूर्पणखासहोदरान् राक्षसान्,हत्वा वधं कृत्वा निवृत्ताय आश्रमं परावृत्ताय, प्रत्यागताय, मे मह्यम्, संरक्षितां सम्यक् त्राताम्, त्वामिव त्वां यथा प्रत्यर्पयिष्यति परावर्तयिष्यति। अद्धा सत्यम्। पूर्णोपमालङ्कारः। त्वत्पदवाच्यायाः सीतायाः उपमानभूतायाः प्रत्यर्पणरूपसाधारणधर्मस्य उपमेयायाः श्रियः उपमावाचकस्येव शब्दस्य चोपादानात्।

**समासः**—पालितः सङ्गरः येन ( बहु० ) सः पालितसङ्गरः, तस्मै पालितसङ्गराय। न विद्यते अघं यस्याः ( बहु० ) सा अनघा, ताम् अनघाम्। खरः आदिः येषां ( बहु० ) ते खरादयः ( अन्यपदार्थः 'राक्षसाः' ), तान् खरादीन्।

**कोशः**—'सभ्यसज्जनसाधवः' 'प्रतिज्ञाजिसंविदापत्सु संगरः।' 'अंहोदुःखव्यसनेष्वघम्' 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' मृधमास्कन्दनं संख्यं समीकं साम्परायिकम्।' 'सत्ये त्वद्धाञ्जसा द्वयम्' इत्यमरः।

**भावार्थः**—सत्स्वभावः भरतः पालितपितृप्रतिज्ञाय प्रत्यागताय मह्यं सम्यग् न्यासवद् रक्षितां भोगेनाकलुषीकृतां राजलक्ष्मीं तथैव परावर्तयिष्यति यथा लक्ष्मणः युद्धे खरादिराक्षसान् हत्वा आश्रमं प्रत्यागताय मे सुरक्षितां निर्दोषां त्वां परावर्तितवानिति भावः।

हिन्दीश्लोकार्थः--सज्जन वह भरत ( पिताजी की ) प्रतिज्ञा पालनकर लौटे हुए मुझको, अच्छी तरह पालन की हुई राजलक्ष्मी ऐसे ही लौटायेगा, जैसा युद्ध में खरादि राक्षसों को मारकर लौटे हुए मुझको लक्ष्मण ने सुरक्षित और निर्दोष तुम्हें मुझे सौंप दी थी निश्चित ही यह होगा ॥६५ ॥

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

सञ्जीविनी—असाविति । असौ पदातिः पादाभ्यामततीति पदातिः पादचारी चीरवासा वल्कलवसनो भरतः पश्चात्पृष्ठभागेऽवस्थापिता वाहिनी सेना येन स तथोक्तः सन् । "नद्यृतश्च" इति कप् । गुरुं वसिष्ठं पुरस्कृत्य वृद्धैरमात्यैः सहार्घ्यपाणिः सन्मामभ्युपैति ।

अन्वयः—असौ पदातिः चीरवासा भरतः पश्चादवस्थापितवाहिनीकः गुरुं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः माम् अभ्युपैति ।

वाच्य०—अनेन पदातिना चीरवाससा भरतेन पश्चादवस्थापितवाहिनीकेन गुरुं पुरस्कृत्य वृद्धैः अमात्यैः सहार्घ्यपाणिना अहम् अभ्युपेये (कर्म०)।

चन्द्रिका—असौ एषः, पदातिः पादाभ्यामेव चलन्, चीरवासाः, वल्कलवस्त्रः, भरतः पश्चात् पृष्ठप्रदेशे अवस्थापिता न्यस्ता, निहिता, वाहिनी चमूः येन एवम्भूतः सन् गुरुं कुलगुरुं, वशिष्ठम्, पुरस्कृत्य अग्रतः कृत्वा, वृद्धैः स्थविरैः, अमात्यैः मन्त्रिभिः सह सार्धम्, अर्घ्यपाणिः पूजोपकरणहस्तः सन् माँ मा, अभ्युपैति अभ्युपयाति अभिमुखं समागच्छतीति यावत् ।

समासः—पश्चाद् अवस्थापिता वाहिनी येन सः ( बहु० ) पश्चादवस्थापितवाहिनीकः । चीरं वासः यस्य ( बहु० ) सः चीरवासाः । अर्घार्थमिदम् अर्घ्यम्, अर्घ्यं पाणौ यस्य ( बहु० ) सः अर्घ्यपाणिः ।

कोशः—'गुरू गीष्पतिपित्राद्यौ' 'पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पदिकः ।' 'प्रतीच्यां चरमे पश्चाद्' 'पृतना वाहिनी चमूः' 'प्रवयाः स्थविरो वृद्धः' 'मन्त्री धीसचिवोऽमात्यः' ( 'चीरन्तु मुनिवासः स्यात्' इति रभसः ) 'वासो वस्त्रं वसनमंशुकम्' 'अर्घ्यमर्घार्थे' 'पञ्चशाखः शयः पाणिः' इत्यमरः ।

भावार्थः—एष भरतः मत्स्वागतार्थं सैन्यं पृष्ठतो निधाय गुरुं वसिष्ठं पुरतो विधाय वनवासिवत् वल्कलधारी पादचारेण वृद्धैर्मन्त्रिभिः सार्धं पूजाद्रव्यं निजहस्तेन वहन् सम्मुखमायाति । अस्य त्यागभ्रातृभक्तिविनयादिसद्गुणान् पश्येति भावः।

हिन्दीश्लोकार्थः—यह भरत सेना को पीछे रखकर और गुरु वसिष्ठ को आगे कर वल्कल वस्त्र धारण किये पैदल चलता हुआ वृद्ध मन्त्रियों के साथ पूजनं की सामग्री को अपने हाथ में लेकर मेरे सम्मुख आ रहा है ॥ ६६ ॥

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाऽप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

सञ्जीविनी—पित्रेति । यो भरतः पित्रा विसृष्टां दत्तामङ्कमुत्सङ्गं च गतामपि यां श्रियं युवाऽपि मदपेक्षया मद्भक्त्याऽभोक्ता सन् । तृन्नन्तत्वात् "न लोकाव्यय-निष्ठाखलर्थतृनाम्" इति षष्ठीनिषेधः । इयन्ति वर्षाण्येतावतो वत्सरान् । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह स्त्रियेति च गम्यते । उग्रं दुश्चरमासिधारं नाम व्रतमभ्यस्यतीव वर्तयतीव । 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् ॥' इति यादवः । इदं चासिधारा-चङ्क्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ।

अन्वयः—यः पित्रा विसृष्टाम् अङ्कगतां श्रियं युवाऽपि मदपेक्षया अभोक्ता इयन्ति वर्षाणि तया सह उग्रम् आसिधारं व्रतम् अभ्यस्यतीव ।

वाच्य०—येन पित्रा विसृष्टाम् अङ्कगतां श्रियं मदपेक्षया यूनाऽपि तया सह इयन्ति वर्षाणि उग्रम् आसिधारो व्रतः अभ्यस्यते इव । ( कर्मवा० )

चन्द्रिका—यः भरतः, पित्रा तातेन दशरथेन, विसृष्टां त्यक्ताम्, अङ्कम् अन्तिकम्, उत्सङ्गम्, गतां प्राप्ताम्, श्रियं राजलक्ष्मीम्, युवाऽपि तरुणोऽपि मदपेक्षया ज्येष्ठस्यैवेयं नममेति विवेकेन, अभोक्ता अभुञ्जानः, अननुभवन्, 'सन् भवन्' इयन्ति वर्षाणि इयतः संवत्सरान् चतुर्दशवर्षपर्यन्तम्, तया सह राजलक्ष्म्या साकम् । उग्रं कठोरम्, आसिधारं खड्गमुखावलेहनरूपं खड्गमुखे चलनरूपं वा व्रतं नियम-विशेषम्, अभ्यस्यतीव आवर्तयतीव । दाढर्याय पुनः पुनः करणम् अभ्यासः ।

समासः—मम अपेक्षा मदपेक्षा ( ष० त० ), तया मदपेक्षया । अङ्कं गता अङ्कगता ( द्वि० त० ), ताम् अङ्कगताम् । न भोक्ता अभोक्ता ( नञ्त० ) असेः धारा ( ष० त० ) असिधारा, असिधाराया इदम् आसिधारम् । तत् पुनस्तद्वत् ।

कोशः—'तातस्तु जनकः पिता' 'उत्सङ्गचिह्नयोरङ्कः' 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' 'वयस्थस्तरुणो युवा' 'स्याद् वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।' 'नियमो व्रतमस्त्री तत्' 'साकं सत्रा समं सह' इत्यमरः ।

भावार्थः—यः भरतः पितृदत्तामपि, स्ववशामपि स्वयं तरुणः सन्नपि ( भोगयोग्यवयसि स्थितोऽपि ) 'ज्येष्ठभ्रातुरेवेयं राजलक्ष्मीः, न मम' इति मयि पूज्यबुद्ध्या राजलक्ष्मीं स्वयमभुञ्जानः चतुर्दशवत्सरात्मके महति कालावधौ नलिनीदलाम्बुवत् निस्पृहो निवसति । ईदृशः त्यागः, असिधारायां चलनवद् दुष्करः । तरुणः स्ववशां पित्रनुमतत्वात् अपवादानुत्पादिकां स्त्रियं श्रियञ्च चिर-कालमेकरूपेण मनसापि अभुक्त्वा वर्तते चेत् स नूनं खड्गधाराचलनरूपं व्रतमनु-तिष्ठतीत्यभिप्रायः ।

हिन्दीश्लोकार्थः—जो भरत पिता से दी हुई और गोद ( स्वाधीन ) में आई हुई राजलक्ष्मी को युवक होने पर भी, 'बड़े भाई की ही है यह राज-लक्ष्मी, मैं केवल इस अवधि तक रखवारी करनेवाला हूँ' इस प्रकार मेरा

प्रतीक्षा में, भोग न करता हुआ इतने वर्ष उस ( राजलक्ष्मी ) के साथ दुष्कर 'असिधारा व्रत' का अभ्यास-सा कर रहा है ॥ ६७ ॥

एतावदुक्तवति दाशरथौ तदीयामिच्छां विमानमधिदेवतया विदित्वा।
ज्योतिष्पथादवततार सविस्मयाभिरुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः । ६८॥

सञ्जीविनी—एतावदिति । दाशरथौ रामे एतावदुक्तवति सति विमानं पुष्पकं कर्तृ, तदीयां रामसम्बन्धिनीमिच्छामधिदेवतया मिषेण विदित्वा, तत्प्रेरितं सदित्यर्थः । सविस्मयाभिर्भरतानुगाभिः प्रकृतिभिः प्रजाभिरुद्वीक्षितम् ऊर्ध्वं दृष्टं सज्ज्योतिष्पथादाकाशादवततार ।

अन्वयः—दाशरथौ एतावद् उक्तवति विमानं तदीयाम् इच्छाम् अधिदेवतया विदित्वा सः विस्मयाभिः भरतानुगाभिः प्रकृतिभिः उद्वीक्षितं 'सत्' ज्योतिष्पथाद् अवततार ।

वाच्य०—दाशरथौ एतावदुक्तवति विमानेन तदीयाम् इच्छाम् अधिदेवतया विदित्वा सविस्मयाभिः भरतानुगाभिः प्रकृतिभिरुद्वीक्षितेन सता ज्योतिष्पथाद् अवतेरे ( भाववा० ) ।

चन्द्रिका—दाशरथौ श्रीरामे, एतावद् सर्गद्वितीयश्लोकात्पूर्वश्लोकं यावत्, उक्तवति कथितवति सति, विमानं व्योमयानं पुष्पकम्, तदीयां दाशरथिसम्बन्धिनीम्, इच्छां तत्रावतरणकामनाम्, अधिदेवतया विमानाध्यक्षेण देवेन, विदित्वा अवगत्य, अवबुद्ध्य, सविस्मयाभिः आश्चर्ययुक्ताभिः, अपूर्वविमानदर्शनेन जाताश्चर्याभिरित्यर्थः । भरतानुगाभिः भरतमनुसरन्तीभिः, प्रकृतिभिः प्रजाजनैः, उद्वीक्षितम् ऊर्ध्वमवलोकितम्, 'सद् भवद्' ज्योतिष्पथात् गगनात्, अवततार अवरुरोह, अधः समाययौ ।

समासः—दशरथस्यापत्यं दाशरथिः, तस्मिन् दाशरथौ । तस्य इयं तदीया, तां तदीयाम् । ज्योतिषां पन्थाः ( ष० त० समासान्तश्च ) ज्योतिष्पथः, तस्माद् ज्योतिष्पथाद् । विस्मयेन सह वर्तन्ते इति सविस्मयाः ( बहु० ), ताभिः सविस्मयाभिः । भरतमनुगच्छन्तीति भरतानुगाः, ताभिः भरतानुगाभिः ।

कोशः—'व्योमयानं विमानोऽस्त्री' 'इच्छाकाङ्क्षास्पृहेहा तृड्' 'विस्मयोऽद्भुतमाश्चर्यम्' 'तारापथोऽन्तरिक्षञ्च' इत्यमरः ।

भावार्थः—रामे एतावत् वर्णितवति सति विमानाधिदेवतेङ्गितेन श्रीरामस्य तत्रायोध्यायामवतरणेच्छां विज्ञाय भरतानुयायिप्रजाभिः आश्चर्यपूर्वकं मुखमद्गमय्य दृश्यमानं पुष्पकं विमानं भूमौ अवातरदिति भावः ।

हिन्दीश्लोकार्थः—रामजी के इतना ( दूसरे श्लोक से लेकर पूर्वश्लोक तक ) कहने पर विमानाधिदेवता से श्रीराम जी की वहाँ उतरने की इच्छा को ताड़कर, भरत के पीछे चलनेवाली प्रजाओं से आश्चर्यपूर्वक ( ऊपर ) देखा गया पुष्पक-विमान भूमि पर उतर गया ॥ ६८ ॥

तस्मात्पुरःसरविभीषणदर्शितेन सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

सञ्जीविनी—तस्मादिति । रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेनदत्तो हस्तो हस्तावलम्बो यस्य तादृशः सन् । स्थलज्ञत्वात्पुरःसरो विभीषणस्तेन दर्शितेनादूरमासन्नं महीतलं यस्य तेन भङ्गिभिर्विच्छित्तिभी रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्माद्यानात्पुष्पकादवातरदवतीर्णवान् । तरतेर्लङ् ॥ ६९ ॥

अन्वयः—रामः सेवाविचक्षणहरीश्वरदत्तहस्तः पुरस्सरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण यानात् अवातरत् ।

वाच्य०—रामेण सेवाविचक्षणहरीश्वरदत्तहस्तेन पुरस्सरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण यानाद् अवातीर्यत ( भाववा० ) ।

चन्द्रिका—रामः दाशरथिः, सेवायां परिचर्यायां, शुश्रूषायां, विचक्षणः पण्डितः दक्षः, यो हरीश्वरः वानराधिपति सुग्रीवः, तेन दत्तः वितीर्णः प्रसारितः, हस्तावलम्बः, करग्रहः. यस्य तादृशः, पुरस्सरण अग्रगामिना, विभीषणेन रावणकनिष्ठेन दर्शितेन विज्ञापितेन, सन्दर्शितेन, अदूरं सन्निकटं महीतलं भूपृष्ठं यस्य तथोक्तेन भङ्गिषु वक्रस्थानेषु, कोणेषु, रचितस्फटिकेन स्फटिकानिर्मितेन, जटितस्फटिकेन, मार्गेण सोपानवर्त्मना, यानात् पुष्पकविमानात्, अवातरत् अवारोहत्, भूमौ समागतः ।

समासः—सेवायां विचक्षणः (स० त०) सेवाविचक्षणः, सेवाविचक्षणश्चासौ ( हरीणाम् ईश्वरः हरीश्वरः ष० त० ) हरीश्वरश्च सेवाविचक्षणहरीश्वरः, सेवाविचक्षणहरीश्वरेण दत्तः हस्तः यस्य (यस्मै वा) सः ( बहु० ), सेवाविचक्षणहरीश्वरदत्तहस्तः । पुरः सरतीति पुरस्सरः, पुरस्सरश्चासौ विभीषणश्च (कर्म० ) पुरस्सरविभीषणः, पुरस्सरविभीषणेन दर्शितः ( तृ० त० ) पुरस्सरविभीषणदर्शितः, तेन पुरस्सरविभीषणदर्शितेन । मह्याः तलं महीतलम्, न दूरम् (नञ्त०) अदूरं, अदूरं महीतलं यस्य सः अदूरमहीतलः, तेन । भङ्गिषु भङ्गिभिर्वा रचिता स्फटिका यस्य ( बहु० ) सः भङ्गिरचितस्फटिकः, तेन भङ्गिरचितस्फटिकेन ।

कोशः—'कृती सूरिर्लब्धवर्णो विचक्षणः' 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरस्सराः ।' 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।' 'ईश्वरः पतिरीशिता' 'हस्तौ तु पाणिनक्षत्रे' 'सर्वं स्याद् वाहनं यानम्' 'अयनं वर्त्ममार्गाध्वपन्थानः' इत्यमराः ।

भावार्थः—सेवानिपुणेन सुग्रीवेण दत्तकरावलम्बः श्रीरामः अग्रस्थितेन विभीषणेन संदर्शितेन जटितस्फटिकेन सोपानवर्त्मना तस्मात् पुष्पकविमानात् भूतले अवरूढः अभूत् । रावणविमानपथानां विभीषणस्य परिचितत्वात् स एव अग्रतो भूत्वा अवतरणमार्गं दर्शयामासेत्यर्थः ।

हिन्दीश्लोकार्थः—सेवा में निपुण सुग्रीव ने जिन्हें उतरते समय हाथ का

सहारा दिया है ऐसे रामचन्द्र आगे चलनेवाले विभीषण से दिखाये गये भूतल के समीपवर्ती एवं स्फटिकों से घुमावों में जटित सोपान ( सीढ़ी ) के मार्ग से विमान से नीचे उतरे ॥ ६९ ॥

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य स भ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥७०॥

सञ्जीविनी—इक्ष्वाक्विति । प्रयतः स राम इक्ष्वाकुवंशगुरवे वसिष्ठाय प्रणम्य नमस्कृत्यार्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते पर्यश्रुः परिगतानन्दबाष्पः सन् भ्रातरं भरतमस्वजतालिङ्गत् । तस्मिन् रामे भक्त्यापोढः परिहृतः पितृराज्यमहाभिषेको येन तस्मिन्मूर्धन्युपजघ्रौ च । "घ्रा गन्धोपादाने" लिटि रूपम् ।

अन्वयः—प्रयतः सः इक्ष्वाकुवंशगुरवे प्रणम्य अर्घ्यपरिग्रहान्ते पर्यश्रुः भ्रातरं भरतम् अस्वजत । तद्भक्त्यपोढपितृराज्यमहाभिषेके मूर्धनि उपजघ्रौ च ।

वाच्य०—प्रयतेन तेन······पर्यश्रुणा सता भ्राता भरतः अस्वज्यत (कर्म०) मूर्धनि उपजघ्रे च ।

चन्द्रिका—प्रयतः बाह्याभ्यन्तरपवित्रः 'पवित्रः प्रयतः पूतः' इत्यमरः । सः श्रीरामः, इक्ष्वाकुवंशस्य रघुकुलस्य, गुरवे आचार्याय वसिष्ठाय, प्रणम्य नमस्कृत्य, अभिवाद्य, अर्घ्यस्य पूजापदार्थस्य फलादेः, परिग्रहान्ते स्वीकारावसाने, ग्रहणानन्तरमित्यर्थः, पर्यश्रुः उद्गतबाष्पः, भ्रातृसन्दर्शनानन्देन नेत्रवारिस्रावयन्नित्यर्थः । भ्रातरम् अनुजम्, भरतम् अस्वजत आलिङ्गितवान्, तथा तद्भक्त्या भरतहृदयगतेन रामानुरागेण, 'पूज्येष्वनुरागो भक्तिः' अपोढः परित्यक्तः, वारितः, पितृराज्यस्य दशरथसाम्राज्यस्य, महाभिषेकः विशिष्टमभिषिञ्चनं येन तस्मिन् मूर्धनि मस्तके, उपजघ्रौ च अजिघ्रच्च । कनिष्ठानां मस्तकाघ्राणं तेषामायुर्वर्द्धकमिति शिष्टाचारः ।

समासः—इक्ष्वाकोः वंशः इक्ष्वाकुवंशः, इक्ष्वाकुवंशस्य गुरुः इक्ष्वाकुवंशगुरुः, तस्मै इक्ष्वाकुवंशगुरवे । अर्घार्थं ( द्रव्यं ) अर्घ्यम्, अर्घ्यस्य परिग्रहः अर्घ्यपरिग्रहः, अर्घ्यपरिग्रहस्य अन्तः अर्घ्यपरिग्रहान्तः, तस्मिन् । परिगतम् अश्रु यस्य ( बहु० ) सः पर्यश्रुः । तस्य भक्तिः तद्भक्तिः, तद्भक्त्या अपोढः तद्भक्त्यपोढः, पितुः राज्यं ( राज्ञः कर्म भावो वा ) पितृराज्यं, महांश्चासौ अभिषेकश्च (कर्म० ) महाभिषेकः, पितृराज्यस्य महाभिषेकः पितृराज्यमहाभिषेकः, तद्भक्त्यपोढः पितृराज्यमहाभिषेकः येन सः ( बहु० ) तद्भक्त्यपोढपितृराज्यमहाभिषेकः, तस्मिन्···षेके ।

कोशः—'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।' 'वंशोऽन्ववायः सन्तानः' 'गुरू गीष्पतिपित्राद्यौ' 'पवित्रः प्रयतः पूतः' 'अर्घ्यमर्घार्थे' 'पत्नीपरिजनादानमूलशापो परिग्रहाः ।' 'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमोः' 'नेत्राम्बु रोदनं चास्रमश्रु च ।' 'मूर्धा ना मस्तकोऽस्त्रियाम्' 'तातस्तु जनकः पिता' इत्यमरः ।

भावार्थः—पवित्रः श्रीरामः कुलगुरुं वसिष्ठं प्रथमं प्रणम्य तदनन्तरं भरतोपहृतं पुष्पफलादिकं स्वीकृत्य आनन्दबाष्पं मुञ्चन् भरतं समालिङ्ग्य स्वभक्तिपरित्यक्तराज्याभिषेके, भरतशिरसि आघ्राणञ्चाकरोदिति भावः। 'असौ पुरस्कृत्य गुरुं पदातिः' इत्युक्तत्वात् गुरुवन्दनं प्रथमं कृतवान् रामः।

हिन्दीश्लोकार्थः—पवित्र (भीतर तथा बाहर शुद्ध) राम ने कुलगुरु वसिष्ठजी को प्रणाम किया तथा भरत द्वारा प्रदत्त फल-पुष्प आदि भेंट स्वीकार कर नयनों में आनन्दाश्रु भरकर भरत का आलिंगन किया तथा राम में भक्ति के कारण जिसने पिता के राज्य का अभिषेक त्यागा है ऐसे भरत के माथे का आघ्राण किया (माथे को सूँघा)। ज्येष्ठों के द्वारा कनिष्ठों के शिर सूँघना शिष्टाचार है ॥ ७० ॥

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान्।
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातैर्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

सञ्जीविनी—श्मश्रूविति। श्मश्रूणां मुखरोम्णां प्रवृद्धया संस्काराभावादभिवृद्धया जनिताननेषु विक्रिया विकृतिर्येषां तानत एव प्ररोहैः शाखाऽवलम्बिभिरधोमुखैर्मूलैर्जटिलाञ्जटावतः प्लक्षान्न्यग्रोधानिव स्थितान्। प्रणमतो मन्त्रिवृद्धांश्च शुभैः कृपार्द्रैर्दृष्टिपातैरवलोकनैर्वार्तस्यानुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा चान्वग्रहीदनुगृहीतवान्।

अन्वयः—श्मश्रुप्रवृद्धिजनिताननविक्रियान् प्ररोहजटिलान् प्लक्षान् इव प्रणमतः मन्त्रिवृद्धान् 'सः' शुभदृष्टिपातैः वार्तानुयोगमधुराक्षरया वाचा च अन्वग्रहीत्।

वाच्य०—श्मश्रुप्रवृद्धिजनिताननविक्रियाः प्ररोहजटिलाः पक्षा इव प्रणमन्तः मन्त्रिवृद्धाः 'तेन' शुभदृष्टिपातैः मधुराक्षरया वाचा च अन्वगृह्यन्त (कर्मवा०)।

चन्द्रिका—श्मश्रूणां पुंमुखवालानां 'तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः। प्रवृद्धया वपनाभावात् संवर्द्धनेन, समेधनेन, जनिता उत्पन्ना, आननविक्रिया मुखविकारः येषां तान्. श्रीरामविरहे पुना रामागमनपर्यन्तं संयमग्रहणात् क्षौराद्यभावो मन्त्रिवृद्धानाम्। तत एव प्ररोहैः विटपस्तंभसमानाभिः शिफाख्याभिः जटाभिः जटिलान् जटायुक्तान्, प्लक्षानिव वटवृक्षान् यथा, विद्यमानान्, प्रणमतः प्रणिपातान् कुर्वतः, अभिवादयतः, मन्त्रिवृद्धान् अमात्यस्थविरान्, शुभैः मङ्गलकरैः दृष्टिपातैः कटाक्षवीक्षणैः, संदर्शनैः, वार्तानुयोगे आरोग्यपृच्छायां, अनामयप्रश्नेः मधुराक्षरया प्रियवर्णया, वाचा च वाण्यापि अन्वग्रहीत् अनुगृहीतवान्, अनुजग्राह।

समासः—श्मश्रूणां प्रवृद्धिः श्मश्रुप्रवृद्धिः, श्मश्रुप्रवृद्धया (आननेषु विक्रिया स० त०) आननविक्रिया येषां (बहु०) ते तथोक्ताः, तान् श्मश्रुप्रवृद्धिजनिताननविक्रियान्। प्ररोहैः जटिलाः (तृ० त०) प्ररोहजटिलाः, तान् प्ररोहजटि-

लान् । मन्त्रिणश्च ते वृद्धाश्च ( कर्मधा० ) मन्त्रिवृद्धाः, तान् । दृष्टेः पाताः दृष्टि-पाताः ( ष० त० ), शुभाश्च ते दृष्टिपाताश्च शुभदृष्टिपाताः, तैः । वार्तस्य अनुयोगः वार्तानुयोगः, वार्तानुयोगे मधुराणि अक्षराणि यस्यां सा वार्तानुयोग-मधुराक्षरा ( बहु० ), तया वार्तानुयोगमधुराक्षरया ।

कोशः—'तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे ।' 'आननं लपनं मुखम्' 'समे विकृतिविक्रिये' ( 'प्लक्षो वटश्च न्यग्रोध.' इति यादवः ), 'मन्त्री धीसचिवोऽमात्यः' 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन् ।' 'कल्याणं मङ्गलं शुभम्' 'वार्तं फल्गुन्यरोगे च' 'प्रश्नोऽनुयोगः पृच्छा च' 'स्वादुप्रियौ तु मधुरौ' 'गीर्वाग् वाणी सरस्वती' इत्यमराः । 'अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः । गगने धर्मतपसैरम्बरे मूलकारणे ॥' इति हेमः ।

भावार्थः—वृद्धमन्त्रिणां मुखानि रामविरहे क्षौरादिसंस्काराभावात् श्मश्रुभिः प्रलम्बैः शाखादिषु स्रंसद्जटायुक्तवटवृक्षा इव विकृतानि आसन् । ते प्राचीना मन्त्रिणः प्रणाममकुर्वन् तान् श्रीरामः कुशलप्रश्नैः प्रियवाण्या मङ्गलावलोकनेन च प्रसादयामास ।

हिन्दीश्लोकार्थः—दाढ़ी बढ़ने से ( राम वनवास दुःख में क्षौर-तैलानुलेपनादि न करने से ) जिनके मुख जटा वाले बरगद के वृक्ष जैसे विकारयुक्त हो गये थे ऐसे प्रणाम करते हुए वृद्धमन्त्रियों को श्रीराम ने अपने मंगलमय विलोकन एवं प्रिय वचनों से कुशल प्रश्न पूछकर अनुगृहीत कर दिया ॥ ७१ ॥

दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥७२॥

सञ्जीविनी—दुर्जातेति । अयं मे दुर्जातबन्धुरापद्बन्धुः । 'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । एष समरेषु पुरः प्रहर्ता पौलस्त्यो विभीषणः । इत्यादृतेनादरवता । कर्तरि क्तः । रघूणां नन्दनेन रामेण कथितावुभौ विभीषणसुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्यालिङ्गनादिभिरसम्भाव्य भरतो ववन्दे ।

अन्वयः—अयं मे दुर्जातबन्धुः ऋक्षहरीश्वरः, एष समरेषु पुरः प्रहर्ता पौलस्त्यः इति आदृतेन रघुनन्दनेन कथितौ उभौ लक्ष्मणं व्युत्क्रम्य भरतः ववन्दे ।

वाच्य०—अनेन मे दुर्जातबन्धुना ऋक्षहरीश्वरेण 'भूयते' एतेन समरेषु पुरः प्रहर्त्रा 'भूयते' ( भाव० ) इति आदृतः रघुनन्दनः कथितवान् ( कर्तृ० ), भरतेन उभा लक्ष्मणं व्युत्क्रम्य ववन्दाते ( कर्मवा० ) ।

चन्द्रिका—अयं असौ, मे मम, दुर्जाते कष्टे विपत्तौ, बन्धुः भ्राता यथा, ऋक्षहरीश्वरः भल्लूकवानराधिपतिः सुग्रीव इत्यर्थः, एषः अयम्, समरेषु रणेषु, पुरः अग्रतः, प्रथमः, प्रहर्ता प्रताडयिता, प्रहारकर्ता, योद्धा, पौलस्त्यः पुलस्त्यापत्यं विभीषणः, इति इत्थम्, आदृतेन सादरेण, रघुनन्दनेन रामेण, कथितौ उक्तौ

दत्तपरिचयौ, उभौ सुग्रीवविभीषणौ द्वौ, लक्ष्मणं सौमित्रिम्, भ्रातरम्, व्युत्क्रम्य समुल्लंघ्य, विहाय, भरतः कैकेयीपुत्रः, ववन्दे प्रणनाम, नमश्चक्रे ।

समासः—दुर्जाते बन्धुः ( स०त० ) दुर्जातबन्धुः, ऋक्षाश्च हरयश्च (द्वन्द्व०) ऋक्षहरयः, ऋक्षहरीणाम् ईश्वरः ( ष० त० ) ऋक्षहरीश्वरः । पुलस्त्यस्य अपत्यं पुमान् पौलस्त्यः । रघूणां ( रघून् वा नन्दयतीति ) नन्दनः रघुनन्दनः, तेन ।

कोशः—'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ।' 'ऋक्षाच्छभल्लभल्लूकाः' 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' । 'ईश्वरः पतिरीशिता' 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' 'स्यात् पुरः पुरतोऽग्रतः' 'आदृतौ सादरार्चितौ' इत्यमराः ।

भावार्थः—"एष मे आपद्बन्धुः कपीश्वरः सुग्रीवोऽस्ति, अयं च स्वभ्रातृरावणविरोधे अस्मत्पक्षे प्रथमं योद्धा विभीषणः अस्ति—" इति सादरं दत्तपरिचयौ सुग्रीवविभीषणौ भरतः आदरानन्दातिशयेन अनुजं लक्ष्मणमपि विहाय ( आलिङ्गनकुशलप्रश्नादिना असत्कृत्यैव ) अभिवन्दितवान् ।

हिन्दीश्लोकार्थः—'यह मेरा आपद्बन्धु भालू-कपियों का अधिपति सुग्रीव है, तथा यह युद्ध में पहले मार करनेवाला विभीषण है" इस प्रकार सादर परिचय कराये गये ( उन ) दोनों को भरत ने, लक्ष्मण को छोड़कर प्रणाम किया ॥७२॥

सौमित्रिणा तदनु संससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥७३॥

सञ्जीविनी—सौमित्रिणेति । तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे सङ्गतः । "सृज विसर्गे" दैवादिकात्कर्तरि लिट् । नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढमालिलिङ्ग च । किं कुर्वन् । रूढेन्द्रजित्प्रहरणव्रणैः कर्कशेनास्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन्निव पीडयन्निव क्लिश्नातिरयं सकर्मकः । 'क्लिश्नाति भुवनत्रयम्' इति दर्शनात् । ननु रामायणे—"ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥" इति भरतस्य कानिष्ठ्य प्रतीयते, किमर्थं ज्यैष्ठ्यमवलम्ब्यानार्जवेन श्लोको व्याख्यातः ? सत्यम् । किन्तु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम् । "ततो लक्ष्मणमासाद्य—" इत्यादिश्लोक आसादनं लक्ष्मणवैदेह्योः अभिवादनं तु वैदेह्या एव अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ।

अन्वयः—तदनु सः सौमित्रिणा संसृजे, नम्रशिरसम् एनम् उत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन अस्य उरःस्थलेन भुजमध्यं क्लिश्यन्निव भृशम् आलिलिङ्ग च।

वाच्य०—तदनु तेन ( भरतेन ) सौमित्रिणा संसृजे । नम्रशिरसमेनमुत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन उरःस्थलेन अस्य भुजमध्यं क्लिश्यतेव भृशम् आलिलिङ्गे ।

चन्द्रिका—तदनु सुग्रीवविभीषणाभिवादनानन्तरम्, सः भरतः, सौमित्रिणा लक्ष्मणेन, संसृजे सङ्गमे, सम्मिलितः। नम्रशिरसं नतमस्तकम्, प्रणतमित्यर्थः, एनं लक्ष्मणम्, उत्थाप्य उद्धृत्य, रूढाः शुष्कप्रायाः ये इन्द्रजितः मेघनादस्य, रावणपुत्रस्य प्रहरणव्रणाः प्रहारक्षतानि, तैः कर्कशेन रूक्षेण उरःस्थलेन वक्षस्तलेन, अस्य लक्ष्मणस्य, भुजमध्यं क्रोडस्थलं 'न ना क्रोडं भुजान्तरम्' बाह्वोरभ्यन्तरदेशम्, क्लिश्यन्निव व्यथयन् इव, इवेनालीकत्वं व्यञ्जितम्। भृशं गाढम्, स्नेहातिरेकात्, आलिलिङ्ग च आशिश्लेष, आलिङ्गितवानपि।

समासः—सुमित्रायाः अपत्यं पुमान् सौमित्रिः, तेन सौमित्रिणा नम्रं शिरः यस्य सः नम्रशिराः, तं नम्रशिरसम्। इन्द्रजितः प्रहरणं इन्द्रजित्प्रहरणम्, इन्द्रजित्प्रहरणस्य व्रणाः इन्द्रजित्प्रहरणव्रणाः (ष० त०) रूढाश्च ते इन्द्रजित्प्रहरणव्रणाश्च (कर्मधा०) रूढेन्द्रजित्प्रहरणव्रणाः, तैः कर्कशम् (तृ० त०) तथोक्तम्, तेन रूढेन्द्रजित्प्रहरणव्रणकर्कशेन। उरसः स्थलम् उरःस्थलम्, तेन उरःस्थलेन।

कोशः—'उत्तमाङ्गं शिरः शीर्षम्' 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्।' 'व्रणोऽस्त्रियामीर्ममरुः' 'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' 'उरो वत्सञ्च वक्षश्च' 'स्थलं स्थली' 'भुजबाहू प्रवेष्टो दोः' 'मध्योऽस्त्रो' इत्यमरः।

भावार्थः—भरतः सुग्रीवविभीषणवन्दनानन्तरं भ्रात्रा लक्ष्मणेन सह संगतः, लक्ष्मणः भरतं शिरसा प्रणनाम। प्रणतं तं लक्ष्मणं बाहुभ्यामुत्थाप्य भरतः इन्द्रजित्प्रहारजातव्रणानां शुष्कप्रायत्वात् रूक्षवक्षस्थलेन निजभुजाभ्यन्तरं क्लेशयन्निव वस्तुतो वात्सल्याधिक्यादेव गाढमालिङ्गितवान्।

हिन्दीश्लोकार्थः—सुग्रीव विभीषण को प्रणाम करने के बाद भरत लक्ष्मण से मिले और नतमस्तक (प्रणाम करते हुए) लक्ष्मण को उठाकर, मेघनाद के प्रहारजनित व्रणों (घावों) के सूख जाने से रूखे उसकी छाती को, मानों पीडित करते हुए, अपनी भुजाओं के बीच गाढ आलिंगन करने लगे ॥ ७३ ॥

रामाज्ञया हरिचमूपतयस्तदानीं कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः शैलाधिरोहणसुखान्युपलेभिरे ते ॥७४॥

सञ्जीविनी—रामेति। तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रानारुरुहुः। बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखान्युपलेभिरेऽनुबभूवुः।

अन्वयः—तदानीं हरिचमूपतयः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः। बहुधा मदवारिधाराः क्षरत्सु तेषु ते शैलाधिरोहणसुखानि उपलेभिरे।

वाच्य०—तदानीं हरिचमूपतिभिः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रा आरुरुहिरे। बहुधा मदवारिधाराः क्षरत्सु तेषु तैः शैलाधिरोहणसुखानि उपलेभिरे (कर्मवा०)।

**चन्द्रिका**—तदानीं तदा, हरिचमूनां वानरसेनानां पतयः नायकाः, वानरवीरा इत्यर्थः। रामाज्ञया रामनिदेशेन, मनुष्यवपुः मानवशरीरम्, कृत्वा विधाय, गजेन्द्रान् हस्तिश्रेष्ठान्, आरुरुहुः आरूढाः। बहुधा अनेकधा, बाहुल्येन, मदवारिधाराः दानजलस्रावान्, क्षरत्सु मुञ्चत्सु द्रवत्सु, तेषु गजेन्द्रेषु ते वानरसेनापतयः शैलाधिरोहणस्य पर्वतारोहणस्य, सुखानि प्रमोदान्, उपलेभिरे प्राप्तवन्तः।

**समासः**— हरीणां चम्वः हरिचम्वः, हरिचमूनां पतयः हरिचमूपतयः। रामस्य आज्ञा रामाज्ञा, तया रामाज्ञया। मनुष्याणां वपुः मनुष्यवपुः, तत् तदेव। गजेषु इन्द्राः गजेन्द्राः, तान् गजेन्द्रान्। मदस्य वारीणि मदवारीणि, मदवारीणां धाराः (ष० त०) मदवारिधाराः, ताः पुनस्तदेव। क्षरन्तीति क्षरन्तः, तेषु क्षरत्सु। शैलेषु अधिरोहणं शैलाधिरोहणम् (स० त०), शैलाधिरोहणस्य सुखानि शैलाधिरोहणसुखानि, तानि।

**कोशः**—'तदा तदानीं युगपदेकदा' 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु।' 'पृतना वाहिनी चमूः' 'स्वामी त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः।' 'अववादस्तु निर्देशो निदेशः शासनं च सः। शिष्टिश्चाज्ञा च' 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः।' 'मतङ्गजो गजो नागः' 'मदो दानं' 'वार्वारि सलिलं कमलं जलम्' 'अचलशैलशिलोच्चयाः' 'स्यादानन्दथुरानन्दशर्मशातसुखानि च।' इत्यमराः।

**भावार्थः**—श्रीरामादेशेन शोभायात्रायां तदा वानरवीराः मानवदेहं सन्धार्य कुञ्जरवरान् आरूढवन्तः। प्राचुर्येण मदस्राविषु उन्नतेषु गजेषु आरूढास्ते कपियूथनाथाः पर्वतारोहणानन्दं प्राप्तवन्तः।

**हिन्दीश्लोकार्थः**—उस समय वानर सेनानायक श्रीरामचन्द्रजी की आज्ञा से मनुष्य शरीर धारण कर श्रेष्ठ हाथियों पर सवार हुए। बहुत मदजल बरसाते हुए हाथियों पर सवार हुए वे कपीन्द्र पहाड़ों पर चढ़ने का आनन्द पाये ॥७४॥

सानुप्लवः प्रभुरपि क्षणदाचराणां भेजे रथान्दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयैर्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥७५॥

**सञ्जीविनी**—सानुप्लव इति। सानुप्लवः सानुगः। 'अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः' इति यादवः। क्षणदाचराणां रक्षसां प्रभुर्विभीषणोऽपि प्रभवत्यस्मादिति प्रभवो जनको दशरथ. प्रभवो यस्य स दशरथप्रभवो रामः तेनानुशिष्ट आज्ञप्तः सन् रथान् भेजे। तानेव विशिनष्टि—ये रथा मायाविकल्परचितैः सङ्कल्पविशेषनिर्मितैरपि तदीयैर्विभीषणीयैः स्यन्दनैः रथैस्तुलितकृत्रिमभक्तिशोभास्तुलिता समीकृता कृत्रिमा क्रियाया निवृत्ता भक्तीनां शोभा येषां ते तथोक्ता न भवन्ति। तेऽपि तत्साम्यं न लभन्त इत्यर्थः। कृत्रिमेत्यत्र "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः। "क्त्रेर्मम्नित्यम्" इति ममागमः।

अन्वयः—सानुप्लवः क्षणदाचराणां प्रभुः अपि दशरथप्रभवानुशिष्टः रथान् भेजे, ये मायाविकल्परचितैः तदीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभाः न।

वाच्य०—सानुप्लवेन क्षणदाचराणां प्रभुणा दशरथप्रभवानुशिष्टेन रथाः भेजिरे, यैः तदीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभैः न 'अभूयत' (भाववा०)।

चन्द्रिका—अनुप्लवैः अनुचरैः सह वर्तमानः सानुप्लवः सानुचरः, क्षणदाचराणां रात्रिञ्चराणां राक्षसानाम् प्रभुः ईश्वरः, अपि विभीषणश्च, दशरथप्रभवेण दाशरथिना रामेण, अनुशिष्टः आदिष्टः, सन् भवन् रथान् स्यन्दनान्, भेजे आरुरोह। ये रथाः मायाविकल्पेन राक्षस्या छलसृष्टया रचितैः प्रकटितैः प्रादुर्भावितैः, तदीयैः विभीषणसम्बन्धिभिः, स्यन्दनैः शताङ्गैः, रथैः, तुलिता सदृशीकृता, कृत्रिमा शिल्पिक्रियानिवृत्ता, शिल्पिसम्पादिता, भक्तीनां रचनानां अलङ्कारार्थं विहितमत्स्याद्याकृतीनाम्, शोभा कान्तिः येषां ते तुलितकृत्रिमभक्तिशोभाः, न अभूवन्निति शेषः।

समासः—अनुप्लवैः सह वर्तते इति सानुप्लवः (बहु०)। क्षणदासु चरन्तीति क्षणदाचराः, तेषां क्षणदाचराणाम्। प्रभवतीति प्रभुः। दशसु (दिक्षु) रथो यस्य सः दशरथः, प्रभवत्यस्मादिति प्रभवः, दशरथः प्रभवः यस्य (बहु०) सः दशरथप्रभवः, दशरथप्रभवेण अनुशिष्टः दशरथप्रभवानुशिष्टः। मायायाः मायया वा विकल्पः मायाविकल्पः, मायाविकल्पेन रचिताः मायाविकल्परचिताः, तैः। तस्य इमे तदीयाः, तैः तदीयैः। भक्तीनां शोभा भक्तिशोभा, क्रियया निवृत्ता कृत्रिमा, कृत्रिमा च असौ शोभा च (कर्मधा०) कृत्रिमभक्तिशोभा, तुलिता कृत्रिमभक्तिशोभा येषां (बहु०) ते तुलितकृत्रिमभक्तिशोभाः।

कोशः—'अनुप्लवः सहायश्चानुचरोऽभिचरः समाः।' 'रात्रिस्त्रियामा क्षणदा क्षपा।' 'स्याज्जन्महेतुः प्रभवः' शताङ्गः स्यन्दनो रथः' 'स्यान्माया शाम्बरी' 'शोभा कान्तिर्द्युतिश्छविः' इत्यमरः।

भावार्थः—श्रीरामादेशेन निशाचरराजो विभीषणोऽपि अनुचरैः सह रथान् आरुरोह। स तेषां रथानां लोकोत्तरच्छविं विलोक्य राक्षसैर्मायाशक्त्यैव प्रकटीक्रियमाणेषु रथेषु तत्तच्चित्ररचनासाम्यं नैव लभते स्म। इमे त्वयोध्यारथा भौतिकाः, अतोऽत्र मनुष्यशिल्पिकृतास्त्रुटयः सम्भाविता एव राक्षसमायाकल्पितेषु ताः त्रुटयः न भवन्ति यद्यपि। तथाऽपि एतेषां रथानां साम्यं मायिकेषु रथेषु नाभूत्।

हिन्दीश्लोकार्थः— अनुयायियों के सहित निशाचरों के स्वामी विभीषण भी उन रथों पर चढ़े, जिनकी विचित्राकारों की रचना की तुलना राक्षसों के मायाकल्पित रथ नहीं कर सकते थे॥ ७५॥

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सामरजो विमानम्।

दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥

**सञ्जीविनी**—भूय इति । ततो रघुपतिः सावरजो भरतलक्ष्मणसहितः सन् विलसत्पताकं कामेनेच्छाऽनुसारेण गतिः यस्य तद्विमानं भूयः पुनरपि । बुधबृहस्पतिभ्यां योगेन दृश्यो दर्शनीयस्तारापतिश्चन्द्रो दोषाभवं दोषातनम् । "सायश्चिरम्प्राह्णे प्रगेऽव्ययेभ्यष्ट्युटयुलौ तुट् च" इत्यनेन दोषाशब्दादव्ययाट्ट्युप्रत्ययः । तरलविद्युच्चलत्तडिदभ्रवृन्दमिव अध्यास्ताधिष्ठितवान् ।

**अन्वयः**—ततः रघुपतिः सावरजः विलसत्पताकं कामगति विमानं भूयः बुधबृहस्पतियोगदृश्यः तारापतिः दोषातनं तरलविद्युद् अभ्रवृन्दम् इव अध्यास्त ।

**वाच्य०**—ततो रघुपतिना सावरजेन विलसत्पताकं कामगति विमानं भूयः बुधबृहस्पतियोगदृश्येन तारापतिना दोषातनं तरलविद्युद् अभ्रवृन्दमिव अध्यास्यत ( कर्म० ) ।

**चन्द्रिका**—ततः अनुगामिवाहनारोहणानन्तरम् रघुपतिः रामः, सावरजः अनुजैः त्रिभिः भरतलक्ष्मणाभ्यां सहितः विलसत्पताकं भ्राजमानवैजयन्तीकम्, चञ्चलध्वजम्, कामगति इच्छासञ्चारि, अप्रतिहतगमनं वा, विमानं पुष्पकं व्योमयानम्, भूयः द्वितीयवारमपि, बुधबृहस्पत्योः गुरुसौम्ययोः योगेन मेलनेन सङ्गत्या, दृश्यः लक्ष्यः विलोकनीयः, तारापतिः इन्दुः चन्द्रमाः, दोषातनं रात्रिभवं 'अथ दोषं च नक्तञ्च रजनाविति ।' इत्यमरः, अव्ययमिदम् । ततो भवार्थे ट्युप्रत्ययः, ततश्च 'युवोरनाकौ' इत्यनादेशः । तरलविद्युत् चञ्चलतडित्कम्, अभ्रवृन्दमिव मेघव्यूहं यथा, अध्यास्त आरोहत् । 'अधिशीङ्स्थासां कर्म' इत्यनेन विमानस्याधारस्यापि कर्मसंज्ञा ।

**समासः**—रघूणां पतिः रघुपतिः । विलसन्त्यः पताका यस्मिन् तत् विलसत्पताकम्, तत् कामेन कामं वा गतिर्यस्य ( बहु० ) तत् कामगति, तत् ( कामगति कामगतिनी कामगतीनि—इति रूपाणि ) । अवस्मिन् काले ( पश्चात् ) जाताः अवरजाः, अवरजैः सह वर्तते इति सावरजः । बुधश्च बृहस्पतिश्च बुधबृहस्पती ( द्वन्द्व० ) बुधबृहस्पत्योः योगः बुधबृहस्पतियोगः ( ष० त० ) । बुधबृहस्पतियोगेन ( द्रष्टुं योग्यः ) दृश्यः बुधबृहस्पतियोगदृश्यः । ताराणां पतिः तारापतिः । तरला विद्युद् यस्मिन् तत् तरलविद्युत्, तत् । दोषा भवं दोषातनं, तद् दोषातनम् । अभ्राणां वृन्दं अभ्रवृन्दम्, तत् ।

**कोशः**—'स्फारं भूयश्च भूरि च' 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ।' 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ।' 'कामोऽभिलाषस्तर्षश्च' 'व्योमयानं विमानोऽस्त्री' 'रौहिणेयो बुधः सौम्यः' 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ।' 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' 'चञ्चलं तरलं चैव' 'तडित्

सौदामनी विद्युत्' 'अभ्रं मेघो वारिवाहः' 'स्त्रियां तु संहतिवृन्दम्' 'वा यथा तथैवैवं साम्ये' इत्यमराः ।

भावार्थः—पश्चात् सानुजो रामः चञ्चलपताकाभिः शोभमानम् इच्छानुसारिगमनं पुष्पकविमानं समारूढः गुरुबुधाभ्यां (भरतलक्ष्मणोपमानाभ्यां) संयुक्तो विधुः चञ्चलसौदामनी ( पताकास्थानीयं ) चमत्कृतं घनसमूहं समारूढ इव शोभते स्म ।

अलङ्कारः—उपमालङ्कारः, 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।' इति तल्लक्षणात् । भरतलक्ष्मणोपेतरामस्य विलसत्पताकविमानारोहणं गुरुबुधोपेतचन्द्रस्य तरलतडित्कमेघवृन्दारोहणमिवासीदिति वर्णनात् ।

हिन्दीश्लोकार्थः—पश्चात् अनुजों ( भरत-लक्ष्मण ) के सहित राम पताकाओं से शोभायमान, इच्छानुसार गतिवाले पुष्पकविमान पर पुनः ऐसे आरूढ़ हुए जैसे बुध और गुरु से युक्त चन्द्रमा चंचल विद्युत् ( बिजली ) से युक्त मेघसमूह पर आरूढ होता है ॥ ७६ ॥

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥

सञ्जीविनी—तत्रेति । तत्र विमाने । जगतामीश्वरेणादिवराहेण प्रलयादुर्वीमिव वर्षात्ययेन शरदागमेनाभ्रघनान्मेघसङ्घातादिन्दो रुचं चन्द्रिकामिव । रामेण दशकण्ठ एव कृच्छ्रं सङ्कटं तस्मात्प्रत्युद्धृतां धृतिमतीं सन्तोषवतीं मैथिलसुतां सीतां भरतो ववन्दे ।

अन्वयः—तत्र जगताम् ईश्वरेण प्रलयाद् उर्वीम् इव वर्षात्ययेन अभ्रघनात् इन्दोः रुचमिव रामेण दशकण्ठकृच्छ्रात् प्रत्युद्धृतां धृतिमतीं मैथिलसुतां भरतः ववन्दे ।

वाच्य०—तत्र जगतामीश्वरेण प्रलयादुर्वीव वर्षात्ययेन अभ्रघनात् इन्दोः रुगिव रामेण दशकण्ठकृच्छ्रात् प्रत्युद्धृता धृतिमती मैथिलसुता भरतेन ववन्दे ( कर्मवा० )।

चन्द्रिका—तत्र पुष्पकविमाने, जगतां लोकानाम्, ईश्वरेण स्वामिना पत्या विष्णुना, वराहरूपिणा, प्रलयात् हिरण्याक्षकृतविनाशात् उर्वीमिव भूमिं यथा, वर्षात्ययेन शरदृतुना, वर्षाणामत्ययो ( विनाशः ) यस्मिन् इति व्युत्पत्तेः । अभ्राणां मेघानां, घनात् सञ्चयात् समूहात्, इन्दोः चन्द्रमसः विधोः, रुचमिव कान्तिं ज्योत्स्नां यथा, रामेण अग्रजेन रामचन्द्रेण, दशकण्ठः दशाननः रावण एव कृच्छ्रं कष्टं विपत्, तस्मात् उद्धृतां प्रत्यानीताम्, धृतिमतीं धीरताशालिनीम्, 'धृतिर्धारणधैर्ययोः' इत्यमरः । महत्यां विपद्यपि पतिरामनिष्ठावतीमित्यर्थः । मैथिलसुतां वैदेहीम्, भरतः ववन्दे प्रणनाम ।

समासः—वर्षाणाम् अत्ययः यस्मिन् स ( बहु० ) वर्षात्ययः, तेन । अभ्राणां

घनं अभ्रघनम्, तस्मात् । मिथिलानां राजा मैथिलः, मैथिलस्य सुता मैथिलसुता, तां मैथिलसुताम् । दश कण्ठाः यस्य स दशकण्ठः, दशकण्ठ एव कृच्छ्रं दशकण्ठकृच्छ्रम् तस्मात् । धृतिरस्या अस्तीति ( मत्वर्थीय० ) धृतिमती, तां धृतिमतीम् ।

कोशः—'ईश्वरः पतिरीशिता' 'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।' 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ।' 'वसुधोर्वी वसुन्धरा' 'स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम् ।' 'अत्ययोऽतिक्रमे कृच्छ्रे' 'स्युः प्रभा रुग्रुचिस्त्विड् भा' 'अभ्रं मेघो वारिवाहः' 'घनो मेघे मूर्तगुणे त्रिषु मूर्ते निरन्तरे ।' 'इन्दुः कुमुदबान्धवः' 'स्यात्कष्टं कृच्छ्रमाभीलम्' 'धृतिर्धारणधैर्ययोः' इत्यमराः ।

भावार्थः—यथा जगत्स्वामिना विष्णुना वराहरूपेण हिरण्याक्षेन कटवदावेष्ट्य पातालं नीता धरा समुद्धृता, यथा च वर्षासु सन्ततधारासु वृष्टिषु अदृश्या चन्द्रकौमुदी शरदृतुना पुनरानीयते, तथैव दशाननरूपव्यसनाद् श्रीरामेण समुद्धृतां विपद्यपि धैर्यधारिणीं भगवतीं सीतां भरतः विमाने समुपेत्य प्रणतवान् । उपमानद्वयेन धराज्योत्स्नासदृशी सीतेति उत्कर्षध्वनिः ।

अलङ्कारः—उपमालङ्कारः ।

हिन्दीश्लोकार्थः—जैसे जगदीश भगवान् विष्णु ने ( वराह रूप से हिरण्याक्ष से चुराई गई ) पृथ्वी का उद्धार किया, जैसे शरदृतु बरसात के मेघों की घटा से चाँदनी का उद्धार करता है, वैसे ही रावणरूप आपदा से श्रीराम के द्वारा उद्धार की गई अपने व्रत में धैर्य रखनेवाली जनकसुता को भरत ने विमान में जाकर प्रणाम किया ॥ ७७ ॥

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधोरन्योन्यपावनमभूदुभयं समेत्य ॥७८॥

सञ्जीविनी—लङ्केश्वरेति । लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढव्रतमखण्डितपातिव्रत्यमत एव वन्द्यं तज्जनकात्मजायाश्चरणयोर्युगं ज्येष्ठानुवृत्त्या जटिलं जटायुक्तं साधोः सज्जनस्यास्य भरतस्य शिरश्चेत्युभयं समेत्य मिलित्वाऽन्योन्यस्य पावनं शोधकमभूत् ।

अन्वयः—लङ्केश्वरप्रणतिभङ्गदृढव्रतं वन्द्यं जनकात्मजायाः तत् चरणयोः युगं ज्येष्ठानुवृत्तिजटिलम् साधोः अस्य शिरश्च उभयं समेत्य अन्योन्यपावनम् अभूत् ।

वाच्य०—लङ्केश्वरप्रणतिभङ्गदृढव्रतेन तेन वन्द्येन जनकात्मजायाः चरणयोर्युगेन ज्येष्ठानुवृत्तिजटिलेन साधोः अस्य शिरसा च उभयेन समेत्य अन्योन्यपावनेन अभावि ( भाववा० ) ।

चन्द्रिका—लङ्केश्वरस्य लङ्काधिपतेः रावणस्य प्रणतीनां प्रणिपातानां, पादप्रणामानां भङ्गेन तिरस्कारेण, दृढव्रतं कठोरनियमं स्थिरपतिव्रतम्, तस्मादेव वन्द्यं जगत्प्रणम्यम्, तद् लोकख्यातम्, तच्छब्दः प्रसिद्धावपि वर्तते, जनकात्मजायाः

वैदेह्याः, जनकसुतायाः, चरणयोः पादयोः, युगं द्वन्द्वम्, युगलम्, तथैव ज्येष्ठस्य अग्रजस्य अनुवृत्त्या अनुसरणेन जटिलं जटाधारि, साधोः सत्पुरुषस्य अस्य भरतस्य, शिरश्च मस्तकश्च इति उभयं द्वयं समेत्य संगत्य, संयुज्य, अन्योन्यस्य परस्परस्य, पावनं पवित्रतासम्पादकम्, अभूत् समजायत ।

समासः—लङ्कायाः ईश्वरः लङ्केश्वरः लङ्केश्वरस्य प्रणतयः लङ्केश्वर-प्रणतयः, लङ्केश्वरप्रणतीनां भङ्गेन दृढं व्रतं यस्य तत् ( बहु० ) लङ्केश्वरप्रणति-भङ्गदृढव्रतम् । वन्दितुं योग्यं वन्द्यम् । जनकस्य आत्मजा ( आत्मनः जाता ) जनकात्मजा, तस्याः जनकात्मजायाः । ज्येष्ठस्य अनुवृत्तिः ज्येष्ठानुवृत्तिः, ज्येष्ठानु-वृत्त्या जटिलं ज्येष्ठानुवृत्तिजटिलम् । अन्योन्यस्य पावनं अन्योन्यपावनम् ।

कोशः—'ईश्वरः पतिरीशिता' 'शक्तस्थूलौ त्रिषु दृढौ' 'नियमो व्रतमस्त्री तत्' 'द्वन्द्वं युग्मं तु युगलं युगम् ।' 'पादः पदंघ्रिश्चरणोऽस्त्रियाम्' 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । प्राहुर्दुहितरं सर्वे' 'त्रिषु ज्येष्ठोऽतिशस्तेऽपि' 'उत्त-माङ्गं शिरः शीर्षं' 'सभ्यसज्जनसाधवः' इत्यमरः ।'

भावार्थः—रावणेन पादयोः प्रणामपूर्वकं कृतां प्रार्थनां निरस्य पातिव्रत्य-दृढनिष्ठाप्रकाशनेन जगद्वन्द्यं जानकीपादयुगलं श्रीरामानुसरणं कृतवतः सत्पुरुष-स्यास्य भरतस्य जटाधारि शिरश्चेति द्वयं संगम्य परस्परमपावयत् । उभयमपि जगत्पावनमिति भावः ।

हिन्दीश्लोकार्थः—रावण की प्रणामपूर्वक प्रार्थनाओं का तिरस्कार करने से प्रातिव्रत्य में दृढनिष्ठा रखनेवाले जगद्वन्द्य जानकी जी के पादयुगल एवं बड़े भाई का अनुसरण करने से जटाधारी सज्जन भरत का मस्तक, ये दोनों मिलकर परस्पर एक दूसरे को पवित्र कर रहे थे ।। ७८ ।।

क्रोशार्धं प्रकृतिपुरःसरेण गत्वा काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः साकेतोपवनमुदारमध्युवास ।। ७९ ।।

सञ्जीविनी—क्रोशार्द्धमिति । आर्यः पूज्यः काकुत्स्थो रामः प्रकृतयः प्रजाः पुरःसरा यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण । क्रोशोऽध्वपरिमाणविशेषः । क्रोशार्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्याः पटभवनानि यस्मिंस्तदुदारं महत्साकेतस्यायोध्याया उपवनमध्युवासाधितष्ठौ । 'साकेतः स्याद-योध्यायां कोसलानन्दिनी तथा' इति यादवः ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनी-समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महा-काव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः ।। १३ ।।

अन्वयः—आर्यः काकुत्स्थः प्रकृतिपुरस्सरेण स्तिमितजवेन पुष्पकेण क्रोशार्धं गत्वा शत्रुघ्नप्रतिविहितोपकार्यम् उदारं साकेतोपवनम् अध्युवास ।

**वाच्य०**—आर्येण काकुत्स्थेन प्रकृतिपुरस्सरेण स्तिमितजवेन पुष्पकेण क्रोशार्धं गत्वा शत्रुघ्नप्रतिविहितोपकार्यम् उदारं साकेतोपवनम् ( प्र० एकव० ) अध्यूषे ( कर्म० )।

**चन्द्रिका**—आर्यः मान्यः, महाकुलः, 'महाकुलकुलीनार्य' इत्यमरः। काकुत्स्थः रामः, प्रकृतयः प्रजाः, पुरस्सर्यः अग्रगामिन्यः यस्य: तेन तथोक्तेन, स्तिमितजवेन स्तब्धवेगवता, पुष्पकेण विमानेन। अधस्तात् प्रजाजनाः स्वागतार्थं अग्रे अग्रे धावन्ति स्म विमानमपि मन्दीकृतवेगेन तेषां पृष्ठतो गच्छति स्मेत्यर्थः। क्रोशार्धं अर्धक्रोशपर्यन्तं गत्वा चलित्वा उड्डीय, शत्रुघ्नेन लक्ष्मणानुजेन, प्रतिविहिताः विरचिताः, उपकार्याः उपकारिकाः वस्त्रसदनानि, यस्मिन् तादृशम्, उदारं विशालम्, साकेतोपवनं अयोध्याया आरामम् 'आरामः स्यादुपवनम्' इत्यमरः। अध्युवास वासमकरोत् तत्र न्यवसत्। 'उपान्वध्याङ् वसः' इत्याधारस्योपवनस्य कर्मत्वम्। 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' इति लक्षणलक्षितं प्रहर्षिणी-वृत्तम्' सर्गान्ते वृत्तभेदः सम्प्रदायगतः।

**समासः**—ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः। पुरः सरन्तीति पुरस्सर्यः प्रकृतयः पुरस्सर्यो यस्य तत् ( बहु० ), प्रकृतिपुरस्सरम्, तेन प्रकृतिपुरस्सरेण। स्तिमितः जवः यस्य तत् स्तिमितजवम्, तेन। शत्रुघ्नेन प्रतिविहिताः उपकार्याः यस्मिन् तत् (बहु०) शत्रुघ्नप्रतिविहितोपकार्यम्, तत्। साकेतस्य उपवनं (ष०त०) साकेतोपवनम्, तत्। क्रोशस्य अर्धं क्रोशार्धम्, तत्।

**कोशः**—'महाकुलकुलीनार्य सभ्यसज्जनसाधवः।' 'प्रकृतिः प्रजा' 'अग्रतस्सर-पुरस्सराः' 'रंहस्तरसां तु रयः स्यदः। जवः' 'विमानन्तु पुष्पकम्' 'उपकार्योप-कारिका' 'उदारोदात्तमहतोः' 'आरामः स्यादुपवनम्' इत्यमरः।

**भावार्थः**—पूज्यो रघुवंशमणिः श्रीरामः विमानस्य गतिं मन्दीकृत्य अग्रे अग्रे त्वरितगत्या अधस्ताद्गच्छतां प्रजाजनानां पृष्ठतो विमानेन प्रायः क्रोशार्धं गत्वा तत्र विमानात् अवतीय अयोध्याया विशाले उपवने शत्रुघ्नेन श्रीरामस्वागतार्थं विरचिते पटभवने सदलवलो निवासं चक्रे इति भावः।

**हिन्दीश्लोकार्थः**—सम्मान्य श्रीराम पुष्पकविमान का वेग ( स्पीड ) मन्द कर आगे-आगे ( पृथ्वी पर ) प्रजा लोग दौड़ रहे थे, पुष्पकविमान से प्रायः आधे कोस जाकर शत्रुघ्न से बनाये गये शामियानों से युक्त, अयोध्या के बड़े भारी उपवन ( बगीचे ) में विराजमान हुए ॥ ७९ ॥

जितपूर्वेन्द्रियाचार्यो रघुवंशत्रयोदशे।
विवृतिं काञ्चिदायोज्य रामपादाश्रितां व्यधात् ॥

सव्याख्यात्रये रघुवशे त्रयोदशः सर्गः समाप्तः ॥ १३ ॥

---

रघुवंश-त्रयोदश-सर्गस्थ–

# श्लोकानुक्रमणिका

—०—

# रघुवंशमहाकाव्यम्

## चतुर्दशः सर्गः

भर्तुः प्रणाशादथ शोचनीयं दशाऽन्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥

सञ्जीवनं मैथिलकन्यकायाः सौन्दर्यसर्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम् ॥

सञ्जीविनी—भर्तुरिति । अथोपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ । उपघ्नतरोराश्रयवृक्षस्य । "उपघ्न आश्रये" इति निपातः । तस्य छेदाद् व्रतत्यौ लते इव । 'वल्ली तु व्रततिर्लता' इत्यमरः । भर्तुर्दशरथस्य प्रणाशाच्छोचनीयं दशाऽन्तरमवस्थाऽन्तरम् । 'अवस्थायां वस्त्रान्ते स्याद्दशाऽपि' इति विश्वः । प्रपन्ने प्राप्ते जनन्यौ कौसल्यासुमित्रे तत्र साकेतोपवने समं युगपदपश्यताम् । दृशेः कर्तरि लिङ् ।

प्रजनापवादाद् भीतोः यः शुचिं सीतां सदानुगाम् ।
वनगां कारयामास स दयालुर्गतिर्मम ॥

अन्वयः—अथ दाशरथी उपघ्नतरोः छेदात् व्रतत्यौ इव भर्तुः प्रणाशात् शोचनीयं दशान्तरं प्रपन्ने जनन्यौ तत्र समम् अपश्यताम् ।

वाच्य०—अथ दाशरथिभ्याम् उपघ्नतरोः छेदात् व्रतत्यौ इव भर्तुः प्रणाशात् शोचनीयं दशान्तरं प्रपन्ने जनन्यौ तत्र समम् अदृश्येताम् ( कर्मवा० ) ।

चन्द्रिका—अथ उपवनागमनानन्तरम्, दाशरथी रामलक्ष्मणौ, उपघ्नतरोः आश्रयद्रुमस्य आलम्बभूतवृक्षस्य, छेदात् कर्तनात्, खण्डनात्, व्रतत्यौ इव लते यथा, भर्तुः पत्युः दशरथस्य, प्रणाशात् निधनात् शोचनीयं विशादार्हं, दशान्तरम् अवस्थान्तरम्, अन्यामवस्थां, प्रपन्ने गते, जनन्यौ, निजमातरौ कौसल्यासुमित्रे, समम् एककालम्, अपश्यतां व्यलोकयताम् । उपमालंकारः 'उपमा यत्र सादृश्य-लक्ष्मीरुल्लसति द्वयोः ।' इति लक्षणम् ।

समासः—शोचितुं योग्यं शोचनीयम्, तत् अन्या दशा दशान्तरम्, तत् । दशरथस्य अपत्ये पुमांसौ दाशरथौ । उपघ्नश्चासौ तरुश्च उपघ्नतरुः तस्य उपघ्नतरोः ।

'समादुपघ्नोऽन्तिकाश्रये' कोश:—'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ।' 'वल्ली तु 'विटपी पादपस्तरुः' 'अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' व्रततिर्लता' 'धवः प्रियः पतिर्भर्ता' 'दशाऽवस्थाऽनेकविधा' 'जनयित्री प्रसूर्माता जननी' 'साकं सत्रा समं सह।' इत्यमरः।

भावार्थ:—तत्रोपवने श्रीरामलक्ष्मणौ पत्युर्दशरथस्य मरणादनन्तरं शोच्यामवस्थां प्राप्ते मातरौ कौसल्यासुमित्रे आश्रयवृक्षस्य विच्छेदात् तदाश्रिते लते इव एककाल एव दृष्टवन्तौ। उभे अपि जनन्यौ मलिने वसने वसाने त्यक्तकेशादिसंस्कारे खिन्ने च दृष्टे इति भावः।

हिन्दी—बगीचे में राम और लक्ष्मणने अपनी माताओं को, अवलंबवृक्ष के कटजाने से ( गिरी और सूखी हुई ) लताओं के समान, पतिके निधन से शोचनीय अवस्था को प्राप्त हुई ( स्थितिमें ) एकसाथ देखा॥ १॥

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ।
विस्पष्टमस्त्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात्॥ २॥

सञ्जीविनी—उभाविति। यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तावुभौ रामलक्ष्मणावुभाभ्यां मातृभ्यामस्त्रैरश्रुभिरन्धतया हेतुना। 'अस्रमश्रु च शोणितम्, इति यादवः। विस्पष्टं न दृष्टौ किन्तु सुतस्पर्शेन यत्सुखं तस्योपलम्भादनुभवाज्ज्ञातौ।

अन्वय:—यथाक्रमं प्रणतौ हतारी विक्रमशोभिनौ तौ उभौ उभाभ्यां अस्रान्धतया विस्पष्टं न दृष्टौ, सुतस्पर्शसुखोपलम्भात् ज्ञातौ।

वाच्य०—यथाक्रमं प्रणतौ विक्रमशोभिनौ तौ उभौ ( द्वि. द्वि. ) उभे अस्रान्धतया विस्पष्टं न दृष्टवत्यौ, सुतस्पर्शसुखोपलम्भात् ज्ञातवत्यौ ( कर्तृवा० )।

चन्द्रिका—यथाक्रमं प्रथमं स्वमातरं प्रणम्य अनन्तरम् अपरां विमातरमिति रीत्या, प्रणतौ कृतप्रणामौ, हतारी मारितशत्रू कृतशत्रुनाशौ, विक्रमशोभिनौ पराक्रमेण विराजमानौ, वीराविति यावत्। तौ उभौ रामलक्ष्मणौ, उभाभ्यां कौसल्यासुमित्राभ्यां जननीभ्याम्, अस्रैः बाष्पवारिभिः आनन्दजैः, अन्धतया द्रष्टुमसमर्थतया, कारणेन विस्पष्टं विशदतया, क्रियाविशेषणमिदम्, न दृष्टौ न विलोकितौ, किन्तु सुतस्पर्शस्य पुत्रस्य त्वाचप्रत्यक्षस्य यत् सुखम् आनन्दः, शर्म, तस्य उपलम्भात् आन्तरानुभवात्, प्राप्तेः, ज्ञातौ विदितौ रामः लक्ष्मणः, इति स्वस्वमातृभ्यां प्रत्यभिज्ञातौ इत्यर्थः।

समास:—क्रमम् अनतिक्रम्य यथाक्रमम् (अव्ययी०) हताः अरयः याभ्यां तौ हतारी ( बहु. ) विक्रमेण शोभेते इति विक्रमशोभिनौ अन्धयोर्भावः अन्धता अस्रैः अन्धता अस्रान्धता, तया अन्धतया सुतस्य स्पर्शः सुतस्पर्शः सुतस्पर्शस्य सुतस्पर्शेन वा सुखं सुतस्पर्शसुखम्, सुतस्पर्शस्य उपलम्भः सुतस्पर्शोपलम्भः, तस्मात् सुतस्पर्शसुखोपलम्भात्।

कोशः—'रिपौ वैरिसपत्नारिद्विषद्' 'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता।' 'स्पष्टं स्फुटं प्रव्यक्तमुल्वणम्' 'किलासी सिध्मलोऽन्धोऽदृक्' 'नेत्राम्बु-रोदनं चास्रमश्रु च' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'स्यादानन्दथुरानन्दशर्मशात-सुखानि च।' इत्यमरः।

भावार्थः—क्रमानुसारेण कृतनमस्कारौ नाशितरिपू वीर्येण विराजमानौ तौ रामलक्ष्मणौ उभे अपि मातरौ कौसल्या-सुमित्रे च नेत्रयोरानन्दाश्रुव्याप्ततया सम्यक् न ददृशतुः। परन्तु पुत्रस्पर्शानन्देन। 'अयं रामः अयञ्च लक्ष्मणः' इति बाल्ये क्रोडलालनानुभवेन पृथक् पृथग् ज्ञातवत्यौ—इति भावः।

हिन्दी—क्रमानुसार प्रणाम करते हुए, शत्रुओं को मारकर पराक्रम से शोभमान उन दोनों को, दोनों माताएँ आनन्दके आँसुओं से आँखे भर जाने के कारण नहीं देख सकीं, किन्तु पुत्र स्पर्शके आनन्द का अनुभव करके पहचान गईं बाल्य काल में गोदमें खिलाने से कौसल्या को रामके एवं सुमित्रा को लक्ष्मण के स्पर्श सुख का जो ज्ञान था उसी से दोनों ने पृथक्-पृथक् पहिचाना ॥ २ ॥

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३ ॥

सञ्जीविनी—आनन्दज इति। तयोर्मात्रोरानन्दजः शिशिरो शीतलः बाष्पः शोकजमशीतमुष्णमश्रु। उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोर्जलं कर्म अवतीर्णो हिमाद्रेर्निस्यन्दो निर्झर इव बिभेद, आनन्देन शोकस्तिरस्कृत इत्यर्थः।

अन्वयः—तयोः आनन्दजः शिशिरः बाष्पः शोकजम् अशीतम् अश्रु उष्णतप्तं गङ्गा सरय्वोः जलम् अवतीर्णः हिमाद्रिनिष्यन्द इव बिभेद।

वाच्य०—तयोः आनन्दजेन शिशिरेण बाष्पेण शोकजमशीतम् अश्रु उष्णतप्तं गङ्गासरय्वोः जलम् अवतीर्णेन हिमाद्रिनिष्यन्देव बिभिदे ( कर्मवा० )।

चन्द्रिका—तयोः कौसल्यासुमित्रयोः आनन्दजः पुत्रसन्दर्शनसुखोत्पन्नः, शिशिरः शीतलः, बाष्पः नयनवारि, अश्रु, शोकजं भर्तृनिधनरामविरहाद्युद्भूतं, अशीतम् उष्णम्, अश्रु नेत्राम्बु, उष्णतप्तं निदाघसन्तप्तम्, ग्रीष्मघर्मम्, गङ्गा-सरय्वोः भागीरथीसरयूनद्योः, जलं पानीयम्, अवतीर्णः प्रविष्टः, हिमाद्रेः हिमा-चलस्य, निष्यन्द इव प्रवाहो यथा, बिभेद विददार। प्रमोदेन दुःखं तिरोहित-मित्यर्थः। उपमालंकारः, शीतं बाष्पजलम् उष्णमश्रुवारि तथा बिभेद यथा ग्रीष्मे सन्तप्तगङ्गासरयूजलं हिमाचलात्प्रसृतं शीतलं जलं भिनत्तीति वर्णनात्।

समासः—आनन्दाद् जातः आनन्दजः। न शीतमशीतम् ( नञ्त० ) तत्। गङ्गा च सरयू च गङ्गासरय्वौ ( द्वन्द्व० ), तयोः गङ्गासरय्वोः। उष्णेन तप्तम् ( तृ० तत्पु० ) उष्णतप्तम्, तत्। हिमस्याद्रिः हिमाद्रिः, हिमाद्रेः निष्यन्दः (ष.त.) हिमाद्रिनिष्यन्दः।

कोशः—'स्यादानन्दथुरानन्दशर्मशातसुखानि च ।' 'मन्युशोकौ तु शुक् स्त्रियाम्' 'बाष्पमूष्माश्रु' 'सुषीमः शिशिरो जडः' 'गङ्गाविष्णुपदी जह्नुतनया सुरनिम्नगा । भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।' इत्यमराः ।

भावार्थः—ग्रीष्मसन्तप्तं गङ्गासरय्वोर्जलं वर्षासु हिमाद्रेः शीतलः प्रवाहः प्रविश्य यथा शीतलयति तथैव श्रीरामलक्ष्मणागमनानन्दजातं शीतलं बाष्पजलं पतिनिधनरामविरहादिशोकसमुत्पन्नम् उष्णमश्रु शीतलं चकारेति भावः । तप्तं पानीयं शीतलेन पानीयेन शीतलं सम्पद्यते इति प्रसिद्धमेव ।

हिन्दी—उन दोनों कौसल्या सुमित्रा के पुत्रागमनानन्द से समुत्पन्न शीतल आँसूने पतिमरणरामविरहादि दुःखसे उत्पन्न उष्ण आँसू को वैसा ही ठंडा किया जैसा गर्मी से सन्तप्त गङ्गासरयू के जलको ( बरसात में ) हिमाचल से बहने-वाला शीतल जलप्रवाह ठंडा कर देता है ॥ ३ ॥

ते पुत्रयोर्नैर्ऋतशस्त्रमार्गानार्द्रानिवाङ्के सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

सञ्जीविनी—ते इति । ते मातरौ पुत्रयोरङ्के शरीरे नैर्ऋतशस्त्राणां राक्षस-शस्त्राणां मार्गान् व्रणान् शस्त्रघातकिणानार्द्रान्स्रिरसानिव सदयं स्पृशन्त्यौ क्षत्र-कुलाङ्गनानामीप्सितमिष्टमपि वीरसूर्वीरमातेति शब्दं नाकामयेताम् । वीरप्रसवो-दुःखहेतुरिति भावः ।

अन्वयः—ते पुत्रयोः अङ्के नैर्ऋतशस्त्रमार्गान् आर्द्रान् इव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितम् अपि वीरसूशब्दं न अकामयेताम् ।

वाच्य०—ताभ्यां पुत्रयोः अङ्के नैर्ऋतशस्त्रमार्गान् आर्द्रानिव सदयं स्पृशन्तीभ्यां क्षत्रकुलाङ्गनानाम् ईप्सितोऽपि वीरसूशब्दः न अकामि ( कर्मवा० ) ।

चन्द्रिका—ते कौसल्यासुमित्रे जनन्यौ, पुत्रयोः सुतयोः रामलक्ष्मणयोः, अङ्के काये, देहे, नैर्ऋतशस्त्राणां राक्षसशराणाम्, मार्गान् देहप्रवेशगर्तान् आर्द्रान् इवं सद्यो जातत्वात् रक्तक्लिन्नान् यथा, मातृहृदयमार्दवादेवायं भ्रम इति द्योतनाय इव शब्दः । सदयं वेदना मा भूदिति करुणापूर्वकं, स्पृशन्त्यौ मन्दं पाणितलेन परा-मृशन्त्यौ क्षत्राणां क्षत्रियाणां, कुलाङ्गनानां कुलवधूनाम्, वीरक्षत्रियाणीनाम्, ईप्सितमपि अभिलषितमपि, वीरसू-शब्द वीरप्रसविनी-पदं, वीरसूः, इति नाम, न अकामयेतां न ऐच्छताम्, नाभ्यलषताम् । सव्रणं पुत्राङ्गं संस्पृश्य सुकुमारहृदयतया ताभ्यां वीरप्रसवो दुःखाकर इत्यमन्यतेत्यर्थः । केचिद् बुधा अस्य पद्यस्य स्थाने—

"ते पुत्रयोर्नैर्ऋतशस्त्रमार्गान् स्थिरप्ररूढानपि वत्सलत्वात् ।
आर्द्रानिवाङ्के सदयं स्पृशन्त्यौ भूयस्तयोर्जन्म समर्थयेताम् ॥
( 'वीरप्रसूशब्दमकामयेताम्' पा० )

इति पद्यं पठन्ति अभिप्रयन्ति च सूर्यवंशीये क्षत्रियाण्यौ ते रामलक्ष्मणजनन्यौ कातरभावे विहाय 'एनयोः मातरावावां धन्यधन्ये' इत्येव मत्वा नूनं 'वीरसू'-शब्दम् कामयेते स्मेति ।

समासः—नैर्ऋतानां शस्त्राणि नैर्ऋतशस्त्राणि, नैर्ऋतशस्त्राणां मार्गाः ( ष. त. ) नैर्ऋतशस्त्रमार्गाः, तान्। क्षत्राणां ( कुलस्य अङ्गनाः ) कुलाङ्गनाः क्षत्रकुलाङ्गनाः, तासां क्षत्रकुलाङ्गनानाम्। वीरान् सुनोति इति वीरसूः, वीरसू इति शब्दः वीरसूशब्दः, तम्।

कोशः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी।' 'शस्त्रमायुधलोहयोः' 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं' 'अङ्गं प्रतीकोऽवयवः' 'कारुण्यं करुणा घृणा। कृपा दयाऽनुकम्पा स्यात्' 'वीरमाता च।' तु वीरसूः' इत्यमरः।

भावार्थः—ते कौसल्यासुमित्रे सुतयोः शरीरे राक्षसबाणप्रहारजान् व्रणान् सद्योजातानिति मत्वा पीडा न स्यादिति दयापूर्वकं परामृशन्त्यौ क्षत्रियाङ्गनाकाम्यमानमपि 'वीरमाताशब्दः पुनर्मा भूत् आवयोः' येनैतादृशी पुत्रयोर्दशा भवेदिति मातृहृदयसौकुमार्यात् चिन्तयामासतुः।

हिन्दी—वे दोनों कौसल्या तथा सुमित्रा पुत्रों के देहमें राक्षसों के शरप्रहारों से हुए घावों को ताजे घाव मान कर दयापूर्वक (कष्ट न हो ऐसा समझाना) धीरसे छूती हुई क्षत्राणियों को अभीष्ट होने पर भी 'वीरमाता यह शब्द न हो' ऐसी इच्छा करने लगीं॥ ४॥

क्लेशावहा भर्तुरलक्षणाऽहं सीतेति नाम स्वमुदीरयन्ती।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे॥ ५॥

सञ्जीविनी—क्लेशावहा इति। आवहतीत्यावहा भर्तुः क्लेशावहा क्लेशकारिणी अत एवालक्षणाऽहं सीतेति स्वं नामोदीरयन्ती स्वर्गः प्रतिष्ठाऽऽस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ। 'वधूः स्नुषा वधूर्जायास्नुषा' इत्यमरः। अभक्तिभेदेन ववन्दे। स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम्।

अन्वयः – भर्तुः क्लेशावहा अलक्षणा अहं सीता इति स्वं नाम उदीरयन्ती वधूः स्वर्गप्रतिष्ठस्य गुरोः महिष्यौ अभक्तिभेदेन ववन्दे।

वाच्य०—…………इति स्वं नाम उदीरयन्त्या वध्वा स्वर्गप्रतिष्ठस्य गुरोः महिष्यौ अभक्तिभेदेन ववन्दाते ( कर्मवा० )।

चन्द्रिका—भर्तुः पत्युः भवतोश्चिरञ्जीविनः श्रीरामस्य, क्लेशावहा कष्टदायिनी अलक्षणा कुलक्षणा, नञः प्रकृतेऽप्राशस्त्यमर्थः। अहं सीता इति एवं स्वं निजं नाम नामधेयम् उदीरयन्ती उच्चारयन्ती कथयन्ती, वधूः पुत्रपत्नी, जनी, 'समाः स्नुषाजनीवध्वः' इत्यमरः। स्वर्गप्रतिष्ठस्य सुरलोकगतस्य, स्वर्गवासिनः, महिष्यौ मुख्यपत्न्यौ श्वश्र्वौ कौसल्यासुमित्रे, अभक्तिभेदेन भक्तिभेदं विना, 'पूज्येष्वनुरागो भक्तिः' इत्याचार्याः। समाना दरानुरागेण, 'इयं तु न मम श्वश्रूः किञ्च कनीयसी, ऊर्मिलायाः श्वश्रूः' इत्यादितारतम्यं विहाय, ववन्दे प्रणनाम।

समासः—आवहतीत्यावहा, क्लेशस्य आवहा क्लेशावहा। न विद्यन्ते लक्षणानि ( शुभानि ) यस्याः सा ( बहु० ) अलक्षणा। स्वर्गः प्रतिष्ठा, यद्वा स्वर्गे प्रतिष्ठा यस्य सः ( बहु. ) स्वर्गप्रतिष्ठः तस्य स्वर्गप्रतिष्ठस्य। भक्तौ भक्तेर्वा भेदः भक्तिभेदः, न भक्तिभेदः अभक्तिभेदः, तेन अभक्तिभेदेन।

कोशः—'धवः प्रियापतिर्भर्ता, 'आदीनवास्रवौ क्लेशे' 'चिह्नं लक्ष्म च लक्षणम्' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।' 'आख्याह्वे अभिधानं च नामधेयं च नाम च।' 'वधूर्जाया स्नुषा स्त्री च' 'स्वरव्ययं स्वर्गनाक'-'गुरू गीष्पतिपित्राद्यौ' 'कृताभिषेका महिषी' इत्यमरः।

भावार्थः—'वल्लभस्य क्लेशदायिनी अशुभलक्षणाऽहं सीताऽस्मि' इति निजनामग्रहणपूर्वकं स्वर्गवासिनः श्वशुरस्य दशरथस्य स्नुषा जानकी सविनयं समानेन भक्तिभावेन ते श्वश्र्वौ कौसल्या सुमित्रे प्रणतवतीति भावः।

हिन्दी—'स्वामी को कष्ट देने वाली अशुभलक्षणा मैं सीता हूँ' ऐसे अपना नाम कहती हुई स्वर्गस्थित श्वशुरजी की बहूने दोनों सासों को एक समान भक्ति-भाव से प्रणाम किया॥ ५॥

उत्तिष्ठ वत्से ! ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या॥ ६॥

सञ्जीविनी—उत्तिष्ठेति। ननु वत्से ! उत्तिष्ठ। असौ सानुजो भर्ता तवैव शुचिना वृत्तेन महत्कृच्छ्रं दुःखं तीर्णस्तीर्णवान्' इति प्रियार्हां तां वधूंप्रियमप्यमिथ्या सत्यं ते। श्वश्र्वावूचतुः। उभयं दुर्वचमिति भावः।

अन्वयः—ननु वत्से, उत्तिष्ठ, असौ सानुजः भर्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं तीर्णः इति प्रियार्हां तां प्रियम् अमिथ्या अपि ते ऊचतुः।

वाच्य०—ननु वत्से उत्तिष्ठ, अमुना सानुजेन भर्त्रा तवैव शुचिना वृत्तेन महत् कृच्छ्रं तीर्णम्, इति प्रियार्हा सा प्रियमप्यमिथ्या ताभ्याम् ऊचे ( कर्म० )।

चन्द्रिका—ननु इत्यामन्त्रणे, अयि ! वत्से जाते, उत्तिष्ठ उच्चैर्भव, पादप्रणतायाः समुत्थानायेदं बोधनम्। असौ एषः, सानुजः सावरजः, लक्ष्मणसहितः, भर्ता प्रियः राम इत्यर्थः। तवैव केवलं ते, शुचिना विमलेन, निर्दोषेण, वृत्तेन आचरणेन पातिव्रत्येनेति यावत् महत् दुर्गमं विपुलम्, कृच्छ्रं कष्टम्, तीर्णः पारं गतः, लंघितः, इति इत्थं प्रियार्हां प्रियस्य अनुरूपाम्, मधुरभाषणयोग्याम्, तां सीतां, प्रियं मधुरम्, अमिथ्यापि तथ्यश्च, ते कौसल्या-सुमित्रे, ऊचतुः जगदतुः दुह्यादित्वात् वचतेर्द्विकर्मकत्वम्। सत्यप्रियवचने लोके दुर्लभे इत्यर्थः।

समासः—अनुजेन सह वर्तते इति सानुजः। प्रियस्य अर्हा प्रियार्हा, तां प्रियार्हाम्। न मिथ्या अमिथ्या।

कोशः—'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' 'वृत्तं पद्ये चरित्रे' 'धवः प्रियः पतिर्भर्ता' 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।' 'स्यात् कष्टकृच्छ्रमाभीलम्' 'विशालं विपुलं महत्' 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्।' 'मृषा मिथ्या च वितथे' 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।' इत्यमरः। 'ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु।' इति मेदिनी।

भावार्थः—अयि सुजाते सीते उत्तिष्ठ, एष ते पतिः सानुजः महासङ्कटस्य यत् पारं गतः तत् तव सुचरितस्यैव प्रभावात् इति मधुरभाषणार्हां सीतां ते कौसल्यासुमित्रे तथ्येन प्रियेण च वचनेन अभिनन्दयामासतुः।

हिन्दी—पुत्रि! उठो। भाई सहित यह तुम्हारा पति राम जो इतने बड़े से कष्ट को पार कर गया वह तुम्हारे ही शुद्ध चरित्र का प्रताप है। ऐसा प्रियवचन के योग्य सीताको उन दोनोंने प्रिय और तथ्य वचन कहा ॥ ६ ॥

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

सञ्जीविनी—अथेति। अथ जनन्योरानन्दजलैरानन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतो रामस्याभिषेकममात्यावृद्धास्तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः काञ्चनकुम्भतोयैर्निर्वर्तयामासुर्निष्पादयामासुः।

अन्वयः—अथ जनन्योः आनन्दजलैः प्रारब्धं रघुवंशकेतोः अभिषेकं अमात्यवृद्धाः तीर्थाहृतैः काञ्चनकुम्भतोयैः निर्वर्तयामासुः।

वाच्य०—··'प्रारब्धः रघुवंशकेतोः अभिषेकः अमात्यवृद्धैः तीर्थाहृतैः काञ्चनकुम्भतोयैः निवर्तयामासे (कर्मवा.)।

चन्द्रिका—अथेति मङ्गले। जनन्योः कौसल्यासुमित्रयोः मात्रोः, आनन्दजलैः प्रमोदनयनवारिभिः, प्रारब्धम् उपक्रान्तम्, रघुवंशकेतोः रघुकुलश्रेष्ठस्य रामस्य अभिषेकं राज्याभिषेकम्, अमात्यवृद्धाः मन्त्रिवृद्धाः कुलपरम्परागताः स्थविराः सचिवाः, तीर्थाहृतैः गङ्गाप्रभृतिभ्यः समानीतैः, काञ्चनकुम्भानां सुवर्णकलशानां तोयैः जलैः, निर्वर्तयामासुः सम्पादयामासुः।

समासः—आनन्दस्य जलानि आनन्दजलानि, तैः आनन्दजलैः। रघोः वंशः रघुवंशः, रघुवंशस्य केतुः रघुवंशकेतुः, तस्य रघुवंशकेतोः। अमात्याश्च ते वृद्धाश्च (कर्मवा.) अमात्यवृद्धाः। तीर्थेभ्यः आहृतानि, (पं.तत्पु.) तीर्थाहृतानि तैः तीर्थाहृतैः। काञ्चनस्य कुंभाः काञ्चनकुंभाः, काञ्चनकुंभानां तोयानि काञ्चनकुंभतोयानि, तैः।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' 'वंशोऽन्ववायः सन्तानः' 'आनन्दशर्मशातसुखानि च।' 'सलिलं कमलं जलम्' 'जनयित्री प्रसूर्माता जननी' 'मन्त्री धीसचिवोऽमात्यः, 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि।' 'निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ' 'चामीकरं जातरूपं महारजतकाञ्चने।' 'कुम्भौ घटेभमूर्धांशौ' इत्यमराः।

भावार्थः—अथ जनन्योः कौसल्यासुमित्रयोः आनन्दाश्रुजलेन प्रारब्धं रघुवंशतिलकस्य श्रीरामचन्द्रस्य राज्याभिषेकं मन्त्रिवृद्धाः तीर्थेभ्यो गङ्गायमुनादिभ्यः कनककलशैर्जलम् आनाय्य समारोहेण सम्पादयामासुरिति भावः ।

हिन्दी—माताओं के आनन्दाश्रुओं से आरम्भ किये गये रघुकुलतिलक श्रीरामजीके राज्याभिषेक को मन्त्रिवृद्धोंने सोने के कलशों द्वारा तीर्थों से जल मंगा कर सुसम्पन्न कर दिया ॥ ७ ॥

सरित्समुद्रान् सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

सञ्जीविनी—सरिदिति । रक्षः कपीन्द्रैः सरितो गङ्गाद्याः समुद्रान्पूर्वादीन्सरसीर्मानसादींश्च गत्वा उपपादितान्युपनीतानि जलानि जिष्णोर्जयशीलस्य । 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः । तस्य रामस्य मूर्ध्नि विन्ध्यस्य विन्ध्याद्रेर्मूर्ध्नि मेघप्रभवा आप उदकानीव अपतन् ।

अन्वयः—रक्षःकपीन्द्रैः सरित्समुद्रान् सरसीश्च गत्वा उपपादितानि जलानि जिष्णोः तस्य मूर्ध्नि विन्ध्यस्य मेघप्रभवा आप इव अपतन् ।

वाच्य०—रक्षःकपीन्द्रैः सरित्समुद्रान् सरसीश्च गत्वा उपपादितैः जलैः जिष्णोः तस्य मूर्ध्नि विन्ध्यस्य 'मूर्ध्नि' मेघप्रभवाभिः अद्भिरिव अपाति ( भाववा० ) ।

चन्द्रिका—रक्षःकपीन्द्रैः निशाचरैः कपिवरैश्च, यद्वा राक्षसश्रेष्ठैः वानरश्रेष्ठैश्च, द्वन्द्वान्ते श्रूयमाणस्य श्रेष्ठार्थकेन्द्रशब्दस्य रक्षोवानरेषु प्रत्येकमभिसंबन्धात् । सरित्समुद्रान् गङ्गादिनदीः पूर्वादिसागरान्, सरसीश्च मानसादिसरांसि च, गत्वा उपेत्य, उपपादितानि उपहृतानि, समानीतानि, जलानि अम्बूनि, जिष्णोः जयिनः जयनशीलस्य, तस्य श्रीरामस्य, मूर्ध्नि शिरसि, विन्ध्यस्य विन्ध्यपर्वतस्य मूर्ध्नि शिखरे मेघप्रभवाः जलदजाः आप इव तोयानि यथा, अपतन् अवर्षन्, निपतिताः ।

समासः—सरितश्च समुद्राश्च ( द्वन्द्व० ) सरित्समुद्राः, तान् । कपीनामिन्द्राः कपीन्द्राः रक्षांसि च कपीन्द्राश्च ( द्वन्द्वस. ) यद्वा रक्षांसि च कपयश्च ( द्वन्द्व. ) रक्षःकपयः, रक्षःकपीनाम् इन्द्राः रक्षःकपीन्द्राः, तैः रक्षःकपीन्द्रैः । मेघः प्रभवः यासां ताः ( बहु. ) मेघप्रभवाः ।

कोशः—'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ।' 'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।' 'अथ नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।' 'कासारः सरसी सरः' 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।' 'उत्तमाङ्गं शिरः शीर्षं मूर्धाना मस्तकोऽस्त्रियाम् ।' 'सलिलं कमल जलम्' 'जेता जिष्णुश्च जित्वरः' 'स्याज्जन्महेतुः प्रभवः' 'आपः स्त्री भूम्नि वार्वारि' इत्यमराः ।

भावार्थः—विभीषणानुचरा राक्षसश्रेष्ठा वानरभटाश्च गङ्गादिनदीनां चतुः-समुद्राणां पुष्करमानसादिसरसां च पवित्रजलान्यानीय सर्वत्र विजयनशीलस्य श्रीरामचन्द्रस्य मस्तके मेघाः विन्ध्यस्य शिखरे यथा जलानि वर्षन्ति तथाऽवर्षन् इति भावः ।

हिन्दी—राक्षसश्रेष्ठ एवं वानरवीरों ने गङ्गादि नदियों में चारों समुद्रों में, तथा मानसपुष्करादि सरोवरों में जा-जाकर लाये गये पवित्र जल, स्वभावतः जीतने वाले श्रीरामचन्द्रके सिरपर ऐसे गिरे जैसे कि विन्ध्यपर्वत के शिखरपर वर्षाजल गिरते हैं। राक्षस और वानर इतने पवित्र तीर्थजल श्रीरामजी के सिरपर गिराये जैसे कि बादल विंध्यकी चोटी पर बरसते हैं ॥ ८ ॥

तपस्विवेषक्रिययाऽपि तावद् यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदिताऽऽसीत्पुनरुक्तदोषा ॥ ९ ॥

सञ्जीविनी—तपस्वीति । यो रामस्तपस्विवेषक्रिययाऽपि तपस्विवेषरचनयाऽपि सुतरामत्यन्तं प्रेक्षणीयस्तावद्दर्शनीय एव बभूव । तस्य राजेन्द्रनेपथ्यविधानेन राजवेषरचनयोदिता या शोभा सा पुनरुक्तं नाम दोषो यस्याः सा पुनरुक्तदोषा द्विगुणाऽऽसीत् ।

अन्वयः—यः तपस्विवेषक्रिययाऽपि सुतरां प्रेक्षणीयः तावद् बभूव, तस्य राजेन्द्रनेपथ्यविधानशोभा उदिता पुनरुक्तदोषा आसीत् ।

वाच्य०—येन तपस्विवेषक्रिययाऽपि सुतरां प्रेक्षणीयेन तावद् बभूवे, तस्य राजेन्द्रनेपथ्यविधानशोभया उदितया पुनरुक्तदोषया अभावि (उभयत्र भाववा०)।

चन्द्रिका—यः श्रीरामचन्द्रः, तपस्विनां तापसानां, वेषक्रियया परिधानरचनयापि, तापसनेपथ्यधारणेनापि, सुतराम् अत्यन्तं नितान्तम्, प्रेक्षणीयः तावत् सुन्दर एव प्रियदर्शन एव, तावत्पदमवधारणार्थकम् । बभूव अवर्तत आसीत्, तस्य तादृशस्य श्रीरामस्य, राजेन्द्राणां चक्रवर्तिनां नेपथ्यविधानेन परिधानधारणेन, आकल्परचनया 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । शोभा छविः, उदिता उक्ता, पुनरुक्तदोषा सिद्धसाधनरूपदोषवती आसीत् अभूत् ।

समासः—तप एषामस्तीति तपस्विनः तपस्विनां वेषः तपस्विवेषः, तपस्विवेषस्य क्रिया तपस्विवेषक्रिया (ष. तत्पु.), तया तपस्विवेषक्रियया । प्रेक्षितुं योग्यः प्रेक्षणीयः । राज्ञाम् इन्द्राः राजेद्राः, राजेन्द्राणां नेपथ्यं राजेन्द्रनेपथ्यं, राजेन्द्रनेपथ्यस्य विधानं राजेन्द्रनेपथ्यविधानम्, राजेन्द्रनेपथ्यविधानेन शोभा राजेन्द्रनेपथ्यविधानशोभा । पुनरुक्तम् इति दोषः यस्या सा (बहु.) पुनरुक्तदोषा ।

कोशः—'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'आकल्पवेषौ नेपथ्यं परिकर्मप्रसाधनम् ।' 'उपायः कर्म चेष्टा च चिकित्सा च नवक्रियाः ।'

'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।' 'शोभा कान्तिर्द्युतिश्छविः' 'उक्तं भाषितमुदितं जल्पितम्' इत्यमरः।

भावार्थः—यः श्रीरामः जटादिधारणेऽपि सुतरां रमणीयाकृतिदर्शनीय आसीत् तस्यैव पुनः सम्राड्वेषरचना पुनरुक्तदोषा सिद्धस्यैव साधनमिव व्यर्था बभूव। निसर्गशोभावतः किमलंकरणैरिति भावः।

हिन्दी—जो राम तपस्वियों के ( जटा वल्कल आदि ) वेष धारण करने पर भी अत्यन्त सुन्दर लगते थे, उनके महाराजवेष धारण करने से जो शोभा हुई वह पुनरुक्त दोष जैसा हो गया॥ ९॥

स मौलरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम्॥ १०॥

सञ्जीविनी—स इति। स रामः ससैन्यस्तूर्यस्वनैरानन्दितपौरवर्गः सन्, मूले भवा मौला मन्त्रिवृद्धास्ते रक्षोभिर्हरिभिश्च सह सौधेभ्य उद्गतलाजवर्षामुत्तोरणामन्वयराजधानीमयोध्यां विवेश प्रविष्टवान्।

अन्वयः—स ससैन्यः तूर्यस्वनानन्दितपौरवर्गः मौलरक्षोहरिभिः सौधोद्गतलाजवर्षाम् उत्तोरणामन्वयराजधानीं विवेश।

वाच्य०—तेन ससैन्येन तूर्यस्वनानन्दितपौरवर्गेण मौलरक्षोहरिभिः 'सह' सौधोद्गतलाजवर्षा उत्तोरणा अन्वयराजधानी विविशे ( कर्मवा० )

चन्द्रिका—सः श्रीरामः, ससैन्यः सेनाभिः सहितः, तूर्यस्वनेन मुरजाख्यवाद्यध्वनिना, आनन्दितः आह्लादितः पौरवर्गः नागरिकसमूहः येन स तथोक्तः मौलैः मन्त्रिभिः रक्षोभिः यातुधानैः विभीषणादिभिः हरिभिः वानरैः च सह, 'वृद्धो यूना' इति निर्देशात् सहशब्दं विनाऽपि तृतीया तदर्थकयोगे। सौधोद्गतं सुधालिप्तसदनेभ्य उत्पन्नं, लाजवर्षं मङ्गलार्थं भृष्टधान्यानां वृष्टिः यस्यां तथोक्ताम् शोभायान्नायाम् अयोध्यावासिनः श्रीरामोपरि हर्षेण अट्टालिकागवाक्षेभ्यः लाजान् वर्षन्ति स्मेत्यर्थः। उत्तोरणाम् उच्छितनूतनबहिर्द्वाराम् श्रीरामसम्मानार्थं निज-निजभवनसम्मुखे आम्रपल्लवादिभिः कृतनवीनस्तम्भविशेषामित्यर्थः। अन्वयस्य रघुकुलस्य राजधानीम् अयोध्यानगरीम् विवेश अन्तर्गतवान्, प्राविशत्।

समासः—मूले भवाः मौलाः, मौलाश्च रक्षांसि च हरयश्च ( द्वन्द्वस० ) मौलरक्षोहरयः, तैः मौलरक्षोहरिभिः। सैन्येन सह वर्तते इति ससैन्यः (बहु)। तूर्यस्य तूर्याणां वा स्वनः तूर्यस्वनः, पुरे भवाः पौराः, पौराणां वर्गः पौरवर्गः। तूर्यस्वनेन आनन्दितः पौरवर्गः येन सः (बहु.) तूर्यस्वनानन्दितपौरवर्गः। लाजानां वर्षं लाजवर्षम्, सौधेभ्य उद्गतं लाजवर्षं यस्यां सा, सौधोद्गतलाजवर्षा, तां सौधोद्गतलाजवर्षाम्। उच्छितानि तोरणानि यस्यां सा ( बहु. ) उत्तोरणा, ताम् उत्तोरणाम्। अन्वयस्य ( राजानो धीयन्तेऽस्यामिति ) राजधानी ( ष. तत्पु. ) अन्वयराजधानी, ताम् अन्वयराजधानीम्।

कोशः—'नैर्ऋतो यातुरक्षसी' 'शुकाहि कपिभेकेषु हरिर्ना कपिले त्रिषु ।' 'वरूथिनी बलं सैन्यम्' 'धानिध्वानरवस्वनाः' 'वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः ।' 'सौधोऽस्त्री राजसदनम्' 'लाजाः पुंभूम्नि चाक्षताः' 'वृष्टिर्वर्षं तद्विघाते' 'तोरणोऽस्त्री बहिर्द्वारम्' 'कुलान्यभिजनान्वयौ' इत्यमराः ।

भावार्थः—अभिषेकोत्तरं श्रीरामः शोभायात्रां कुर्वन् सेनया मन्त्रिवर्गैः विभीषणादिराक्षसैः सुग्रीवादिकपिवृन्दैश्च सह वाद्यमानभेर्यादिध्वनिभिः पौरजनान् हर्षयन् रघुकुलराजधानीमयोध्यानगरीं प्रविवेश, यत्र मार्गे गमनावसरे नागरिका आनन्दोल्लासेन अट्टालिकागवाक्षेभ्यः लाजान् श्रीरामोपरि वर्षन्ति स्म, निजभवनानि च श्रीरामस्वागतार्थं तोरणध्वजामङ्गलकलशादिभिः सम्यग् सज्जीकृतवन्तश्चेति भावः ।

हिन्दी—सेनासहित श्रीरामचन्द्र तूरी आदि बाजों की ध्वनियों से नागरिकों को आनन्दित करते हुए, मन्त्रियों, राक्षसों तथा वानरों के साथ उस रघुकुल राजधानी अयोध्यामें प्रवेश किये, जिसके, बड़े-बड़े भवनों की अट्टालिकाओं से लावें बरस रहे थे और जो तोरणों से सुसज्जित थी ॥ १० ॥

सौमित्रिणा सावरजेन मन्दमाधूतबालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन साक्षादुपायसङ्घात इव प्रवृद्धः ॥ ११ ॥

सञ्जीविनी—सौमित्रिणेति । सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दमाधूते बालव्यजने चामरे यस्य स रथस्थो भरतेन धृतातपत्र एव चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां सङ्घातः समष्टिरिव । विवेशेति पूर्वेण सम्बन्धः ।

अन्वयः—सावरजेन सौमित्रिणा मन्दम् आधूतबालव्यजनः रथस्थः भरतेन धृतातपत्रः प्रवृद्धः साक्षाद् उपायसंघात इव 'विवेश' ।

वाच्य०—सावरजेन सौमित्रिणा मन्दमाधूतबालव्यजनेन भरतेन धृतातपत्रेण साक्षादुपायसंघातेन इव 'विविशे ।'

चन्द्रिका—सावरजेन अनुजशत्रुघ्नसहितेन सौमित्रिणा लक्ष्मणेन, मन्दं शनैः, आधूते ईषत्कम्पिते किञ्चिच्चलिते बालव्यजने चामरे यस्य स तथोक्तः, उभयोः पार्श्वयोः लक्ष्मणशत्रुघ्नौ शनैः शनैः चामरे चालयन्तावास्तामित्यर्थः । रथस्थः स्यन्दनगतः, भरतेन, धृतातपत्रः गृहीतच्छत्रः श्रीरामः प्रवृद्धः समेधितः वृंहितः, साक्षात् मूर्तिमान्, देहधारी, उपायसंघात इव सामदानदण्डभेदाख्यानाम् उपायानां व्यूहो यथा, विवेशेति गतेनान्वयः ।

समासः—अवरं जातः अवरजः, अवरजेन सह वर्तते इति सावरजः (बहु०), तेन । सुमित्राया अपत्यं पुमान् सौमित्रिः, तेन सौमित्रिणा । बाले च ते व्यजने च बालव्यजने ( कर्म० ) आधूते बालव्यजने यस्य यस्मै वा सः ( बहु० ) आधूत-

बालव्यजनः। रथे तिष्ठतीति रथस्थः। धृतम् आतपत्रं ( आतपात् त्रायते इति ) यस्य सः ( बहु० ) धृतातपत्रः। उपायानां संघातः उपायसंघातः।

कोशः—'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।' 'मूढाल्पापटुनिर्भाग्याः मन्दाः' 'व्यजनं तालवृन्तकम्' 'शताङ्गः स्यन्दनो रथः' 'छत्रं त्वातपत्रम्' 'साक्षात्प्रत्यक्षतुल्ययोः' 'स्तोमौघनिकरव्रातवारसंघातसञ्चयाः।' 'भेदो दण्डः सामदानमित्युपायचतुष्टयम्।' 'वा यथा तथैवैवम्' इत्यमरः।

भावार्थः—उभौ भ्रातरौ शत्रुघ्नलक्ष्मणौ पार्श्वयोः स्थित्वा रथोपविष्टं श्रीरामं वीजयतः स्म, भरतः श्वेतातपत्रं श्रीरामोपरि धृतवान् इत्थं भ्रातृत्रयेण सहितः श्रीरामः वृद्धिं गतः। राजोपयोगिसामाद्युपायव्यूह इव राजधानीं प्रविष्ट इति भावः।

अलंकारः—अभूतोपमालङ्कारः—इति दण्डी 'अविद्यमानतद्धर्मे यद्येवम्भूतः स्यादिति' वर्णनेऽयमलंकारस्तस्याभिप्रेतः।

हिन्दी—अनुज ( छोटा भाई ) शत्रुघ्न के साथ लक्ष्मण जिन्हें धीरे से चँवर डुला रह थे ( या पंखा हिला रहे थे ) ऐसे रथमें बैठे हुए तथा भरत जिनके लिए छत्र ग्रहण किया है, ऐसे श्रीरामचन्द्र परिपुष्ट साम, दान, भेद और दण्ड रूपी उपायों ( विजयसाधन ) के समूह जैसे राजधानी में प्रविष्ट हुए ॥ ११ ॥

प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना।
वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

सञ्जीविनी—प्रासादेति। वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमस्तस्य राजी रेखा। वनान्निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता तस्याः पुरः पुर्या वेणिरिव आबभासे। पुरोऽपि पतिव्रतासमाधिरुक्तः। "न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत्" इति हारीतः।

अन्वयः—वायुवशेन भिन्ना प्रासादकालगुरुधूमराजिः वनात् निवृत्तेन रघूत्तमेन स्वयं मुक्ता तस्याः पुरः वेणिरिव आबभासे।

वाच्य०—वायुवशेन भिन्नया प्रासादकालागुरुधूमराज्या वनान्निवृत्तेन रघूत्तमेन स्वयं मुक्तया वेण्या इव आबभासे ( भाववा० )।'

चन्द्रिका—वायुवशेन मारुताधीनतया, पवनकम्पनादिति यावत्। भिन्नाविशकलीकृता, प्रसृतेत्यर्थः, प्रासादे राजभवने यः कालागुरुः सौरभयुक्तो धूपविशेषः, तस्य राजिः पंक्तिः, वनात् अरण्यात्, निवृत्तेन परावृत्तेन, अयोध्यां प्रत्यागतेन रघूत्तमेन श्रीरामचन्द्रेण, स्वयं आत्मना मुक्ता विसृष्टा ग्रथनाद् विस्रंसिता, अस्याः एतस्याः अयोध्यायाः पुरः नगर्याः, वेणिरिव प्रवेणी यथा, सर्पाकारेणावेष्टितकेशव्यूहवत् अयोध्यापि प्रोषितभर्तृका पतिव्रतेव बद्धवेणिरासीत्, इदानीं श्रीरामेण वनान्निवृत्य स्वहस्तेन मोचिता तद्वेणिरिव, आबभासे भाति स्म।

समासः—वायोः वशः वायुवशः तेन वायुवशेन। कालागुरोः धूमराजिः ( धूमानां राजिः धूमराजिः ) कालगुरुधूमराजिः, प्रासादे कालागुरुधूमराजिः ( स. तत्पु. ) प्रासादकालागुरुधूमराजिः। रघुषु उत्तमः रघूत्तमः, तेन।

कोशः—'प्रासादो देवभूभुजाम्' 'वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम्। कालागुर्वगुरु स्यात्तु' 'वीथ्यालिरावलिः पंक्तिः श्रेणी लेखास्तु राजयः।' 'पूः स्त्री पुरीनगर्यौ वा' 'वायुर्मातरिश्वा सदागतिः' 'भिन्नवित्तौ विदारिते' 'गहनं काननं वनम्' 'वेणिः प्रवेणी शीर्षण्याशिरस्यौ विशदे कचे।' 'स्वयमात्मना' इत्यमराः।

भावार्थः—श्रीरामस्नागते राजभवने अगुरुधूपः प्रज्वलित आसीत्, तस्य धूमपंक्तिः वायुना इतस्ततः प्रसार्यमाणा या उड्डीयते स्म सा श्रीरामप्रवासे बद्धा पतिव्रताया अयोध्यानगर्याः वेणिः साम्प्रतं अरण्यात्परावृत्तेन श्रीरामेण मोचितेव शोभते स्म।

अलंकारः—उत्प्रेक्षालंकारः-वेणीधूमयोः श्यामत्ववक्रत्वासाधर्म्यात् धूपधूमश्रेण्याः श्रीरामकरमोचितायोध्यापुर्याः वेणीत्वेनोत्प्रेक्षणात्।

हिन्दी—राजभवनसे निकली हुई अगुरुधूपों की धूमरेखा वायु के कारण बिखरी-सी होकर ऐसी जान पड़ती थी कि इतने दिनों के अनन्तर बनसे लौटे हुए श्रीरामने ( अपने विरहमें बद्ध जटाको ) उस नगरीकी वेणी को स्वयं खोल दिया हो ॥ १२ ॥

श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम्।
प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥

सञ्जीविनी—श्वश्रूजनेति। श्वश्रुजनैरनुष्ठितचारुवेषां कृतसौम्यनेपथ्याम्। 'आकल्पवेषौ नेपथ्यम्' इत्यमरः। कर्णीरथः स्त्रीयोग्योऽल्परथः। 'कर्णीरथः प्रवहणं डयनं रथगर्भके' इति यादवः। तत्रस्थां रघुवीरपत्नीं सीतां साकेतनार्यः प्रासादवातायनेषु दृश्यबन्धैर्लक्ष्यपुटैरञ्जलीभिः प्रणेमुः।

अन्वयः—श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीं साकेतनार्यश्चः प्रासादवातायनदृश्यबन्धैः अञ्जलिभिः प्रणेमुः।

वाच्य०—श्वश्रुजनानुष्ठितचारुवेषा कर्णीरथस्था रघुवीरपत्नीं साकेतनारीभिः प्रासादवातायनदृश्यबन्धैः अञ्जलिबन्धैः प्रणेमे।

चन्द्रिका—श्वश्रूजनैः पतिमातृभिः, अन्याभिरपि वृद्धाभिरन्तःपुरनारीभिः, अनुष्ठितः कृतः, विहितः चारुवेषः सुन्दरनेपथ्यं यस्याः तथोक्तां, कर्णीरथस्थां महिलोचितरथे समासीनाम् रघुवीरपत्नीं श्रीरामचन्द्रसहधर्मिणीं सीतां, साकेतनार्यः अयोध्यामहिलाः, प्रासादां सौधानां वातायनेषु गवाक्षेषु, दृश्यबन्धैः समालक्ष्ययोजनैः तासां पाणिद्वयसम्पुटीकरणं दृश्यते स्मेति भावः। अञ्जलिभिः मुकुलीकृतपाणिद्वयैः, प्रणेमुः अवन्दन्त।

समासः—श्वश्र्व इति जनाः श्वश्रूजनाः, श्वश्रूजनैः अनुष्ठितः चारुः वेषः यस्याः सा ( बहुपदवहु० ), तां श्वश्रूजनानुष्ठितचारुवेषाम् । कर्णीरथे तिष्ठतीति कर्णीरथस्था, तां कर्णीरथस्थाम् । रघुषु वीरः रघुवीरः, रघुवीरस्य पत्नी रघुवीरपत्नी, तां रघुवीरपत्नीम् । साकेतस्य नार्यः साकेतनार्यः, प्रासादानां वातायनानि प्रासादवातायनानि, प्रासादवातायनेषु दृश्यः बन्धः येषां ते प्रासादवातायनदृश्यबन्धाः, तैः प्रासादवातायनदृश्यबन्धैः ।

कोशः—'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।' 'सुन्दरं रुचिरं चारु' 'आकल्पवेषौ नेपथ्यम्' 'कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।' 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । 'प्रासादो देवभूभुजाम् ।' 'वातायनं गवाक्षोऽथ' 'पाणिर्निकुब्जः प्रसृतिः तौ युतावञ्जलिः पुमान् ।' इत्यमरः ।

भावार्थः—श्वश्रूभिः परिधापितरमणीयनेपथ्यां रथे समासीनां श्रीरामपत्नीं माननीयां सतीमणिं सीताम् अयोध्यापौरमहिलाः अट्टालिकागवाक्षेषु दृश्यतया साञ्जलिबन्धं प्रणतवत्य इति भावः ।

हिन्दी—सासुओं द्वारा जिनको सुन्दर परिधान पहनाया गया है, ऐसी रथपर बैठी हुई सीताजी को अयोध्या की पुर महिलाएँ निजभवनों की खिड़कियों में दिखाई देनेवाली अंजलियों से प्रणाम कर रही थीं ॥१३॥

स्फुरत्प्रभामण्डलमानुसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।
रराज शुद्धेति पुनः स्वपुर्यै सन्दर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥

सञ्जीविनी—स्फुरदिति । स्फुरत्प्रभामण्डलमानुसूयमनुसूयया दत्तं शाश्वतं सदातनमङ्गरागं विलेपनद्रव्यं बिभ्रती सा सीता भर्त्रा स्वपुर्यै शुद्धेति सन्दर्शिता पुनर्वह्निगतेव रराज ।

अन्वयः—स्फुरत्प्रभामण्डलम् आनुसूयं शाश्वतम् अङ्गरागं बिभ्रती सा भर्त्रा स्वपुर्यै शुद्धा इति संदर्शिता पुनः वह्निगता इव विरराज ।

वाच्य०—स्फुरत्प्रभामण्डलमानुसूयं शाश्वतमङ्गरागं बिभ्रत्या तया भर्त्रा स्वपुर्यै शुद्धेति संदर्शितया पुनः वह्निगतया इव रेजे ( भाववा० ) ।

चन्द्रिका—स्फुरत् प्रकाशमानम्, प्रभामण्डलं कान्तिपुञ्जं यस्य तत् तथोक्तम्, देदीप्यमानच्छवियुक्तमिति यावत् । आनसूयम् अत्रिपत्नीदत्तम्, अनसूयाप्रदत्तम्, शाश्वतं सर्वदा स्थायि, अङ्गरागम् देहानुलेपनम्, बिभ्रती धारयन्ती, दधाना, सा जानकी, भर्त्रा पत्या रामेण, स्वपुर्यै निजनगराय, अयोध्यायै शुद्धा निर्दूषणा, अपांसुला, इति एवं, सन्दर्शिता प्रदर्शिता, प्रकाशिता, पुनः द्वितीयवारं, वह्निगता शुद्धिपरीक्षार्थम् अग्निं प्रविष्टा, इवेत्युत्प्रेक्षायाम्, नूनम्, रराज बभासे तथा चाध्यात्मरामायणे- 'अङ्गरागं च सीतायै ददौ दिव्यं शुभानना । न त्यक्ष्यतेऽङ्गरागेण शोभा त्वां कमलानने ॥'

समासः—प्रभायाः मण्डलं प्रभामण्डलम्, स्फुरत् प्रभामण्डलं यस्य ( बहु. ) सः, तं स्फुरत्प्रभामण्डलम् । अनसूयाया आगतः आनसूयः, तम् आनसूयम् । अङ्गस्य रागः अङ्गरागः, तम् अङ्गरागम् । शश्वत् भवः शाश्वतः, तं शाश्वतम् । वह्निं गता ( द्वि. त. ) वह्निगता ।

कोशः—'स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।' 'बिम्बोऽस्त्री मण्डलं त्रिषु ।' 'शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ।' 'मुहुः पुनः पुनः शश्वत्' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' 'पूः स्त्री पुरीनगर्यौ वा' 'धवः प्रियः पतिर्भर्ता' 'अग्निर्वैश्वानरो वह्निः' इत्यमराः ।

भावार्थः—वनवासार्थं दण्डकारण्ये अत्रेराश्रमे रामलक्ष्मणाभ्यां सह प्रविष्टायै परमपवित्रायै सीतायै गमनावसरे अनुसूयया साशीर्वादोपदेशं दत्तं सर्वदा देदीप्यमानं शरीरानुलेपनं धारयन्ती सा सीता श्रीरामेण अयोध्यावासिभ्यः प्रदर्शयितुं पुनरग्निपरीक्षार्थं पावकं प्रविष्टेव राजते स्म । अग्निवर्णेन जाज्वल्यमानेन स्थिरकान्तिना अनसूयादत्ताङ्गरागेण देहेऽनुलिप्तेन अयोध्यावासिनां पुरः सा सीता अग्निप्रविष्टेव भासते स्मेति भावः ।

अलंकारः—फलोत्प्रेक्षा, नागरिकसन्दर्शनफलकाग्निप्रवेशोत्प्रेक्षणात् । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।' इति तल्लक्षणात् ।

हिन्दी—चमकते हुए कान्ति पुंजवाले, अत्रिमहर्षि की पत्नी अनसूयासे प्रदत्त सर्वदा स्थायी अंगराग को धारण की हुई सीता ऐसी शोभित होती थी, मानो स्थिर रहनेवाले अपने पति श्रीराम से अयोध्यावासियों को 'यह निर्दोष है' इस बात को दिखाने के लिए अग्नि में प्रविष्ट की गई हो ॥ १४ ॥

वेश्मानि रामः परिबर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥ १५ ॥

सञ्जीविनी—वेश्मानीति । सुहृदो भावः सौहार्दं सौजन्यम् । "हृद्भग-सिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । सौहार्दनिधी रामः सुहृद्भ्यः परिबर्ह-वन्त्युपकरणवन्ति वेश्मानि विश्राण्य दत्वा । आलेख्यशेषस्य चित्रमात्रशेषस्य पितु-र्बलिमत्पूजायुक्तं निकेतं गृहं बाष्पायमाणो बाष्पमुद्वमन्विवेश । "बाष्पोष्मभ्यामुद्व-मने" इति क्यङ्प्रत्ययः ।

अन्वयः—सौहार्दनिधिः रामः सुहृद्भ्यः परिबर्हवन्ति वेश्मानि विश्राण्य आलेख्यशेषस्य पितुः बलिमत् निकेतं बाष्पायमाणः विवेश ।

वाच्य०—सौहार्दनिधिना रामेण सुहृद्भ्यः परिबर्हवन्ति वेश्मानि विश्राण्य आलेख्यशेषस्य पितुः बलिमत् निकेतं विविशे ( कर्मवा० ) ।

चन्द्रिका—सौहार्दनिधिः सुजनताशेवधिः, स्थिरसौजन्य इति यावत् । रामः श्रीरामचन्द्रः, सुहृद्भ्यः मित्रेभ्यः सुग्रीवविभीषणादिभ्यः, परिबर्हवन्ति नृपोपयोगि-

सामग्रीयुक्तानि, 'परिच्छदे नृपार्हेऽर्थे परिवर्हः' इत्यमरः, वेश्मानि भवनानि, विश्राण्य वितीर्य, आलेख्ये चित्रे शेषस्य अवशिष्टस्य, स्वर्गं गतस्येत्यर्थः। बलिमत् उपहारयुक्तम् 'करोपहारयोरस्त्री बलिः प्राण्यङ्गजे स्त्रियाम्' राजभिरुपायनरूपेण प्रदत्तविशिष्टपदार्थालंकृतमित्यर्थः। निकेतं सदनम्, बाष्पायमाणैः अश्रुधारां मुञ्चन्, विवेश प्राविशत्।

समासः—सुहृदो भावः सौहार्दम्, सौहार्दस्यनिधिः सौहार्द निधिः। परिवर्हं एषामस्तीति परिबर्हवन्ति, तानि ( मत्वर्थीय० )। आलेख्ये शेषः ( शिष्यते इति कर्मणि घञ् ) आलेख्यशेषः, तस्य आलेख्यशेषस्य। बलिः अस्यास्तीति बलिमत्, तत्। बाष्पम् उद्वमन् वाष्पायमाणः।

कोशः—'वेश्म सद्म निकेतनम्' 'परिच्छदे नृपार्हेऽर्थे परिबर्हः' 'अथ मित्रं सखा सुहृत्' 'निधिर्ना शेवधिः' 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्।' 'करोपहारयोरस्त्री बलिः प्राण्यङ्गजे स्त्रियाम्।' 'तातस्तु जनकः पिता' 'बाष्पमूष्माश्रु' इत्यमराः।

भावार्थः—अक्षय्यसौजन्यशाली श्रीरामः सुहृदां निवासार्थं राजोपकरणयुक्तानि गृहाणि प्रदाय स्वयं चित्रशेषस्य पुत्रवत्सलस्य तातदशरथस्य राजोपहृतोपायनैः सज्जितं भवनम् अश्रूणि स्रावयन् प्राविशत् इति भावः

हिन्दी—सौजन्य के खजाने श्रीरामचन्द्र सुग्रीवादि मित्रों को निवास के लिए राजोपयोगि साधनों से युक्त भवन देकर स्वयं चित्रशेष पिता के अन्यराज प्रदत्त विविध भेंट के पदार्थों से सज्जित गृह में आँसू बहाते हुए प्रवेश किये ॥ १५ ॥

कृताञ्जलिस्तत्र यदम्ब सत्यान्नाभ्रश्यत स्वर्गफलाद् गुरुर्नः।
तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः ॥ १६ ॥

सञ्जीविनी—कृताञ्जलिरिति। तत्र निकेतने कृताञ्जलिः सन् रामः। हे अम्ब ! नो गुरुः पिता स्वर्गः फलं यस्य तस्मात्सत्यान्नाभ्रश्यत न भ्रष्टवानिति यदभ्रंशनं तच्चिन्त्यमानं विचार्यमाणं तव सुकृतम्। इत्येवं प्रकारेण भरतस्य मातुः कैकेय्या लज्जां जहारापानयत्, राज्ञां प्रतिज्ञापरिपालनं स्वर्गसाधनमित्यर्थः। भरतग्रहणं तदपेक्षयाऽपि कैकेय्यनुसरणद्योतनार्थम्।

अन्वयः—तत्र कृताञ्जलिः 'अम्ब ! नः गुरुः स्वर्गफलात् सत्यात् न अभ्रश्यत' इति यत् तत् चिन्त्यमानं तव सुकृतम् 'अस्ति' इति भरतस्य मातुः लज्जां जहार।

वाच्य०—तत्र कृताञ्जलिना 'रामेण' अम्ब ! नः गुरुणा सत्यात् न अभ्रश्यत ( कर्म० ) इति यत् तेन चिन्त्यमानेन तव सुकृतेन 'अभावि' ( इति भाववा० ) भरतस्य मातुः लज्जा जह्रे ( कर्मवा० )

चन्द्रिका—तत्र पितृगृहे, कृताञ्जलिः संयोजितपाणिद्वयः, प्रणामं कुर्वन्निति यावत्। हे अम्ब ! हे मातः ! नः अस्माकम्, गुरुः पिता दशरथः, स्वर्गफलात्

सुरलोकपरिणामकात् स्वर्गप्रदादित्यर्थः। सत्यात् तथ्यात्; नाभ्रश्यत नास्खलत्, इति एवं, यत् तत् स्वर्गास्थलनं, चिन्त्यमानं विवेच्यमानम्, क्रियमाणविचारम्, तव ते, सुकृतं पुण्यम् 'अस्ति वर्तते' इति इत्थ, उक्त्वेति शेषः, भरतस्यम्, मातुः कैकेय्याः, लज्जां सर्वप्रियरामवनप्रेषणदशरथमरणादिजातां व्रीडाम्, जहार अपनिनाय, त्याजयामासेत्यर्थः।

समासः—कृतः अञ्जलिः येन सः (बहु०) कृताञ्जलिः। स्वर्गः फलं यस्य तत् (बहु०) स्वर्गफलं तस्मात् स्वर्गफलात्।

कोशः—'पाणिर्निकुब्जः प्रसृतिः तौ युतावञ्जलिः पुमान्।' 'सत्यं तथ्यमृतं सम्यग्' 'गुरू गीष्पतिपित्राद्यौ' स्वरव्ययं 'स्वर्गनाक-' 'सुकृती पुण्यवान् धन्यो' 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः।

भावार्थः—तस्मिन् भवने स्वकुकृत्यात् लज्जावनतां मातरं कैकयीमुपसृत्य प्रणामान् कुर्वन् 'हे मातः! तातदशरथः स्वर्गप्रदान् सत्यपालनात् तवैव पुण्यविशेषात् न च्युतः अभूत्' इति सान्त्वनावचनानि वदन् श्रीरामः तस्याः लज्जासङ्कोचं दूरीकृतवानिति। भावः।

हिन्दी—उस घरमें हाथ जोड़े हुए श्रीराम ने 'हे माता हमारे पिता स्वर्ग-(फल) देनेवाले सत्य से जो नहीं हटे, वह विचार किये जानेपर तुम्हारा ही पुण्य है' इस प्रकार (कहकर) भरत की माता कैकेयी की लज्जा को दूर किया॥ १६॥

तथैव सुग्रीवविभीषणादीनुपाचरत्कृत्रिमसंविधाभिः।
सङ्कल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन॥ १७॥

सञ्जीविनी—तथेति। सुग्रीवविभीषणादीन्। संविधीयन्त इति संविधा भोग्यवस्तूनि। कृत्रिमसंविधाभिस्तथा तेन प्रकारेणैवोपाचरत्। यथा सङ्कल्पमात्रेणेच्छामात्रेणोदितसिद्धयस्ते सुग्रीवादयश्चेतसि विस्मयेन क्रान्ता आक्रान्ताः।

अन्वयः—'श्रीरामः' सुग्रीवविभीषणादीन् कृत्रिमसंविधाभिः तथा एव उपाचरत् यथा संकल्पमात्रोदितसिद्धयः ते चेतसि विस्मयेन क्रान्ताः।

वाच्य०—'रामेण' सुग्रीवविभीषणादयः कृत्रिमसंविधाभिः तथैव उपाचर्यन्त (कर्मवा०) यथा सङ्कल्पमात्रोदितसिद्धीन् तान् चेतसि विस्मयः क्रान्तवान् (कर्तृवा०)।

चन्द्रिकाः—'श्रीरामः' सुग्रीविभीषणादीन् सुकण्ठरावणानुजाङ्गदप्रभृतीन्, कृत्रिमसंविधाभिः, क्रियोपकल्पितभोग्यपदार्थैः, तथैव तेन प्रकारेणैव, उपाचरत् सत्कृतवान् यथा येन प्रकारेण, संकल्पमात्रेण चिन्तनमात्रेण, उदितसिद्धयः प्राप्ताभीष्टफलाः, ते सुग्रीवविभीषणाङ्गदाद्याः चेतसि मनसि, विस्मयेन आश्चर्येण, क्रान्ताः अभिभूताः, आविष्टाः अभूवन्निति शेषः।

समासः—सुग्रीवश्च विभीषणादयः, तान् सुग्रीवविभीषिणौ ( द्वन्द्व० ) सुग्रीवविभीपणौ आदी येषां ( बहु० । ते सुग्रीवविभीसणादयः, तान् सुग्रीवविभीषणादीन् । क्रियया निर्वृत्ताः कृत्त्रिमाः, संविधीयन्ते इति संविधाः (कर्मण्यप्रत्ययः), कृत्रिमाश्च ताः संविधाश्च ( कर्मधा० ) कृत्रिमसंविधाः, ताभिः कृत्रिमसंविधाभिः। संकल्प एव संकल्पनात्रं, संकल्पमात्रेण उदिता सिद्धिः येषां ते ( बहु० ) संकल्पमात्रोदितसिद्धयः ।

कोशः—'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' 'संकल्पः कर्म मानसम्' 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।' 'विस्मयोऽद्भुतमाश्चर्यं चित्रम्' 'ववा यथा तथेवैवम्' इत्यमराः ।

भावार्थः – श्रीरामः सुग्रीवविभीषणादीन् तत्तदवसरोचितैः भोग्यपदार्थैः तथा उपचारम् अकरोत् यथा इच्छामात्रलब्धाभीष्टफलाः ते सुग्रीवादयोऽपि आश्चर्य चकिता जाता इति भावः ।

हिन्दी—श्रीराम ने सुग्रीव-विभीषणादि का नई-नई प्रस्तुत भोग्यवस्तुओंसे ऐसा उपचार-आदर-सत्कार किया की संकल्पमात्र से ही अभीष्ट फल पाने वाले वे मन में आश्चर्यसे दंग रह गये ।। १७ ।।

सभाजनायोपगतान् स दिव्यान् मुनीन् पुरस्कृत्य हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम् ।। १८ ।।

सञ्जीविनी—सभाजनायेति । स रामः सभाजनायाभिनन्दनायोपगतान्दिव्यान्मुनीनगस्त्यादीन्पुरस्कृत्य हतस्य शत्रो रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवमुत्कर्षमादधानं वृत्तं तेभ्यो मुनिभ्यः शुश्राव श्रुतवान्, विजितोत्कर्षाज्जितुरुत्कर्ष इत्यर्थः ।

अन्वयः—सः सभाजनाय उपगतान् दिव्यान् मुनीन् पुरस्कृत्य हतस्य शत्रोः प्रभवादि स्वविक्रमे गौरवम् आदधानं वृत्तं तेभ्यः शुश्राव ।

वाच्य०—तेन सभाजनायोपगतान् दिव्यान् मुनीन् पुरस्कृत्य हतस्य शत्रोः प्रभवादि स्वविक्रमे गौरवम् आदधानं वृत्तं तेभ्यः शुश्रुवे ( कर्मवा० ) ।

चन्द्रिका—सः श्रीरामचन्द्रः, सभाजनाय पूजनाय, अभिनन्दयितुम्, उपगतान् उपेतान्, समागतान्, दिव्यान् पूज्यान्, अलौकिकान्, मुनीन् ऋषीन्, पुरस्कृत्य सत्कृत्य, हतस्य विनाशितस्य, मारितस्य, शत्रोः दशाननस्य, प्रभवादि जननादि, स्वविक्रमे, निजपराक्रमे, गौरवं महत्त्वम्, आदधानं सम्पादयत्, वृत्तं चरित्रम्, रामायणम् इत्यर्थः । तेभ्यः अगस्त्यादिमुनिभ्यः, शुश्राव आकर्णयामास ।

समासः—प्रभवः आदिः यस्य तत् ( बहु० ) प्रभवादि, तत् । स्वस्य विक्रमः स्वविक्रमः, तस्मिन् स्वविक्रमे, गुरोर्भावः गौरवम्, तत् । आधत्ते इति आदधानम्, तत् ।

कोशः—'आनन्दन-सभाजने । आप्रच्छन्नम् ।' 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।' 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।' 'स्याज्जन्महेतुः प्रभवः' 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' 'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ।' इत्यमरः ।

भावार्थः—श्रीरामः स्वाभिनन्दनाय समागतान् दिव्यज्ञानिनो मुनीन् सादरं पूजयित्वा तेषां सकाशात् मारितस्य वैरिणो रावणस्य जन्मादिकं यत् निजपराक्रमे अतिशयतां सम्पादयति तादृशमितिवृत्तं श्रुतवान् इति भावः ।

हिन्दी—श्रीराम अपने अभिनन्दन करने के लिए आये हुए दिव्यज्ञानी मुनियों का आदर-सत्कार कर मरे हुए शत्रु दशानन के जन्म, प्रताप आदि उस चरित को, जो कि अपने पराक्रम में गौरव बढ़ानेवाला है, उनसे सुनते थे ॥१८॥

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपीन्द्रान् विससर्ज रामः ॥ १९ ॥

सञ्जीविनी—प्रतीति । तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्य गतेषु सत्सु सुखादविज्ञात एव गतोऽर्धमासो येषांताननन्तरं सीतायाः स्वहस्तेनोपहृता दत्ताग्र्यपूजोत्तमसम्भावना येभ्यस्तान् । एतेन सौहार्दातिशय उक्तः । रक्षःकपीन्द्रान् रामो विससर्ज विसृष्टवान् ।

अन्वयः—तपोधनेषु प्रतिप्रयातेषु सुखात् अविज्ञातगतार्धमासान् सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपीन्द्रान् रामः विससर्ज ।

वाच्य०—तपोधनेषु प्रतिप्रयातेषु सुखादविज्ञातगतार्धमासाः सीतास्वहस्तोपहृताग्र्यपूजाः रक्षःकपीन्द्राः रामेण विससृजिरे ( कर्मवा० ) ।

चन्द्रिका—तपोधनेषु तपस्विषु, प्रतिप्रयातेषु प्रतिनिवृत्तेषु 'सत्सु भवत्सु' सुखात् आनन्दात्, अविज्ञातः अविभावितः, गतः अतीतः, लङ्घितः, अर्धमासः एकः पक्षः, पञ्चदशदिवसात्मकः कालः, येषां तान् तथोक्तान्, सीतायाः जानक्याः, सीतया वा स्वहस्तेन निजपाणिना, उपहृता उपायनीकृता, अग्र्यपूजा श्रेष्ठसत्कारः येभ्यस्तादृशान्, रक्षःकपीन्द्रान् विभीषणादीन् सुकण्ठाङ्गदादींश्च रामः श्रीरामचन्द्रः, विससर्ज प्रेषयामास, स्वस्वस्थानमिति शेषः ।

कोशः—'स्यादानन्दथुरानन्दशर्मशातसुखानि च ।' 'पुंस्यर्धोऽर्धं समेंऽशके' 'हस्तौ च प्राणिनक्षत्रे' 'परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्योयमग्रियम् ।' 'पूजानमस्यापचितिः सपर्यार्चार्हणा समाः ।' 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ।' 'कपिप्लवङ्गप्लवगाः' इत्यमराः ।

भावार्थः—श्रीरामचन्द्रः तपस्विषु अभिनन्दनार्थमागतेषु परावृत्तेषु सत्सु आनन्देन येषां पञ्चदशदिनानि अज्ञातान्येव व्यतीतानि, ( एतावतां दिनानां व्य-

त्ययः आनन्दातिशयात् नैव ज्ञातः कपिराक्षसैः ) सीतया च वात्सल्यातिरेकात् निजकरेण येभ्य उत्कृष्टोपायनानि दत्त्वा सत्कारः कृतः, तादृशान् विभीषणादि-राक्षसान् सुग्रीवाङ्गदादीन् कपिवरांश्च स्वस्वस्थानाय प्रेषयामास । ते तु अयोध्या-यामेव इतोऽपि स्थातुमिच्छुका आसन् । श्रीरामनगर्यामयोध्यायां तेषां श्रीराम-सान्निध्यात् महान् आनन्द आसीत्, परं श्रीरामेणैव लङ्काकिष्किन्धयोः क्षेमाय ते तत्र सोद्बोधं प्रेषिता इत्यर्थः ।

हिन्दी—अभिनन्दनार्थ आये हुए तपस्वियों के अपने-अपने स्थान लौट जाने पर श्रीरामचन्द्रजी ने उन राक्षसों और कपिवरों को विदा किया जिन्हें अयोध्यामें आधा महीना बीत जाने का पता ही नहीं रहा और सीताजी ने निज हाथ से जिनका उत्तम सत्कार किया था ॥ १९ ॥

तच्चात्मचिन्तासुलभं विमानं हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥

सञ्जीविनी—तदिति । तच्चात्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारे रावणस्य जीवितेन सह हृतं दिवः पुष्पं पुष्पवदाभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुबेरस्योद्वहनायान्वमंस्तानुज्ञातवान् । मन्यतेर्लुङ् । भूयोग्रहणेन पूर्वमप्येतत्कौवेरमेवेति सूच्यते ।

अन्वयः—तच्च आत्मचिन्तासुलभं सुरारेः जीवितेन सह हृतं दिवः पुष्पं पुष्पकं विमानं भूयः कैलासनाथस्य उद्वहनाय अन्वमंस्त । ( इदं कर्तृ० ) कर्म-वाच्येऽपि 'रामेण' इत्यध्याहृत्य योजनीयम् । तत्र 'विमानं' प्रथमान्तं सविशेषणम् ।

चन्द्रिका—तच्चेति तत्पदं प्रसिद्धपरामर्शकम्, आत्मनः स्वस्य चिन्तयैव स्मरणमात्रेणैव सुलभं सुप्रापम्, सुरारेः दशमुखस्य, जीवितेन प्राणैः, असुभिः, सह साकं हृतं स्वायत्तीकृतम्, समानीतम्, दिवः स्वर्गलोकस्य, पुष्पं कुसुमवद् अलंकार-भूतम्, पुष्पकं विमानं पुष्पकाख्यं व्योमयानम्, भूयः पुनः, कैलासनाथस्य यक्ष-राजः कुबेरस्य, उद्वहनाय नयनार्थम्, अन्वमंस्त अनुमोदितवान् । 'इतः परं पूर्ववत् कुबेरस्य वाहनं भव' इति पुष्पकविमानं कुबेरपार्श्वे प्रेषयामासेत्यर्थः ।

समासः—चिन्तया सुलभं चिन्तासुलभम्, आत्मने चिन्तासुलभम् ( च० तत्पु० ) आत्मचिन्तासुलभम्, तत् । सुराणामरिः सुरारिः, तस्य सुरारेः । कैलासस्य नाथः कैलासनाथः, कैलासनाथस्य उद्वहनं कैलासनाथोद्वहनम्, तस्मै कैलासनाथोद्वहनाय ।

कोशः—'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।' 'स्याच्चिन्ता स्मृतिराध्यानम्' 'व्योमयानं विमानोऽस्त्री' 'कैलासः स्थानमलका' 'स्त्रियः सुमनसः पुष्पं' 'द्योदिवौ द्वे स्त्रियाम्' इत्यमरः ।

भावार्थः—श्रीरामचन्द्रः स्वस्मरणमात्रेण प्राप्तुं शक्यं रावणस्य प्राणैः सह यदाहृतं गगनस्य पुष्पवदलङ्कारभूतं तत् पुष्पकविमानं पुनरपि कुबेरस्य यानं भवितुं तदन्तिकं प्रेषयामासेति भावः। पुनरित्यनेन पूर्वमपि तस्यैवेदमासीत्, भ्राता रावणस्तस्मादाच्छिद्य गृहीतवानासीत्।

हिन्दी—स्मरण मात्र से उपस्थित होने वाले, रावण के प्राणों के साथ छीने गये, एवं आकाश में फूल के समान अलंकार भूत उस पुष्पक विमान को भी श्रीरामचन्द्रजी ने पुनः कुबेर के वाहनरूप में उनके यहाँ रहने की अनुमति दी ॥ २० ॥

पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः।
धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ २१ ॥

सञ्जीविनी—पितुरिति। राम एवं पितुर्नियोगाच्छासनाद्वनवासं निस्तीर्यानन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन्। धर्मार्थकामेषु यथा तथैवावरजेष्वनुजेषु समां वृत्तिं प्रपेदे. अवैषम्येन व्यवहृतवानित्यर्थः।

अन्वयः—रामः पितुः नियोगात् एवं वनवासं निस्तीर्य प्रतिपन्नराज्यः 'सन्' धर्मार्थकामेषु यथा तथैव अवरजेषु समां वृत्तिं प्रपेदे।

वाच्य०—रामेण पितुर्नियोगादेवं वनवासं निस्तीर्य प्राप्तराज्येन 'सता' धर्मार्थकामेषु यथा तथैवावरजेषु समावृत्तिः प्रपेदे ( कर्मवा० )।

चन्द्रिका—रामः पितुः तातस्य दशरथस्य, नियोगात् निदेशात्, एवम् अनया रीत्या, वनवासं चतुर्दशवत्सरपर्यन्तमरण्यावस्थानम्, निस्तीर्य अतीत्य, समाप्य. प्रतिपन्नराज्यः गृहीतराज्यः, सन् भवन्, धर्मार्थकामेषु पुरुषार्थत्रये, त्रिवर्गे, 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः, यथा येन प्रकारेण ( समव्यवहारं ), तथैव तेनैव प्रकारेण, अवरजेषु अनुजेषु त्रिषु लक्ष्मणभरतशत्रुघ्नेषु, समाम् एकरूपाम्, वृत्तिं व्यवहारम्, प्रपेदे स्वीचकार। उपमालंकारः-'उपमा यत्र सादृश्यं लक्ष्मीरुल्लसति द्वयोः।' इति तल्लक्षणम्। पुरुषार्थत्रय-भ्रातृत्रयस्य चोपमानोपमेयभावः। समव्यवहारः, सादृश्यम्। यथाशब्द उपमावाचकः।

समासाः-वने वासः (स. तत्पु.) वनवासः, तम्। राज्ञः कर्म भावो वा राज्यम्, प्रतिपन्नं राज्यं येन सः प्रतिपन्नराज्यः (बहु०), धर्मश्च अर्थश्च कामश्च (द्वन्द्व०) धार्मार्थकामाः, तेषु धर्मार्थकामेषु। अवरं जाताः अवरजाः, तेषु अवरजेषु।

कोशः—'तातस्तु जनकः पिता' 'वत्ता यथा तथेवैवं साम्ये' 'समस्तुल्यः सदृक्षः सदृशः सदृक्।' 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।' इत्यमराः।

भावार्थः—एवं पूर्वोक्तक्रमेण श्रीरामचन्द्रः पितुरादेशं पालयन् वनवासं समापूर्य अयोध्यायां लब्धराज्यः यथा त्रीन् धर्मार्थकामान् पुरुषार्थान् ,साम्येन सेवितवान् तथैव त्रीनपि भ्रातृन् समानरूपेण वीक्षते स्मेति भावः।

हिन्दी--श्रीरामचन्द्र ने पिता की आज्ञा से इस प्रकार (पीछे वर्णितक्रम से) वनवास पूरा कर, राज्य स्वीकार करते हुए जैसे धर्म, अर्थ और काम को समान रूप में सेवित किया, वैसे ही भाइयों के साथ भी समान रूप से वर्ताव किया ॥ २१ ॥

सर्वासु मातृष्वपि वत्सलत्वात्स निर्विशेषप्रतिपत्तिरासीत् ।
षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२ ॥

सञ्जीविनी—सर्वास्विति । स रामो वत्सलत्वात्स्निग्धत्वात्, न तु लोकप्रतीत्यर्थम् । 'स्निग्धस्तु वत्सलः' इत्यमरः । सर्वासु मातृष्वपि निर्विशेषप्रतिपत्तिस्तुल्यसत्कार आसीत् । कथमिव चमूनां नेता षण्मुखः षड्भिराननैरापीताः पयोधराः स्तना यासां तासु कृत्तिकास्विव ।

अन्वयः—सः वत्सलत्वात् सर्वासु मातृषु अपि चमूनां नेता षडाननापीतपयोधरासु कृत्तिकासु इव निर्विशेषप्रतिपत्तिः आसीत् ।

वाच्य०—तेन वत्सलत्वात् सर्वासु मातृष्वपि चमूनां नेत्रा षडाननापीतपयोधरासु कृत्तिकास्विव निर्विशेषप्रतिपत्तिना अभावि ( भाववा० ) ।

चन्द्रिका—सः श्रीरामः, वत्सलत्वात् प्रकृत्या स्नेहवत्त्वात्, सर्वासु तिसृष्वपि मातृषु जननीषु कौसल्या-कैकेयी-सुमित्रासु, चमूनां सेनानाम्, नेता नायकः, सेनानीः, षडाननापीताः षड्भिः वदनैः आसमन्तात् चूषिताः, पयोधराः स्तनाः, यासां तासु इव यथा निर्विशेषा समाना, विशेषरहिता, प्रतिपत्तिः बुद्धिः यस्यैवम्भूतः, आसीत् अभूत् । षडाननरामचन्द्रयोरुपमानोपमेयभावः । अनेकमातृषु समत्वबुद्धिरुभयोः साधर्म्यम्, उपमावाचक इवशब्द इति पूर्णोपमालंकारः ।

समासः—वत्सलस्य भावः वत्सलत्वम्, तस्मात् वत्सलत्वात् । निर्गतः विशेषः यस्याः सा निर्विशेषा ( बहु० ) निर्विशेषा प्रतिपत्तिः यस्य सः ( बहुव्रीहिगर्भबहुव्रीहिः ) निर्विशेषप्रतिपत्तिः । षट् च तानि आननानि च षडाननानि, षडाननैः आपीताः पयोधराः यासां ताः ( बहु० ), षडाननापीतपयोधराः, तासु षडाननापीतपयोधरासु ।

कोशः—'लक्ष्मीवांल्लक्ष्मणः श्रीलः श्रीमान् स्निग्धस्तु वत्सलः ।' 'जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।' 'सर्वमशेषं कृत्स्नम्' 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ।' 'आननं लपनं मुखम् ।' 'स्त्रीस्तनाब्दौ पयोधरौ' 'अधिभूर्नायको नेता' 'सेना पृतनाऽनीकिनी चमूः' इत्यमरः ।

भावार्थः—श्रीरामचन्द्रः प्रकृत्या स्नेहशक्तित्वात् तिसृष्वपि मातृषु यथा षण्मुखः स्वमातृषु कृत्तिकाख्यासु समानस्नेह आसीत् तथैव समस्नेहेन व्यवहरन् अवर्तत । अत्रेयं महाभारतीया शल्यपर्वगता कथाऽनुसन्धेया । तारकाख्योऽसुरो

महाप्रतापी तपस्तप्त्वा 'शिववीर्योत्पन्न एव मां हन्तु' इति वरं लेभे। ब्रह्मचारी शिवः कथमपि पार्वतीं परिणीय तया सह मैथुनाय यदा प्रवृत्तः तदैव कपोतपोत-रूपेण पावकं विलोक्य लज्जिता पार्वती ततोऽपससार। तदा शिववीर्यं स्खलितं सत् अग्निमुखे न्यपतत्। सोऽपि तदसहमानो गङ्गायां पातयामास। गङ्गा स्वतर-ङ्गैस्तत् तीरे वृक्षगुल्मे प्राक्षिपत्। तत्र बालकः समुत्पन्नो रोदितुमारेभे। तदा स्नानार्थं समागताः कृत्तिकाः, याः षट्संख्यया सन्ति, तमर्भकमादाय पुत्रवात्सल्यं प्रादर्शयन्। तासां कामनां विज्ञाय शिशुः षडाननो भूत्वा तासां स्तनान् पृथक् पृथगपिबत्। तास्तमपालयन्। अनन्तरं महेश्वराय समर्पयन्। स कुमारः प्रौढो भूत्वा देवताभिः प्रार्थितः सेनापतित्वं स्वीकृत्य तारकासुरेण युद्धं कृत्वा तं जघानेति।

हिन्दी—वह श्रीरामचन्द्र स्वभावतः स्नेही होने के कारण सभी (तीन) माताओं में वैसे ही समान बुद्धि प्रीति (व्यवहार) रखते थे जैसे देवसेनापति कार्तिकेय अपने छह मुखों से छह माता कृतिकाओं का स्तन पीकर उन माताओं में समान प्रीति रखते थे॥ २२॥

तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्।
तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री॥ २३॥

सञ्जीविनी—तेनेति। लोको लोभपराङ्मुखेन वदान्येन तेन रामेणार्थवान् धनिक आस बभूव। तिङन्तप्रतिरूपकमव्ययमेतत्। विघ्नेभ्यो भयं घ्नता नुदता तेन क्रियावाननुष्ठानवानास। विनेत्रा नियामकेन तेन पितृमानास, पितृवन्नियच्छतीत्यर्थः। शोकमपनुदतीति शोकापनुदो दुःखस्य हर्ता तेन। "तुन्दशोकयोः परि-मृजापनुदोः" इति कप्रत्ययः। तेन पुत्री पुत्रवानास, पुत्रवदानन्दयतीत्यर्थः।

अन्वयः—लोकः लोभपराङ्मुखेन तेन अर्थवान् आस, विघ्नभयं घ्नता तेन क्रियावान् आस, विनेत्रा तेन पितृमान् आस, शोकापनुदेन तेन पुत्री आस।

वाच्य०—लोकेन लोभपराङ्मुखेन तेन अर्थवता विघ्नभयं घ्नता तेन क्रियावता विनेत्रा तेन पितृमता शोकापनुदेन तेन पुत्रिणा च बभूवे (भाववा०)।

चन्द्रिका—लोकः प्रजा-जनः, लोभात् परधनसंग्रहेच्छायाः यद्वा कृपणतायाः पराङ्मुखेन विमुखेन, उदारेण तेन श्रीरामचन्द्रेण अर्थवान् धनयुक्तः आस आसीत्। विघ्नेभ्यः अन्तरायेभ्यः कार्यप्रतिबन्धकेभ्यः भयं भीतिम्, घ्नता नाशयता, तेन श्रीरामेण, क्रियावान् कर्माचरणवान् आसेति प्रतिसन्धातव्यम् अग्रेऽपि। विनेत्रा शिक्षाप्रदात्रा, तेन श्रीरामेण, पितृमान् जनकयुक्तः, आस। शोकापनुदेन कष्ट-निवारयित्रा, व्यथापहर्त्रा, तेन श्रीरामेण, पुत्री पुत्रवान् आस।

समासः—लोभात् पराङ्मुखः (पराक् मुखं यस्य सः, बहु०) लोभपराङ्-मुखः, तेन लोभपराङ्मुखेन। अर्थः अस्यास्तीति (मत्वर्थीय०) अर्थवान्।

विघ्नेभ्यः भयं ( पं० तत्पु० ) विघ्नभयं, तत् । क्रिया अस्यास्तीति क्रियावान् । विनयतीति विनेता, तेन विनेत्रा । पिता अस्यास्तीति पितृमान् । शोकम् अपनुदतीति शोकापनुदः, तेन शोकापनुदेन । पुत्रः अस्यास्तीति पुत्री ।

कोशः—'लोकस्तु भुवने जने' 'पराङ्मुखः पराचीनः' 'विघ्नोऽन्तरायः प्रत्यूहः' 'भीतिर्भीः साध्वसं भयम्' 'उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ।' 'तातस्तु जनकः पिता' 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः ।

भावार्थः—यथाकथमपि करादिना अर्थसंग्रहेच्छाशून्येन राज्ञा रामेण प्रजाजनो ( विपुलदानशीलेन वा रामेण ) धनवान् अभूत्, विघ्नापहारकस्य रामस्यानुग्रहेण निर्विघ्नकर्मानुष्ठवानासीत्, पितृवत् मन्यते स्म । श्रीरामः कृत्यं प्रवर्तयन् अकृत्यान्निवर्तयंश्च आसीत्, अतो लोकस्तं पितरं सर्वविधं प्रजादुःखं दूरयन् श्रीरामः लोकस्य पुत्रवदानन्दकरोऽप्यासीत् । एवं तस्य प्रजावात्सल्यमासीदिति भावः ।

हिन्दी—लोभी ( परधनेच्छु ) न होने के कारण अथवा उदार ( बहुत देनेवाला ) होने से प्रजा धनसम्पन्न रहती थी । श्रीराम विघ्नों को दूर करते थे, अतः लोग निर्विघ्न होकर कार्य करते थे । श्रीराम प्रजा को अपने नियन्त्रण (अच्छे कार्य में लगाना और अकार्य से हटाना) में रखते थे, अतः प्रजा जन उन्हें पिता मानते थे । सभी प्रकार के कष्टों को दूर करने के कारण श्रीराम उनके पुत्र तुल्य भी थे ॥ २३ ॥

स पौरकार्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितश्चारु वपुस्तदीयं कृत्वोपभागोत्सुकयेव लक्ष्म्या ॥ २४ ॥

सञ्जीविनी—स इति । स रामः कालेऽवसरे पौराणां कार्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेर्दुहित्रा सीतया उपभोगोत्सुकयाऽत एव तदीयं सीतासम्बन्धि चारु वपुः कृत्वा स्थितया लक्ष्म्येव । उपस्थितः सङ्गतः सन् रेमे । 'उपस्थानं तु सङ्गतिः' इति यादवः ।

अन्वयः—सः काले पौरकार्याणि समीक्ष्य विदेहाधिपतेः दुहित्रा तदीयं चारु वपुः कृत्वा उपभोगोत्सुकया लक्ष्म्या इव उपस्थितः 'सन्' रेमे ।

वाच्य०—तेन काले पौरकार्याणि समीक्ष्य विदेहाधिपतेर्दुहित्रा तदीयं चारु वपुः कृत्वा उपभोगोत्सुकया लक्ष्म्येव उपस्थितेन रेमे ( भाववा० ) ।

चन्द्रिका—सः श्रीरामः, पौरकार्याणि पुरवासिनां कृत्यानि, समीक्ष्य सम्यग् विचार्य, विदेहाधिपतेः जनकमहाराजस्य दुहित्रा सुतया, जानक्या तदीयं जानकी सम्बन्धि, चारु सुन्दरं वपुः शरीरं, कृत्वा आदाय, उपभोगोत्सुकया रन्तुमुद्युक्तया 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । लक्ष्म्येव रमयेव उपस्थितः सन्निहितः, सम्मिलितः सन्, रेमे चिक्रीड 'रमु क्रीडायाम्' । तां बुभुजे इत्यर्थः । उत्प्रेक्षालंकारः ।

समासः—पुरे भवाः पौराः, पौराणां कार्याणि ( ष० तत्पु० ) पौरकार्याणि, तानि । विदेहानां अधिपतिः विदेहाधिपतिः, तस्य विदेहाधिपतेः । तस्या इदं तदीयम्, तत् । उपभोगे उत्सुका उपभोगोत्सुका (स० तत्पु०), तया उपभोगोत्सुकया ।

कोशः—'कालो दिष्टोऽप्यनेहाऽपि समयः' 'सुन्दरं रुचिरं चारु' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।' 'इष्टार्थोद्युक्त उत्सुकः' 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ।' इत्यमरः ।

भावार्थः—श्रीरामः यथासमयं प्रजाकार्याणि सम्यग् विधाय, रामोपभोगार्थं सीतादेहमादाय सन्निहितया ( स्वशरीरस्य तावत्सौन्दर्याभावात् ) लक्ष्म्या इव स्थितया जानक्या सह रमते स्मेति भावः ।

हिन्दी—श्रीराम यथासमय प्रजाओं के कार्यों को अच्छी तरह देख कर, श्रीराम के साथ संभोग की इच्छा से सीता का रूप लेकर आयी हुई लक्ष्मी-सी रहने वाली जानकीजी से रमण करते थे । ( लक्ष्मी भी सीता का रूप अपने रूप से अधिक सुन्दर समझती थी । यों, तो श्रीराम भगवान् विष्णु ही थे और श्रीसीताजी लक्ष्मी ही थीं । ) ॥ २४ ॥

तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन् ॥ २५ ॥

सञ्जीविनी—तयोरिति । चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु यथाप्रार्थितं यथेष्टमिन्द्रियार्थानिन्द्रियविषयाञ्शब्दादीनासेदुषोः प्राप्तवतोस्तयोः सीतारामयोर्दण्डकेषु दण्डकारण्येषु प्राप्तानि दुःखान्यपि विरहविलापान्वेषणादीनि सञ्चिन्त्यमानानि स्मर्यमाणानि सुखान्यभूवन् । स्मारकं तु चित्रदर्शनमिति द्रष्टव्यम् ।

अन्वयः—चित्रवत्सु सद्मसु यथाप्रार्थितम् इन्द्रियार्थान् आसेदुषोः तयोः दण्डकेषु प्राप्तानि दुःखान्यपि सञ्चिन्त्यमानानि सुखानि अभूवन् ।

वाच्य०—''''दण्डकेषु प्राप्तैः दुःखैरपि सञ्चिन्त्यमानैः सुखैरभूयत (भाववा०)।

चन्द्रिका—चित्रवत्सु स्वदण्डकारण्यवासादिच्छायाचित्रयुक्तेषु, सद्मसु भवनेषु, बहुवचनमनेकगृहविहारं द्योतयति । यथाप्रार्थितम् इष्टानुरूपम्, इन्द्रियार्थान् भोग्यपदार्थान् रूपरसादीन्, आसेदुषोः लब्धवतोः, तयोः श्रीजानकीरामयोः, दण्डकेषु दण्डकारण्येषु क्वस्वन्तोऽयम् । प्राप्तानि अनुभूतानि, दुःखान्यपि परस्परवियोगपीडा अपि, सञ्चिन्त्यमानानि ध्यानविषयीक्रियमाणानि, ध्यायमानानि, एवमेव सुखभोगमध्ये विचार्यमाणानि, यद्वा तत्तच्छायाचित्रदर्शनेन सपर्यमाणानि, सुखानि आनन्दप्रदानि, अभूवन् जातानि । अनुभूतक्लेशानां सुखपरिणामित्वात् इत्यर्थः ।

समासः—चित्राणि सन्ति एष्विति ( मत्व० ) चित्रवन्ति, तेषु चित्रवत्सु । प्रार्थितमनतिक्रम्य यथाप्रार्थितं ( अव्ययी० ) । इन्द्रियाणाम् अर्थाः इन्द्रियार्थाः, तान् इन्द्रियार्थान् ।

कोश:—'आलेख्याश्चर्ययोश्चित्रम्' 'वेश्मसद्मनिकेतनम्' 'शान्ते शमितः प्राथितेऽर्दितः' 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' 'गोचरा इन्द्रियार्थाश्च' 'पीडा बाधा व्यथा दुःखम्' 'स्यादानन्दथुरानन्दशर्मशातसुखानि च।' इत्यमराः।

भावार्थः—दण्डकारण्यवास-परस्परविरह-क्लेशादिच्छयाचित्राणि वासभवन-गतानि साम्प्रतिकसुखभोगावसरे पश्यन्ती श्रीसीताराम अनुभूतानि तानि दुःख-दिनानि स्मरन्तौ च सुखान्येव अनुभूतवन्तौ। अनुभूतानां दुःखानां साम्प्रतमनुभूय-मानसुखपरिणामित्वात् दुःखेष्वपि सुखानुभवः।

हिन्दी—वनवासादि चित्रों से युक्त भवनों में इच्छानुसार इन्द्रियार्थों (शब्द रूप स्पर्श रस गन्ध ये पाँच कान, आँख, त्वचा-जीभ, नाक इन ज्ञानेन्द्रियों के विषय भोगपदार्थ हैं) को पाये हुए उन दोनों (सीता-रामों) के लिए दण्ड-कारण्य में भोगे गये विरहादि दुःख सुखपरिणामी होने से सुख ही मालूम पड़ते थे। चित्र में देखकर मनोरंजन के साथ विरहादि में परस्पर का दुःख-विलापादि अन्योन्य गाढानुराग का परिचायक होने से हृदय आनन्द से भर जाता था ॥२५॥

अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डुरेण।
आनन्दयित्री परिणेतुरासीदनक्षरव्यञ्जितदोहदेन ॥ २६ ॥

सञ्जीविनी—अथेति। अथ सीताऽधिकस्निग्धविलोचनेनात्यन्तमसृणलोचनेन शरवत्तृणविशेषवत्पाण्डुरेणात एवानक्षरमवाग्व्यापारं यथा भवति तथा व्यञ्जितं प्रकटितं दोहदं गर्भो येन तेन मुखेन परिणेतुः पत्युः। कर्मणि षष्ठी। आनन्दयि-त्र्यासीत्।

अन्वयः—अथ सीता अधिकस्निग्धविलोचनेन शरपाण्डुरेण अनक्षरव्यञ्जित-दोहदेन मुखेन परिणेतुः आनन्दयित्री आसीत्।

वाच्य०—अथ सीतया अधिकस्निग्धविलोचनेन शरपाण्डुरेण अनक्षरव्यञ्जि-तदोहदेन मुखेन परिणेतुः आनन्दयित्र्या अभूयत (भाववा०)।

चन्द्रिका—अथ पश्चात्, सीता वैदेही, अधिकं सातिशयं यथातथा स्निग्धे सान्द्रे चिक्कणे विलोचने नयने यस्मिन् तत् तथोक्तं तेन शरवत् गुन्द्रपुष्पवत् पीतवर्णः कश्चित् तृणविशेषः। पाण्डुरेण पाण्डुवर्णेन पीताभेन, अनक्षरं वाक्-प्रयोगं विनैव, मूकतयैव, व्यञ्जितं प्रकाशितं दोहदं गर्भो येन तादृशेन, उक्तविशे-षणविशिष्टेन मुखेनान्तस्थगर्भो व्यज्यते इत्यर्थः। मुखेन आननेन परिणेतुः प्रियस्य, आनन्दयित्री हर्षप्रदायिनी, आसीत् बभूव।

समासः—अधिकं यथा तथा स्निग्धे विलोचने यस्मिन् तत् (बहु०) अधिक-स्निग्धविलोचनम्, तेन अधिकस्निग्धविलोचनेन। शरवत् पाण्डुरं शरपाण्डुरं (उपमानपूर्वकर्म०), तेन शरपाण्डुरेण। न विद्यन्ते अक्षराणि यस्मिन् कर्मणि तद्

यथा भवति तथा ( बहु० ) अनक्षरम्, अनक्षरं व्यञ्जितं दोहदं येन तत् अनक्षरव्यञ्जितदोहदम्, तेन अनक्षरव्यञ्जितदोहदेन । आनन्दयतीति आनन्दयित्री ।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।' 'चिक्कणं मसृणं स्निग्धम्' 'लोचनं चक्षुरक्षिणी' 'गुन्द्रस्तेजनकः शरः' 'हरिणः पाण्डुरः पाण्डुः' 'आननं लपनं मुखम् ।' इत्यमराः । 'दोहदं गर्भिणीकामगर्भयोः पुन्नपुंसकम् ।' इति हलायुधः ।

भावार्थः—अनन्तरम् अतिस्निग्धनयनान्वितं पाण्डुरम् अशब्देनैव प्रकाशितगर्भचिह्नं सीतायाः मुखं विलोक्य श्रीरामः परमं प्रमोदमवाप । श्रीजानकी अन्तर्वत्नी बभूवेति भावः ।

हिन्दी—अत्यन्त चिकनी आँखों से युक्त शरपुष्पवत् पीताभ एवं बिना शब्दों से ही गर्भचिन्हों को प्रकटित करनेवाले जानकीजी के मुख को देखकर श्रीरामचन्द्र आनन्दित हो रहे थे ॥ २६ ॥

तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम् ।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥

सञ्जीविनी—तामिति । प्रतीतो गर्भज्ञानवान् । रमयतीति रमणः प्रियां कृशाङ्गयष्टिं वर्णान्तरेण नीलिम्नाऽऽक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहस्यङ्कमारोप्याभिलाषं मनोरथं पप्रच्छ । एतच्च—"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति शास्त्रात्, न तु लौल्यादित्यनुसन्धेयम् ।

अन्वयः—प्रतीतः रमणः कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहसि अङ्कम् आरोप्य अभिलाषं पप्रच्छ ।

वाच्य०—प्रतीतेन रमणेन कृशाङ्गयष्टिः वर्णान्तराक्रान्तपयोधराग्रा विलज्जमाना सा रामा रहसि अङ्कम् आरोप्य अभिलाषं पपृच्छे ।

चन्द्रिका—प्रतीतः हृष्टः, 'ख्याते हृष्टे प्रतीतः' इत्यमरः, रमणः वल्लभः श्रीरामः कृशाङ्गयष्टिं तनुगात्रलताम्, वर्णान्तरेण श्यामलवर्णेन आक्रान्तम् अभिव्याप्तं पयोधराग्रं स्तनाग्रभागः चूचुकः यस्यास्ताम् । विलज्जमानां विशेषेण व्रीडावतीम्, तां पूर्वोक्तगर्भलक्षणा रामां प्रियां सीतां रहसि एकान्ते, अङ्कं निजोत्सङ्गम्, आरोप्य आरोह्य उपवेश्यति यावत्, अभिलाषं दोहदं कामम्, 'खादितुं द्रष्टुं पातुं दातुं वा तव का इच्छा' इति पप्रच्छ पृष्टवान्, अनुयुयोज । दुह्यादित्वेन पृच्छतेर्द्विकर्मकत्वम् । रामाभिलाषौ द्वावपि कर्मभूता ।

समासः—अङ्गं यष्टिरिव ( उपमानोत्तरकर्म० ) अङ्गयष्टिः, कृशा अङ्गयष्टिः यस्याः सा (बहु०) तां कृशाङ्गयष्टिम् । पयोधरयोः अग्रे पयोधराग्रे (प० तत्पु०), अन्यो वर्णो वर्णान्तरं ( पृषोदरादि० ) वर्णान्तरेण आक्रान्ते पयोधराग्रे यस्याः सा, तां वर्णान्तराक्रान्तपयोधराग्राम् । विलज्जते इति विलज्जमाना ताम् ।

कोशः—'ख्याते हृष्टे प्रतीतः' 'श्लक्ष्णं दभ्रं कृशं तनु' 'अङ्कं प्रतीकोऽवयवो' 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाऽक्षरे।' 'पुरोऽधिकमुपर्यग्राणि' 'रहश्चोपांशु चालिङ्गे' 'सुन्दरी रमणी रामा' 'वाञ्छा लिप्सा मनोरथः। कामोऽभिलाषस्तर्षश्च' 'उत्सङ्गचिह्नयोरङ्कः' इत्यमराः।

भावार्थः—प्रसन्नः श्रीरामचन्द्रः तन्वङ्गीं नीलचूचुकां व्रीडयाधोमुखीं तां प्रियां सीतां रहसि निजोत्सङ्गे समुपवेश्य 'केभ्यो वस्तुभ्यः स्पृहयसि' इति तामपृच्छत्।

हिन्दी—गर्भधारण से आनन्दित श्रीरामचन्द्र ने कृश ( दुबली ) शरीरवाली जिनके स्तनाग्रभाग नीले रंग में व्याप्त हो गया है, ऐसी लजाती हुई प्रिया सीता को एकान्त में गोद में बैठा कर 'क्या चाहती हो' इस प्रकार उसकी अभिलाषा को पूछा॥ २७॥

सा दष्टनीवारबलीनि हिंस्रैः सम्बद्धवैखानसकन्यकानि।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि॥ २८॥

सञ्जीविनी—सेति। सा सीता हिंस्रैर्दष्टा नीवारा एव बलयो येषु तानि। तिर्यग्भिक्षुकादिदानं बलिः। सम्बद्धाः कृतसम्बन्धाः कृतसख्या वैखानसानां कन्यका येषु तानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुमियेषाभिललाष।

अन्वयः—सा हिंस्रैः दष्टनीवारबलीनि सम्बद्धवैखानसकन्यकानि कुशवन्ति भागीरथीतपोवनानि भूयः गन्तुम् इयेष।

वाच्य०—तया दष्टनीवारबलीनि सम्बद्धवैखानसकन्यकानि कुशवन्ति भागीरथीतपोवनानि भूयो गन्तुमियेषे ( भाववा० )

चन्द्रिका—सा जानकी, हिंस्रैः घातुकप्राणिभिः, दष्टाः खादिताः, नीवाराः मुनिधान्यानि, बलयश्च प्राणिभ्यो विसृष्टा उपहाराश्च यत्र तादृशानि तथा सम्बद्धाः स्नेहसंगताः वैखानसानां मुनीनां कन्यकाः कुमारिकाः दुहितरः येषु तथोक्तानि, कुशवन्ति रूढदर्भाणि, कुशयुक्तानि भागीरथ्याः गङ्गाया तीरतपोवनानि तटस्थान् आश्रमान्, भूयः द्वितीयवारमपि, गन्तुं यातुम्, इयेष आचकाङ्क्ष, अभिलषितवती।

समासः—नीवाराश्च बलयश्च ( द्वन्द्व० ), नीवाराणां वा बलयः नीवारबलयः, दष्टाः नीवारबलयः येषु तानि ( बहु० ) सन्दष्टनीवारबलीनि, तानि वैखानसानां कन्यकाः वैखानसकन्यकाः सम्बद्धाः वैखानसकन्यकाः येषु तानि सम्बद्धवैखानसकन्यकानि ( बहु० ), तानि। कुशाः सन्ति एषु इति कुशवन्ति ( मत्वर्थीय० ) तानि। भागीरथ्यातीरं भागीरथीतीरं, भागीरथीतीरस्य तपोवनानि भागीरथीतीरतपोवनानि, तानि।

कोशः—'तृणधान्यानि नीवाराः' 'करोपहारयोरस्त्री बलिः प्राण्यङ्गजे स्त्रि-याम् ।' 'शरारुर्घातुको हिंस्रः कन्या कुमारो' 'अस्त्री कुशं कुथो दर्भः' 'भागी-रथी त्रिपथगा त्रिस्रोता भोष्मसूरपि ।' इत्यमरः ।

भावार्थः—सीता रामेण दोहदं पृष्टा सतो पुनरपि तानि गङ्गकूलगतानि तपोवनानि द्रष्टुमिच्छामकरोत् येषु तपोवनेषु भूतेभ्यः (प्राणिभ्यः) विसृष्टं नीवाराख्यधान्यबलि गजादयः प्रबला आगत्य भक्षयन्ति, निजसख्यो मुनि-कुमारिका निवसन्ति तथा आश्रमपरिसरेषु कुशाः जपयज्ञाद्युपयोगिनः प्ररूढा सन्ति ।

हिन्दी—श्रीराम से 'तुम्हें इच्छा किस वस्तु में है' पूछे जाने पर सीताजी ने गङ्गातट में स्थित उन आश्रमों में पुनः जाना चाहा, जहाँ पर नीवारधान्य की बलि को प्रबल जानवर खा जाते हैं, जहाँ की मुनिकुमारिकाओं से सीताजी का पहले वनवास में मित्रता हो गई थी और जहाँ पर कुश उगे थे ॥ २८ ॥

तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥

सञ्जीविनी—तस्या इति । रघुप्रवीरो रामस्तस्यै सीतायै तत्पूर्वोक्तमीप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैस्तत्कालोचितैरनुयातः सन् मुदितां तामयोध्यामालोक-यिष्यन् अभ्रं लेढीत्यभ्रंलिहमभ्रङ्कषं प्रासादमारुरोह । "वहाभ्रे लिहः" इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः ।

अन्वयः—रघुप्रवीरः तस्यै तदीप्सितं प्रतिश्रुत्य पार्श्वचरानुयातः मुदिताम् अयोध्याम् आलोकयिष्यन् अभ्रंलिहं प्रासादम् आरुरोह ।

वाच्य०—रघुप्रवीरेण तस्यै तदीप्सितं प्रतिश्रुत्य पार्श्वचरानुयातेन मुदिताम् अयोध्याम् आलोकयिष्यता अभ्रंलिहः प्रासाद आरुरुहे (कर्मवा०) ।

चन्द्रिका—रघुप्रवीरः रघुश्रेष्ठः श्रीरामः, तस्यै सीतायै, तदीप्सितं तदभीष्टम्, प्रतिश्रुत्य 'एवमस्तु' इति अंगीकृत्य पार्श्वचरेण अनुचरेण, अनुयातः 'अनुगतः सन् भवन्, मुदितां हृष्टाम्, आनन्दिताम्, अयोध्यां साकेतनगरम्, अवलोकयिष्यन् द्रक्ष्यन्, अभ्रंलिहं गगनचुम्बिनम्, प्रासादम् अट्टालिकाम्, सौधाग्रम्, आरुरोह आरूढः ।

समासः—रघूणां प्रवीरः रघुप्रवीरः । पार्श्वे चरतीति पार्श्वचरः, पार्श्व-चरेण अनुयातः पार्श्वचरानुयातः । आलोकयिष्यतीति आलोकयिष्यन् । अभ्रं लेढीति अभ्रंलिहः, तम् अभ्रंलिहम् ।

कोशः—'अङ्गीकाराभ्युपगम-प्रतिश्रवसमाधयः ।' 'हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।' 'हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ।' 'अभ्रं व्योम पुष्करमम्बरम्' इत्यमरः ।

भावार्थः—रघुकुलतिलकः श्रीरामचन्द्रः सीतायै तत्काङ्क्षितं तपोवनगमनम् 'एवं भवतु' इति स्वीकृत्य भृत्येन सह प्रसन्नामयोध्यानगरीं द्रष्टुमिच्छुः गगन-स्पर्शि सौधाग्रमारूढवान् ।

हिन्दी—रघुवीर श्रीरामचन्द्र सीता को उनके मनोरथ को ( 'हाँ ऐसा हो जायेगा' इस प्रकार ) स्वीकार कर भृत्य के साथ गगन छूनेवाले ( ऊँचे ) महल पर आरूढ हुए, जहाँ से आनन्दित अयोध्या को देख सकें ॥ २९ ॥

ऋद्धापणं राजपथं स पश्यन् विगाह्यमानां सरयूं च नौभिः ।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

सञ्जीविनी—ऋद्धेति । स रामः ऋद्धाः समृद्धा आपणाः पण्यभूमयो यस्मिंस्तं राजपथं नौभिः समुद्रवाहिनोभिर्विगाह्यमानां सरयूं च पौरैर्विलासिभिरध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे । विलासिन्यश्च विलासिनश्च विलासिनः । "पुमान् स्त्रिया" इत्येकशेषः ।

अन्वयः—स ऋद्धापणं राजपथं नौभिः विगाह्यमानां सरयूं च पौरैः विलासिभिः अध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे ।

वाच्य०—तेन······पश्यता रेमे ( भाववा० ) ।

चन्द्रिका—सः श्रीरामचन्द्रः, ऋद्धाः समृद्धाः, सम्पन्नाः आपणाः निषद्याः यस्मिन् तथोक्तम्, 'आपणस्तु निषद्यायाम्' इत्यमरः । राजपथं घण्टापथम्, प्रमुखमार्गम्, नौभिः तरणिभिः नौकाभिः विगाह्यमानां तीर्यमाणाम्, सरयूं सरयूनदीम, च अपि पौरैः पुरोत्पन्नैः नागरिकैः, विलासिभिः आनन्दनशीलैः, अध्युषितानि अध्यासितानि, पुरोपकण्ठे, नगरान्तिके, यानि उपवनानि आरामान्, उद्यानानि च पश्यन् विलोकयन्, रेमे मुमुदे ।

समासः—ऋद्धा आपणा यस्मिन् सः ऋद्धापणः, तं ऋद्धापणम् । पथां राजा राजपथः ( राजदन्तादित्वेन 'राज' इत्यस्य पूर्वनिपातः ), तं राजपथम् । विलास एषामस्तीति विलसितुं शीलमेषां ते वा विलासिनः, तैः विलासिभिः । पुरे भवाः पौराः, तैः पौरैः । पुरस्य उपकण्ठः पुरोपकण्ठः, पुरोपकण्ठे उपवनानि ( स० तत्पु० ) पुरोपकण्ठोपवनानि, तानि ।

कोशः—'आपणस्तु निषद्यायाम्' 'स्त्रियां नौस्तरणिस्तरिः' 'उपकण्ठान्तिकाभ्यर्णाः' 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमराः ।

भावार्थः—अट्टालिकायां स्थित्वा श्रीरामचन्द्रो निरीक्षते यत् विपण्यः ( बाजार ) पण्यपदार्थसमृद्धैः आपणैः ( दुकानों से ) पूर्णाः सन्ति । सरयूनद्यां नागरिका नौकाविहारं कुर्वन्ति । राजोद्यानेषु ( पब्लिक गार्डन् ) सुखिनः पौराः चारुवेषधारिणो भूत्वा इतस्ततः उपविष्टाः संल्लपन्ति । एवं समन्तात् सुखपूर्णं वातावरणं विलोकयन् श्रीरामः प्रजावर्गः सुखीति मत्वा प्रमोदमन्वभूदिति भावः ।

हिन्दी—विक्रेय ( बेचने योग्य ) पदार्थों से भरी दुकानों वाले प्रधान मार्ग को ( मेन रोड ) नौकाओं से लोग आर-पार हो रहे हैं ऐसी सरयूनदी को, विविध वेषभूषा से सजे नागरिकों से भरे नगर समीप के बगीचों को देखते हुए श्रीराम आनन्दित हुए ॥ ३० ॥

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजोपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

सञ्जीविनी—स इति । वदतां वाग्मिनां पुरोगः श्रेष्ठो विशुद्धवृत्तः सर्पाधिराजः शेषस्तद्वद्गुरू भुजौ यस्य स विजितारिभद्रो विजितारिश्रेष्ठः स रामः स्ववृत्तमुद्दिश्य भद्रं भद्रनामकमपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ । 'अपसर्पश्चरः स्पर्शः' इति, 'किंवदन्ती जनश्रुतिः' इति चामरः ।

अन्वयः—वदतां पुरोगः विशुद्धवृत्तः सर्पाधिराजोरुभुजः विजितारिभद्रः सः स्ववृत्तम् उद्दिश्य भद्रम् अपसर्पं किंवदन्तीं पप्रच्छ ।

वाच्य०—वदतां पुरोगेण विशुद्धवृत्तेन सर्पाधिराजोरुभुजेन विजितारिभद्रेण तेन स्ववृत्तम् उद्दिश्य भद्रोऽपसर्पः किंवदन्तीं पपृच्छे ( कर्मवा० ) ।

चन्द्रिका—वदतां वक्तॄणाम्, पुरोगः अग्रेसरः श्रेष्ठः, विशुद्धवृत्तः पवित्रचरित्रः सर्पाधिराजवत् शेषनागवत् उरू आयतौ भुजौ बाहू यस्य स तथोक्तः, विजितम् निर्जितं अरिभद्रं रिपुकल्याणं येनासौ तथोक्तः, सः श्रीरामः, स्ववृत्तं निजचरित्रम्, उद्दिश्य अधिकृत्य, भद्रं भद्राख्यम्, अपसर्पं गूढचरम्, किंवदन्तीं लोककथनम् पप्रच्छ अपृच्छत्, पृच्छतेर्दुह्यादित्वेन द्विकर्मकत्वम् । अनुयुयोज ।

समासः—पुरः गच्छतीति पुरोगः । विशुद्धं वृत्तं यस्य सः विशुद्धवृत्तः, अधिको राजा अधिराजः, सर्पाणाम् अधिराजः सर्पाधिराजः, सर्पाधिराजवत् ऊरू भुजौ यस्य सः सर्पाधिराजोरुभुजः । स्वस्य वृत्तं स्ववृत्तं, तत् । अरीणां भद्रम् अरिभद्रम्, विजितम् अरिभद्रं येन ( बहु० ) सः विजितारिभद्रः ।

कोशः—पुरोगाग्रेसरप्रष्ठाग्रतस्सरपुरःसराः ।' 'सर्पः पृदाकुर्भुजगः' 'वड्रोरु-विपुलं' 'भुजबाहू प्रवेष्टो दोः' 'अपसर्पश्चरः स्पशः' 'किंवदन्ती जनश्रुतिः' 'श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ।' इत्यमरः ।

भावार्थः—वाग्मिप्रवरः विमलचरित्रः आजानुदीर्घभुजः जितारिमंगलः श्रीरामः भद्राख्यं गुप्तचरं स्वचरित्रविषये लोकवादं जिज्ञासितवान् । 'प्रजाजनः मच्चरित्रविषये कीदृशं वार्तालापं कुर्वन्ती'ति पृष्टवान्

हिन्दी—बोलनेवालों में चतुर पवित्राचरणवाले, नागराज जैसी लम्बी भुजाओं से युक्त शत्रुओं के मंगल को जीतनेवाले ( अथवा शत्रुश्रेष्ठ रावण को जीतने वाले श्रीराम ने, 'अपने चरित्र के बारे में लोग क्या कहते हैं' ऐसा भद्र-नामक गुप्तचर से पूछा ॥ ३१ ॥

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोपितायाः परिग्रहान्मानवदेव देव्याः ॥ ३२ ॥

सञ्जीविनी—निर्बन्धेति । निर्बन्धेनाग्रहेण पृष्टः सोऽपसर्पो जगाद । किमिति । हे मानवदेव ! रक्षोभवन उषिताया देव्याः सीतायाः परिग्रहात्स्वीकारादन्यत्रेतरांशे, तं वर्जयित्वेत्यर्थः । त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ।

अन्वयः—निर्बन्धपृष्टः सः जगाद हे मानवदेव ! रक्षोभवनोषितायाः देव्याः परिग्रहात् अन्यत्र त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ।

वाच्य०—निर्बन्धपृष्टेन तेन जगदे—'हे मानवदेव ! रक्षोभवनोषितायाः देव्याः परिग्रहात् अन्यत्र त्वदीयं सर्वं चरितं पौरैः स्तूयते ( कर्मवा० ) ।

चन्द्रिका—निर्बन्धेन आग्रहेण, पृष्टः अनुयुक्तः सः अपसर्पः भद्रः, जगाद कथयामास-हे मानवदेव हे मनुष्येश्वर ! रक्षोभवने लङ्कायां राक्षसगृहे, उषितायाः कृतनिवासायाः, अवस्थितायाः, देव्याः जानक्याः, परिग्रहात् अङ्गीकारात्, अन्यत्र परत्र, अन्यांशे त्वदीयं भवत्सम्बन्धि, सर्वं निखिलं, चरितं वृत्तम्, पौराः नगरवासिनः, स्तुवन्ति प्रशंसन्ति, श्लाघन्ते ।

समासः—निर्बन्धेन पृष्टः निर्बन्धपृष्टः ( तृ० त० ) । मानवेषु देवः मानवदेवः, तत्संबुद्धौ मानवदेव !, रक्षसः भवनं ( ष० त० ) रक्षोभवनम्, रक्षोभवे उषिता रक्षोभवनोषिता, तस्याः रक्षोभवनोषितायाः । पुरे भवाः पौराः । तव इदं त्वदीयम्, तत् त्वदीयम् ।

कोशः—'मानवा नराः' 'नैऋर्तो यातुरक्षसी' 'भवनागारमन्दिरम्' 'पत्नी परिजनादानमूलशापाः परिग्रहाः ।' 'देवी कृताभिषेकायाम्' इत्यमरः ।

भावार्थः—यदा रामः आग्रहपूर्वकम् अपृच्छत् तदा स चरः "पौराः सर्वं भवच्चरितं अयोध्यानगरनिवासिनः सम्यक् श्लाघन्ते केवलं रावणगृहे कृतनिवासायाः सीतायाः स्वीकारं समालोचयन्ति । अन्यत् सर्वं स्तुवन्ति ।" इत्युवाच ।

हिन्दी—श्रीराम से आग्रह पूर्वक पूछे जाने पर वह गुप्तचर बोला—हे देव ! नगर के लोग राक्षसगृह में रही हुई सीता को स्वीकार करने के अतिरिक्त तुम्हारे समस्त चरित्र की प्रशंसा करते हैं ॥ ३२ ॥

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण ।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥

सञ्जीविनी—कलत्रेति । एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण कीर्तिविपर्ययेणापकीर्त्याऽभ्याहतं वैदेहिबन्धोर्वैदेहिवल्लभस्य । "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः, कालिदास इतिवत् । हृदयम् । अयोघनेनाभितप्तं सन्तप्तमय इव विदद्रे विदीर्णम् । कर्तरि लिट् ।

अन्वयः—एवं किल कलत्रनिन्दागुरुणा कीर्तिविपर्ययेण अभ्याहतं वैदेहिबन्धोः हृदयम् अयोघनेन अभितप्तम् अय इव विदद्रे।

वाच्य०—एवं किल···कीर्तिविपर्ययेण अभ्याहतेन वैदेहिबन्धोः हृदयेनायोघनाभितप्तेन अयसा इव विदद्रे (भाववा०)।

चन्द्रिका—एवं किल! आः इत्थं किम्? 'इत्युक्त्वा' दुःखातिरेकद्योतनार्थोक्तिः। कलत्रस्य भार्यायाः सीतायाः निन्दया आक्षेपेण, गुरुणा दुर्भरेण, कीर्तिविपर्ययेण अपकीर्त्या, अपयशसा, अभ्याहतं क्षतम्, वैदेहिबन्धाः जानकीप्रियस्य हृदयं वक्षस्थलम्, अयोघनेन लोहपिण्डेन अभितप्तं सन्दीपितं, प्रज्वलितम् अय इव लोहं यथा, विदद्रे विशीर्णम्। उपमालंकारः—'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।' इति तल्लक्षणम्।

समास—कलत्रस्य निन्दा कलत्रनिन्दा, कलत्रनिन्दया गुरुः कलत्रनिन्दागुरुः, तेन कलत्रनिन्दागुरुणा। कीर्तेः विपर्ययः कीर्तिविपर्ययः, तेन। विदेहस्यापत्यं स्त्री वैदेही, वैदेह्याः बन्धुः वैदेहिबन्धुः, तस्य वैदेहिबन्धोः। अयसः घनम् अयोघनं तेन अयोघनेन।

कोशः—'कलत्रं श्रोणिभार्ययोः' 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे।' 'वार्तासम्भाव्ययोः किल' 'ववा यथा तथैवैवं साम्ये' 'यशः कीर्तिः समज्ञा च' 'स्याद् व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये।' 'लोहोऽस्त्री शस्त्रक तीक्ष्णं पिण्डं कालायसायसी' 'घनो मेघे मूर्तगुणे त्रिषु मूर्ते निरन्तरे।' 'हृदयं स्वान्तं हृन्मानसं मनः।' इत्यमरः।

भावार्थः—भार्यायाः सीताया निन्दां यशः प्रतिकूलां समाकर्ण्य श्रीरामचन्द्रस्य हृदयं तथा विदीर्णमभवत् यथा मुद्गरेण प्रताडितं सन्तप्तलोह विदीर्णं भवति। सीतायाः पावित्र्ये श्रीरामस्य पूर्णो विश्वासः वर्तते, अत एव 'वैदेहिबन्धोः' इति कविना प्रयुक्तम्। तत्रापि लोकापवादमाकर्ण्य महती व्यथा स्वाभाविकी।

हिन्दी—प्रिया सीता की निन्दा से दुःसह अपकीर्ति से श्रीराम का हृदय ऐसा विदीर्ण (फट) गया जैसे कि लोहे के घन से लाल-लाल लोहा॥ ३३॥

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सन्त्यजामि।
इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्तिः॥ ३४॥

सञ्जीविनी—किमिति। आत्मनो निर्वादोऽपवाद एव कथा ताम्। किमाक्षेपे उत अदोषां साध्वीं जायां सन्त्यजामि। उभयत्रापि प्रश्ने लट्। इत्येकपक्षाश्रयेऽन्यतरपक्षपरिग्रहे विक्लवत्वादपरिच्छेत्तृत्वात्स रामो दोलेव चला चित्तवृत्तिर्यस्य स आसीत्।

अन्वयः—'अहम्' आत्मनिर्वादकथाम् उपेक्षे किम्? उत अदोषां जायां सन्त्यजामि 'किम्'? इति एकपक्षाश्रयविक्लवत्वात् सः दोलाचलचित्तवृत्तिः आसीत्।

वाच्य०—'मया' आत्मनिर्वादकथा उपेक्ष्यते किम् ? उत अदोषा जाया सन्त्यज्यते किम् ? (कर्मवा०), इति एकपक्षाश्रयविक्लवत्वात् तेन दोलाचलवृत्तिना अभूयत ( भाववा० )।

चन्द्रिका—आत्मनः स्वस्य, निर्वादस्य आक्षेपस्य, कथाम् आख्यायिकाम्, उपेक्षे अवहेलयामि किम् ? इति विकल्पो मनसा कल्प्यते। उत अथवा, अदोषां निर्दूष-णाम् अपांसुलाम्। सतीम्, सन्त्यजामि मुञ्चामि किम् ? इति एवं, एकपक्षाश्रये द्वयोरेकतरपक्षस्वीकारे, विक्लवत्वात् अनिश्चयात्, संशयात् अथवा अन्यतर-पक्षाभ्युपगमे खिन्नत्वात्, पत्नी जनापवादयोः एकस्य स्वीकरणं नाम अन्यस्य परि-त्यागः एव। उभयोरपि अत्याज्यत्वेन गम्भीर-व्याकुलतैव 'विक्लवत्वाद्' इत्यनेन विवक्षितः। सः श्रीरामः, दोलेव प्रेङ्खेव, 'दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः। चला चञ्चला, चित्तवृत्तिः मनोव्यापारः यस्यैवम्भूतः आसीत् अभूत्।

समासः—निर्वाद एव यद्वा निर्वादस्य कथा निर्वादकथा, आत्मनः निर्वाद-कथा आत्मनिर्वादकथा ( ष० त० ), ताम् आत्मनिर्वादकथाम्। न विद्यते दोषः यस्यां सा (बहु०) अदोषा, ताम् अदोषाम्। एकश्चासौ पक्षश्च (कर्म०) एकपक्षः, एकपक्षस्य आश्रयः एकपक्षाश्रयः, एकपक्षाश्रये विक्लवः ( स० त० ) एकपक्षाश्रयविक्लवः, तस्य भावः तत्त्वम्, तस्मात् एकपक्षाश्रयविक्लवत्वात्। दोलावत् चला चित्तवृत्तिः ( चित्तस्य वृत्तिः ) यस्य सः दोलाचलचित्तवृत्तिः।

कोशः—'किं कुत्सायां विकल्पे च' 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' 'प्रबन्धकल्पना कथा' 'भार्या जायाऽथ पुंभूम्नि दाराः' 'आहो उताहो किमुत विकल्पे किंकिमूत च।' 'विक्लवो विह्वलः स्यात्' 'दोला प्रेङ्खादिका स्त्रियाम्' 'चलं लोलं चलाचलम्' 'चित्तं तु चेतो हृदयम्' इत्यमराः।

भावार्थः—जनापवादस्य उपेक्षां कुर्याम् ? अथवा तदनुसारं निर्दोषां सतीं पत्नीं सीतां परित्यजेयम् ? अनयोः अन्यतरपक्षग्रहणेऽपि मार्मिकं मानसं सङ्कटं परामृशतः श्रीरामस्य चित्तवृत्तिः दोलावत् चञ्चला आसीत्। क्षणं किमपि निश्चेतुं न पारयति स्म।

हिन्दी—'जनापवाद की उपेक्षा करूँ ? अथवा निर्दोष ( सती ) पत्नी का परित्याग करू ?' इस प्रकार प्रत्येक पक्ष के लेने में व्याकुलता के कारण श्रीराम की चित्तवृत्ति ऐसी चंचल हो गई जैसे झूला ॥ ३४ ॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥३५॥

सञ्जीविनी—निश्चित्येति। किञ्च। वाच्यमपवादं, नास्त्यन्येन त्यागाति-रिक्तोपायेन निवृत्तिर्यस्य तदनन्यनिवृत्ति निश्चित्य पत्न्यास्त्यागेन परिमार्ष्टुं परिहर्तु-मैच्छत्। तथाहि, यशोधनानां पुंसां स्वदेहादपि यशो गरीयो गुरुतरम्। इन्द्रियार्थात्

स्रक्चन्दनवनिताऽऽदेरिन्द्रियविषयाद्गरीय इति किमुत वक्तव्यम्। "पञ्चमी विभक्ते" इत्युभयत्रापि पञ्चमी। सीता चेन्द्रियार्थ एव।

अन्वयः—वाच्यम् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुम् ऐच्छत्। हि यशोधनानां स्वदेहादपि यशः गरीयः, किमुत इन्द्रियार्थात्?

वाच्य०—....पत्न्याः परित्यागेन परिमार्ष्टुं 'तेन' ऐषिष्ट (भाव०)। हि.... यशसा गरीयसा भूयते। (भाव०)

चन्द्रिका—वाच्यं निन्दाम्, नास्ति अन्येन पत्नीपरित्यागाद् अतिरिक्तेन कर्मणा, निवृत्तिः निन्दावारणं यस्य तथोक्तं निश्चित्य अवधार्य, पत्न्याः सीतायाः, परित्यागेन हानेन, परिहारेण, परिमार्ष्टुं क्षालयितुं, विलोपयितुम्, ऐच्छत् अभिलषितवान्, हि यस्मात् कारणात्, यशोधनानां कीर्तिद्रव्याणाम्, महापुरुषाणां स्वदेहादपि निजशरीरादपि यशः कीर्तिः, सुचरित इति ख्यातिः, गरीयः अधिकं गुरु, महत्तरम्। देहस्य सर्वेभ्योऽपि प्रियतरत्वाद्, देहार्थमेव कलत्रपुत्रमित्रादयो भवन्ति। परं कीर्तिप्राणानां कीर्तिरेव गरीयसी, देहोऽपि न तावद् गरीयान्। किमुत किं पुनः इन्द्रियार्थात् रूपादेरिन्द्रियविषयाद् बाह्याद्, गरीय इति वक्तव्यमिति शेषः। इदं हि दण्डापूपिकान्यायसिद्धमिति भावः। अर्थान्तरन्यासालङ्कारः सामान्येन विशेषसमर्थनरूपः।

समासः—अन्येन निवृत्तिः यस्य तद् (बहु०) अन्यनिवृत्ति, न अन्यनिवृत्ति (नञ्त०) अनन्यनिवृत्ति, तद् वाच्यम्' इत्यस्य विशे० क्लीबं द्विती०)। यश एव धनं येषां ते (बहु०) यशोधनाः, तेषां यशोधनानाम्। स्वस्य देहः स्वदेहः (ष० त०), तस्मात् स्वदेहात्। इन्द्रियाणाम् अर्थः इन्द्रियार्थः, तस्माद् इन्द्रियार्थात्।

कोशः—'भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि।' 'अभावे नह्यनो नापि' 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी।' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः।' 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।' 'विषया इन्द्रियार्थाश्च' 'यशः कीर्तिः समज्या च' 'उताप्यर्थविकल्पयोः' इत्यमराः।

भावार्थः—श्रीरामः क्षणकालमेव संशयं कृतवान्। अनन्तरं कर्तव्यं निर्धारितवान्। यशोरक्षणमावश्यकम्, तत् सीतापरित्यागं विना न सम्भवि, तस्मात् सीतां परित्यज्य जनापवादो मार्जनीयः, इति निर्णयम् अकरोत्। यशःप्राणा महापुरुषा निजदेहत्यागमपि कृत्वा यशो रक्षन्ति, एवं स्थिते पत्नीं परित्यज्यापि यशो रक्षन्तीत्यत्र नास्ति किमप्याश्चर्यमिति भावः। पत्न्यादेरिन्द्रियार्थत्वेन लघुत्वात्।

हिन्दी—इस अयश का परिमार्जन दूसरे किसी उपाय से अशक्य है समझ कर श्रीराम ने सीता के परित्याग से निन्दा को मिटाना चाहा। क्योंकि यश को

ही धन माननेवालों के लिए अपने शरीर से भी यश अधिक महत्त्ववाला होता है। तो इन्द्रियभोग्य पत्नी आदि की बात ही क्या है ? ।। ३५ ।।

स सन्निपात्यावरजान् हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ।। ३६ ।।

सञ्जीविनी—स इति । हतौजा निस्तेजस्कः स रामस्तस्य रामस्य विक्रिया दर्शनेन लुप्तहर्षानवरजान्सन्निपात्य सङ्गमय्यात्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्य आचचक्षे । पुनरिदं वाक्यमुवाच च ।

अन्वयः—हतौजाः सः तद्विक्रियादर्शनलुप्तहर्षान् अवरजान् संनिपात्य आत्माश्रयं कौलीनं तेभ्य आचचक्षे । पुनश्च इदं वाक्यम् उवाच ।

वाच्य०—हतौजसा तेन तद्विक्रिया दर्शनलुप्तहर्षान् अवरजान् संनिपात्य आत्माश्रयं कौलीनं तेभ्य आचचक्षे, पुनश्चेदं वाक्यम् ऊचे ( कर्मवा० ) ।

चन्द्रिका—हतौजाः नष्टतेजाः सः श्रीरामचन्द्रः, तद्विक्रियायाः राममुखविकारस्य दर्शनेन अवलोकनेन लुप्तः विनष्टः हर्षः आनन्दः येषां तान् तथोक्तान् अवरजान् अनुजान् लक्ष्मणभरतशत्रुघ्नान्, संनिपात्य सम्मेल्य, एकत्र भ्रातॄन् आहूयेत्यर्थः । आत्माश्रयं निजविषयकं स्वसम्बन्धि, कौलीनं जनापवादम्, तेभ्यः अनुजेभ्यः, आचचक्षे जगाद, कथयामास । पुनश्च कथनानन्तरन्तु इदम् अग्रे वक्ष्यमाणं बुद्धिस्थम वाक्यं वचनम्, उवाच अब्रवीत् ।

समासः तस्य विक्रिया तद्विक्रिया, तद्विक्रियायाः दर्शनं तद्विक्रियादर्शनम् (ष० तत्पु०), तद्विक्रियादर्शनेन लुप्तः हर्षः येषां ते (बहु०) तद्विक्रियादर्शनलुप्तहर्षाः, तान् । हतम् ओजः यस्य सः हतौजाः । अवरं जाता अवरजाः, तान् । आत्मा आश्रयः यस्य तत् (बहु० आत्माश्रयम्, तत् ।

कोशः—'ओजो दीप्तौ बले' 'समे विकृतिविक्रिये' 'दर्शनालोकनेक्षणम्' 'मुत्प्रीतिः प्रमदो हर्षः' 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ।' 'स्यात्कौलीनं लोकवादे युद्धे पश्वहि पक्षिणाम् ।' 'तिङ् सुबन्तचयो वाक्यम्' इत्यमरः ।

भावार्थः—विलुप्तमुखकान्तो रामः श्रीरामस्य मुखविकारविलोकनेन विगतहर्षान् लक्ष्मणादीन् अनुजान् एकत्र आकार्य तेभ्यः स्वविषयकं लोकापवादं कथयामास । न केवलमेतावद्, अग्रे कर्तव्यविषये निजनिर्णयमपि तान् बोधयामासेति भावः ।

हिन्दी—विनष्टमुखकान्तिवाले श्रीराम ने, श्रीराम की, मुखाकृति के विकार को देखकर आनन्दरहित हुए छोटे भाइयों को एकत्र बुलाकर अपने विषय का लोकापवाद उनसे कहा और पुनः इस वाक्य को कहा—।। ३६ ।।

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ।। ३७ ।।

सञ्जीविनी – राजर्षीति। रवेः प्रसूतिर्जन्म तस्य यस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्ताच्छुद्धान्मत्तो मत्सकाशात्। दर्पणस्य पयोदवातादिव, अम्भःकणादित्यर्थः। कीदृशोऽयं कलङ्क उपस्थितः प्राप्तः पश्यत।

अन्वयः—रविप्रसूतेः राजर्षिवंशस्य सदाचारशुचेः मत्तः दर्पणस्य पयोदवातादिव कीदृशः अयं कलङ्कः उपस्थितः, पश्यत।

वाच्य०—''''''''कीदृशेनानेन कलङ्केन उपस्थितेन 'भूयते' (भाववा०) 'युष्माभिः' दृश्यताम् (कर्म०)।

चन्द्रिका—रवेः प्रसूतिर्यस्य सूर्योत्पन्नस्य, राजर्षिवंशस्य ऋषितुल्यनृपवंशस्य। त्रिविधाः खलु ऋषयः श्रूयन्ते, राजर्षिः, देवर्षिः, ब्रह्मर्षिरिति। स्वधर्मनिरता इन्द्रियभोगासक्तिरहिताः राजानः सन्तोऽपि ऋषयः इति राजर्षयः। सदाचारैः समीचीनाचरणैः शुचेः निर्दोषस्य, 'आचारः प्रथमो धर्मः' इति स्मृतेः धर्माचरणशीलस्येति भावः। इदं वंशविशेषणपक्षे उपमाने वायौ सदोषत्वमिव स्वस्मिन्नपि उपमेये असच्चरित्रारोपस्य युक्तत्वाद् रामविशेषणं न। 'मत्तः' इत्यस्य विशेषणत्वपक्षे पञ्चम्यन्तं, सदाचरणैः निर्दोषात्, मत्तः मत्सकाशात्, पञ्चम्यास्तसिल्। दर्पणस्य मुकुरस्य, 'दर्पणे मुकुरादर्शौ' इत्यमरः। पयोदवातादिव मेघपवनाद् यथा, जलकणिकायुक्तपवनादित्यर्थः। कीदृशः कीदृग्विधः किम्प्रकारकः, अयं एष इति वक्ष्यमाणस्य परामर्शः। कलङ्कः लाञ्छनं, कुत्सितं चिह्नम्, उपस्थितः सन्निहितः अस्तीति शेषः। पश्यत विलोकयत, अस्य वाक्यार्थः कर्म।

समासः—रवेः प्रसूतिः यस्य सः रविप्रसूतिः, तस्य रविप्रसूतेः। राजानश्च ते ऋषयश्च राजर्षयः (कर्म०), राजर्षीणां वंशः राजर्षिवंशः, तस्य। सन्तश्च ते आचाराश्च (कर्म०) सदाचाराः, सतामाचाराः सदाचाराः (ष० तत्पु०) इति वा, सदाचारैः शुचिः सदाचारशुचिः, तस्मात् सदाचारशुचेः। पयः ददातीति पयोदः, पयोदस्य वातः पयोदवातः, तस्मात् पयोदवाताद्।

कोशः—'भानुर्हंसः सहस्रांशुस्तपनः सविता रविः।' 'प्रसूतिः प्रसवः' 'ऋषयः सत्यवचसः' 'वंशोऽन्ववायः सन्तानः' ('शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु।' इति मेदिनी।) 'दर्पणे मुकुरादर्शौ' 'नभस्वद्वातपवन—' 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्।' इत्यमराः।

भावार्थः—सभूमिकाबन्धं वक्तव्यं प्रस्तौति श्रीरामचन्द्रः। राजर्षिभिः प्रवर्तितस्य सदाचरणशुद्धस्य सूर्यवंशस्य यथा विमले दर्पणे वर्षाकालिकात् जललवयुक्तात् वायोः मलिनता संलग्ना भवति तथा मत्सकाशात् एष कलङ्कः संलग्नः। यूयमिदं विचारयत।

हिन्दी—सूर्य से उत्पन्न, सदाचरणों से पवित्र तथा राजर्षियों के वंश को, ( स्वच्छ ) दर्पण को पानी की बूँदों से युक्त बरसात के वायु के समान मलिन करनेवाला यह कैसा कलंक मेरे कारण से आ पड़ा है. (तुम लोग) देखो ॥३७॥

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥

सञ्जीविनी—पौरेष्विति । सोऽहम् । अपां तरङ्गेषु तैलबिन्दुमिव पौरेषु बहुलीभवन्तं प्रसरन्तम् । स एव पूर्वो यस्य स तम् । तत्पूर्वमवर्णमपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः । द्विपेन्द्रः । आलानमेवालानिकम् । विनयादित्वात्स्वार्थे ठक् । अथवाऽऽलानं बन्धनं प्रयोजनमस्येत्यालानिकम् । "प्रयोजनम्" इति ठक् । स्थाणुं स्तम्भमिव । चूतवृक्ष इतिवत्सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं नेशे न शक्नोमि ।

अन्वयः—सः अहम् अपां तरङ्गेषु तैलबिन्दुम् इव पौरेषु बहुलीभवन्तं तत्पूर्वम् अवर्णं द्विपेन्द्रः आलानिकं स्थाणुम् इव सोढुं न ईशे ।

वाच्य०—तेन मया अपां तरङ्गेषु तैलबिन्दुरिव पौरेषु बहुलीभवन् तत्पूर्वोऽवर्णः द्विपेन्द्रेण आलानिकः स्थाणुरिव सोढुं न ईश्यते ( भाववा० ) ।

चन्द्रिका—सोऽहं विमलवंशस्य मलिनतानयनप्रयोजकोऽहमिति यावत् । अपां जलानां, तरङ्गेषु ऊर्मिषु, प्रवाहेष्वित्यर्थः, तैलबिन्दुम् इव तैलकणं यथा, पौरेषु नागरिकेषु, प्रजाजनेष्विति यावत् । बहुलीभवन्तं प्रवर्धमानम्, तत्पूर्वम् इदं प्रथमम्, सर्वप्रथमम्, अवर्णं जनापवादम्, द्विपेन्द्रः गजराजः, आलानिकं बन्धनार्थकम्, स्थाणुमिव स्थूणां यथा, सोढुं क्षन्तुम्, सहनं कर्तुम् । न ईशे न प्रभवामि । न शक्नोमि ।

समासः—तैलस्य बिन्दुः तैलबिन्दुः, तं तैलबिन्दुम् । न बहुलः अबहुलः, अबहुलः बहुलः भवन् बहुलीभवन्, तं बहुलीभवन्तम् । स एव पूर्वः यस्य सः तत्पूर्वः, तं तत्पूर्वम् । आलानमेव आलानिकं, तम् आलानिकम् ।

कोशः—'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।' 'आपः स्त्री भूम्नि वार्वारि' 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ।' 'पृषन्ति बिन्दुपृषताः पुमांसे विप्रुषः स्त्रियाम् ।' 'अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।' 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।' 'आलानं बन्धनस्तम्भे' 'स्थाणुर्वा ना ध्रुवः शंकुः' इत्यमरः ।

भावार्थः—प्रजाजनेषु कर्णपरम्परया जलप्रवाहे तैलबिन्दुरिव प्रसरन् इदं प्रथममापतितः एष कलङ्कः गजेन्द्रस्य बन्धनस्तम्भ इव पवित्रोच्चकुलजातस्य मम दुःसहो वर्तते । अहमिमं कलङ्कं सोढुं न पारयामि इति भावः ।

हिन्दी—ऐसे उच्चकुलोत्पन्न मैं, जलप्रवाह में पड़ी तेल की बूँद के समान नागरिकों में फैलने वाले प्रथम आये हुए इस अपवाद को वैसे ही नहीं सह सकता जैसे गजराज बाँधने से खम्भे को नहीं सहता ॥ ३८ ॥

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

सञ्जीविनी—तस्येति । तस्यावर्णस्यापनोदाय दूरीकरणाय फलप्रवृत्तावपत्योत्पत्तावुपस्थितायां सत्यामपि निर्व्यपेक्षो निःस्पृहः सन् । वैदेहसुताम् । पुरस्तात्पूर्वं पितुराज्ञया समुद्रनेमिं समुद्रो नेमिरिव नेमिर्यस्याः सा भूमिः । तामिव त्यक्ष्यामि ।

अन्वयः—तस्य अपनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षः 'सन् अहं' वैदेहसुतां पुरस्तात् पितुः आज्ञया समुद्रनेमिम् इव त्यक्ष्यामि ।

वाच्य०—तस्यापनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षेण वैदेहसुता पुरस्तात् पितुराज्ञया समुद्रनेमिरिव 'मया' त्यक्ष्यते ( कर्मवा० ) ।

चन्द्रिका—तस्य अवर्णस्य, अपवादस्य, अपनोदाय अपाकरणाय, अपसारणाय, फलप्रवृत्तौ फलप्रसवे, पुत्रजन्मनि इत्यर्थः । उपस्थितायामपि सन्निहितायामपि, निर्व्यपेक्षः गताभिलाषः, निवृत्तमनोरथः 'सन् भवन्, अहम्' वैदेहसुतां जानकीम्, पुरस्तात् प्राग्, पितुः जनकस्य दशरथस्य, आज्ञया आदेशेन, समुद्रनेमिम् सागरान्तां भुवम्, इव यथा त्यक्ष्यामि परिहरिष्यामि, मोक्ष्यामि । उपमालंकारः । पृथिवीजानक्योरुपमानोपमेयभावः ।

समासः—फलस्य प्रवृत्तिः फलप्रवृत्तिः, तस्यां फलप्रवृत्तौ । व्यपेक्षाया निष्क्रान्तः निर्व्यपेक्षः । विदेहानां राजा वैदेहः, वैदेहस्य सुता वैदेहसुता, तां वैदेहसुताम् । समुद्रः नेमिः यस्याः सा ( बहु० ) समुद्रनेमिः, ताम् ।

कोशः—'सस्ये हेतुकृते फलम्' 'सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे' 'प्राच्यां पुरस्तात् प्रथमे' 'तातस्तु जनकः पिता' 'नेमिः स्त्री स्यात् प्रधिः पुमान् ।' 'निदेशः शासनं च सः । शिष्टिश्चाज्ञा च' इत्यमरः ।

भावार्थः—तत्र स्वनिर्णयं श्रावयति । तस्यापवादस्य निरसनाय जानकी गर्भस्थे उत्पत्स्यमाने पुत्रसन्तानेऽपि निवृत्ताभिलाषः पूर्वं पितुरादेशेन परित्यक्तां सागरान्तां पृथिवीमिव जानकीं मोक्ष्यामि—इति भावः ।

हिन्दी—उस निन्दा को दूर करने के लिए पुत्रप्रसव निकट होने पर भी उसमें निःस्पृह होकर जानकी को मैं वैसे ही त्याग दूँगा जैसे कि पूर्व में पिताजी के आदेश से सागरान्त पृथिवी को छोड़ दिया था ॥ ३९ ॥

ननु सर्वथा साध्वी न त्याज्येत्याह—

अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥

सञ्जीविनी—अवैमीति । एनां सीतामनघा साध्वीति चावैमि । किन्तु मे मम लोकापवादो बलवान्मतः । कुतः । हि यस्मात्प्रजाभिर्भूमेश्छाया प्रतिबिम्बं

शुद्धिमतो निर्मलस्य शशिनो मलत्वेन कलङ्कत्वेनारोपिता । अतो लोकापवाद एव बलवानित्यर्थः ।

अन्वयः—एनाम् अनघा इति अवैमि, किन्तु लोकापवादः मे बलवान् मतः, हि प्रजाभिः भूमेः छाया शुद्धिमतः शशिनः मलत्वेन आरोपिता ।

वाच्य०—एषा अनघा इति 'मया' अवैयते ( कर्मवा० ) । हि प्रजाः भूमेः छायां शुद्धिमतः शशिनः मलत्वेन आरोपितवत्यः ( कर्तृवा० ) ।

चन्द्रिका—एनां सीताम्, अनघा इति निर्दोषा इति अवैमि जानामि । निपातेन इतिना कर्मणः अभिहितत्वात् 'अनभिहिते कर्मणि' द्वितीयाविधानात् 'अनघा' इत्यत्र प्रथमैव । किन्तु परन्तु, मे मम, लोकापवादः जननिन्दा, बलवान् शक्तिशाली, मतः अभीष्टः । वस्तुयाथार्थ्यादपि जनस्तोमोक्तिरतथ्यभूताऽपि 'न हि निर्मूलो जनापवादः' इत्यादिप्रवादात् प्रबलैव सम्पद्यते इति भावः । तत्रार्थान्तरं न्यस्यति— हि यतः प्रजाभिः जनैः, भूमेः भुवः, छायाप्रतिबिम्बम्, शुद्धिमतः निष्कलङ्कस्य, विमलस्य, शशिनः शशाङ्कस्य, चन्द्रस्य, मलत्वेन दोषत्वेन, लाञ्छनत्वेन, आरोपिता प्ररूढिं प्रापिता, वक्त्रपरम्परया प्रवर्तिता ।

समासः—न विद्यते अघं यस्याः सा अनघा ( बहु० ) । लोकानाम् अपवादः ( ष० त० ) लोकापवादः । बलमस्यास्तीति बलवान् ( मत्वर्थी० ) । शशः अस्यास्तीति शशी, तस्य शशिनः । शुद्धिः अस्यास्तीति शुद्धिमान्, तस्य शुद्धिमतः । मलस्य भावः मलत्वं, तेन मलत्वेन ।

कोशः—'अंहोदुःखव्यसनेष्वघम्' 'लोकस्तु भुवने जने' 'अपवादौ च निन्दाज्ञे' 'स्थौल्यसामर्थ्यसैन्येषु बलम्' 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।' 'भूर्भूमिरचलाऽनन्ता' 'मलोऽस्त्री पापविट्किट्टानि' 'प्रजा स्यात् सन्ततौ जने ।' इत्यमराः ।

भावार्थः—एषा जानकी निर्दोषा इत्यहं सम्यग् जाने, तथाऽपि जनसमूहमुखे यः अपवादः सः वस्तुतत्त्वादपि प्रबलः इति मम सिद्धान्तः । दृश्यते खलु लोके— विमलेऽपि चन्द्रे भूमेः प्रतिबिम्बं यत् पतति तत् जनाः कलङ्कं मन्यते प्रवदन्ते च तथा । 'जनानने कः करमर्पयिष्यति' इति भावः ।

हिन्दी—'यह सीता निष्कल्मषा है' यह मैं जानता हूँ । परन्तु लोकापवाद प्रबल है । जैसे निर्मल चन्द्र पर जो भूमि का प्रतिबिम्ब पड़ता है उसे लोग कलंक कहते हैं । कौन लागों को समझावे कि वस्तुस्थिति ऐसी है, अतः बहुमत के सामने नत होना ही मेरा मत है ॥ ४० ॥

रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥

सञ्जीविनी—रक्ष इति। किञ्च। मे रक्षोवधान्तः प्रयासो व्यर्थो न, किन्तु स वैरप्रतिमोचनाय वैरशोधनाय। तथा हि, अमर्षणोऽसहनो द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणितकाङ्क्षया दशति किम्? किन्तु वैरनिर्यातनायेत्यर्थः।

अन्वयः—मे रक्षोवधान्तः प्रयासः व्यर्थो न. सः वैरप्रतिमोचनाय अमर्षणः द्विजिह्वः पदा स्पृशन्तं शोणितकाङ्क्षया दशति किम्?

वाच्य०—मे रक्षोवधान्तेन प्रयासेन व्यर्थेन न 'भूयते' तेन वैरप्रतिमोचनाय 'भूयते' अमर्षणेन द्विजिह्वेन पदा स्पृशन् किं शोणितकाङ्क्षया दृश्यते।

चन्द्रिका—मे मम, रक्षोवधान्तः राक्षसध्वंसनपर्यन्तः प्रयासः परिश्रमः, व्यर्थो न वृथा न जातः। सः प्रयासः, वैरप्रतिमोचनाय 'कृते च प्रतिकर्तव्यम्' इति द्वेष-प्रतीकाराय। तत्र दृष्टान्तं दर्शयति—अमर्षणः अपराधासहिष्णुः, क्रोधनः, 'क्रोधनोऽमर्षणः कोपी' इत्यमरः। द्विजिह्वः भुजङ्गः, पदाचरणेन, स्पृशन्तं प्रहरन्तं, मनुष्यं शोणितकाङ्क्षया रक्तपिपासया, रुधिरस्पृहया, दशति किम्? दशनैः प्रतिहरति किम्, नैव सर्पस्य मानवरक्तपिपासा, कृतापमानस्य प्रतिशोध एवं तस्य फलम्।

समासः—रक्षसां वधः (ष० त०) रक्षोवधः, रक्षोवधः अन्तः यस्य सः रक्षोवधान्तः। वैरस्य प्रतिमोचनं वैरप्रतिमोचनम्, तस्मै वैरप्रतिमोचनाय। शोणितस्य काङ्क्षा शोणितकाङ्क्षा, तया शोणितकाङ्क्षया। द्वे जिह्वे यस्य सः द्विजिह्वः। न मर्षणः अमर्षणः।

कोशः—'नैर्ऋतो यातुरक्षसी' 'आलम्भपिञ्जविशरघातोन्माथवधा अपि।' 'क्रोधनोऽमर्षणः कोपी' 'पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियाम्।' 'रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्।' 'इच्छा काङ्क्षा स्पृहेहातृड्वाञ्छा' इत्यमरः।

भावार्थः—एवं यदि सीता परित्यक्तव्या तर्हि सेतुबन्धराक्षससंहारान्तः परिश्रमो वृथा जातः खलु? इति न वक्तव्यम्। स तु श्रमः सच्छलं दारापहारेण कृतवैरस्य रावणस्य प्रतीकारेण सफलो जातः। नहि सर्पः पादेन प्रहरन्त पुरुषं तद्रक्तपिपासया प्रतिदशति, अपितु पादस्पर्शनेन कृतस्य तिरस्कारस्य प्रतीकारार्थमेव। तथैव ममापि प्रयासो मन्यतामिति भावः।

हिन्दी—मैंने जो राक्षस वध तक का परिश्रम व्यर्थ नहीं गया वह तो बदला चुकाने के लिए था। सर्प पैर से छूने वाले को उसकी खून की इच्छा से डँसता है क्या? (वह केवल अपमान का बदला चुकाता है) ॥ ४१ ॥

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः।
यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ॥ ४२ ॥

सञ्जीविनी—तदिति। तत्तस्मादेष मे सर्गो निश्चयः। 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। करुणार्द्रचित्तैर्भवद्भिर्न प्रतिषेधनीयः। निहृतं वाच्यमेव शल्यं येषां तान्प्राणान्मया चिरं धारयितुं धारण कारयितुं वा युष्माकमर्थितार्थित्वमिच्छा यदि। अस्तीति शेषः।

अन्वयः—तत् एष मे सर्गः करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः, निर्हृतवाच्यशल्यान् प्राणान् मया चिरं धारयितुं वः अर्थिता यदि 'भवति'।

वाच्य०—तद् एतेन सर्गेण करुणार्द्रचित्तैः भवद्भिः प्रतिषेधनीयेन न 'भूयेत' मया निर्हृतवाच्यशल्यान् प्राणान् चिरं धारयितुं वः अर्थितया यदि 'भूयते' ( भाव० )।

चन्द्रिका—तत् तस्मात् कारणात्, 'यत्तद्यतस्ततो हेतौ' इत्यव्ययवर्गेऽमरः। एषः अयम्, मे मम, सर्गः निर्णयः, सीतापरित्यागरूपः, करुणया कृपया, 'परदुःखप्रहाणेच्छा दया' इत्यभियुक्ताः। आर्द्रं सरसं पूर्णम्, चित्तं मनः येषां तैस्तथोक्तैः, भवद्भिः युष्माभिः, न प्रतिषेधनीयः न निषेधयितव्यः, न निवारणीयः, निर्हृतं समुद्धृतं वाच्यमेव अपवाद एव शल्यं कण्टकः शंकुः येभ्यस्तान् प्राणान् असून् 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। मया रामद्वारा, धारयितु स्थापयितुं वाहयितुं, वः युष्माकम्, अर्थिता याच्ञा, यदि चेद् भवतीति शेषः। युष्माकं मम चिरजीवनस्य इच्छा यदि वर्तते तदाऽहं नैव निषेधनीय इत्यर्थः।

समासः—करुणया आर्द्रं चित्तं येषां ( बहु० ) ते करुणार्द्रचित्ताः, तैः। अर्थन्ते इत्यर्थिनः, अर्थिनां भावः अर्थिता। वाच्यमेव शल्यं ( कर्म० ) वाच्यशल्यम्, निर्हृतं वाच्यशल्यं येभ्यस्ते ( बहु० ) निर्हृतवाच्यशल्याः, तान्।

कोशः—'यत्तद्यतस्ततो हेतौ' 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु।' 'कारुण्यं करुणा घृणा। कृपा दयाऽनुकम्पा स्यात्, 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्मितं समुन्नमुत्तञ्च।' 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः।' 'सेवकार्थ्यनुजीवितः' 'वा पुंसि शल्यं शंकुर्ना' 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः।

भावार्थः—यदि युष्माकं बहुकालपर्यन्तं मम अकीर्तिरहितं जीवनमभीष्टं चेत् अस्मात् सीतापरित्यागनिश्चयात् नाऽहं वारणीयः। अन्यथाऽहं प्राणांस्त्यक्ष्यामि, कलङ्काङ्काः प्राणा न मे प्रियाः, 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति स्मरणात्।

हिन्दी इस लिए, इस मेरे निश्चय को आप लोग न रोकें, कलंकरूप काँटे से मुक्त मेरे प्राणों को चिरकाल तक मेरे द्वारा धारण कराने की यदि आपलोगों की अपेक्षा हो तो॥ ४२॥

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम्।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा॥ ४३॥

सञ्जीविनी—इतीति। इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशमतिक्रूराग्रहमीशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चनापि निषेद्धुं निवारयितुमनुमोदितुं प्रवर्तयितुं वा शक्तो नासीत्, पक्षद्वयस्यापि प्रबलत्वादित्यर्थः।

अन्वयः—इति उक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशम् ईशं तेषु भ्रातृषु कश्चन निषेद्धुम् अनुमोदितुं वा शक्तः न आसीत्।

वाच्य०—''''भ्रातृषु केनचन निषेद्धुमनुमोदितुं वा शक्तेन नाभूयत ( भाववा० )।

चन्द्रिका—इति कथितरीत्या, उक्तवन्तं गदितवन्तम्, जनकात्मजायां वैदेह्याम् नितान्तरूक्षः अत्यन्तपरुषः, अभिनिवेशः हठः, यस्य तथोक्तम् ईशं प्रभुं समर्थम्, तेषु लक्ष्मणभरतशत्रुघ्नेषु भ्रातृषु अनुजेषु मध्ये कश्चन कश्चिदपि, अन्यतमोऽपि, निषेद्धुं रोद्धुम्, अनुमोदितुं वा अनुमन्तुं वा शक्तः क्षमः समर्थः, नासीत् नाभूत्, अत्र कश्चिदपि भ्राता निषेधम् अनुमतिं वा प्रकाशयितुं नाशकत् इत्यर्थः।

समासः—जनकस्य आत्मजा जनकात्मजा, तस्यां जनकात्मजायाम्। नितान्तं रूक्षः नितान्तरूक्षः, नितान्तरूक्षः अभिनिवेशः यस्य सः ( बहु० ) नितान्तरूक्षाभिनिवेशः, तं नितान्तरूक्षाभिनिवेशम्।

कोशः—'इति हेतुप्रकरणप्रकाशादि-समाप्तिषु।' 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। प्राहुर्दुहितरं सर्वे' 'तीव्रैकान्तनितान्तानि' 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' इत्यमरः।

भावार्थः—इत्थं कथितवन्तं सीताविषये सर्वथात्यन्त-निष्ठुराभिप्रायं समर्थं ज्येष्ठं श्रीरामं कोऽपि भ्राता 'एवं मा क्रियताम् अस्तु, एवं क्रियताम्' इत्युभयथाऽपि निषेधमनुमतिं वा प्रकटयितुं समर्थो नाभूत्। सर्वेऽपि खिन्नमानसास्तूष्णीं स्थिता इति भावः।

हिन्दी—इस प्रकार कहे हुए और जानकी के विषय में अत्यन्त निष्ठुर आग्रह करने वाले स्वामी श्रीराम को उन भाइयों में कोई भी न तो रोक सका न अनुमति ही दे सका ( सभी शोकार्त मौन रह गये )॥ ४३॥

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश॥ ४४॥

सञ्जीविनी—स इति। लोकत्रयगीतकीर्तिस्त्रैलोक्ये प्रथितयशा यथार्थभाषी लक्ष्मणपूर्वजन्मा लक्ष्मणाग्रजः स रामो निदेशे स्थितमाज्ञाकारिणं लक्ष्मणं विलोक्य 'हे सौम्य, सुभग' इत्याभाष्य च पृथग्भरतशत्रुघ्नाभ्यां विनाकृत्यादिदेशाज्ञापयामास।

अन्वयः—लोकत्रयगीतकीर्तिः यथार्थभाषी लक्ष्मणपूर्वजन्मा सः निदेशे स्थितं लक्ष्मणं विलोक्य अये 'सौम्य' इति आभाष्य च पृथग् आदिदेश।

वाच्य०—लोकत्रयगीतकीर्तिना लक्ष्मणपूर्वजन्मना तेन निदेशे स्थितं लक्ष्मणं विलोक्य अये 'सौम्य' इत्याभाष्य च 'सः' पृथग् आदिदिशे ( कर्म० )।

चन्द्रिका—लोकत्रये त्रिभुवने ( स्वर्गमर्त्यपातालेषु ) गीता वर्णिता, कीर्तिः यशः, यस्यैवम्भूतः लक्ष्मणपूर्वजन्मा सौमित्रिज्येष्ठभ्राता, सर्वेषां पूर्वजन्मत्वेऽपि

चिरसहवासितया लक्ष्मणग्रहणम् । सः श्रीरामः, निदेशे शासने, स्थितं निश्चलम् लक्ष्मणं सौमित्रिम्, विलोक्य अवेक्ष्य, 'अये सौम्य ! भद्र !' इति एवम् आभाष्य आमन्त्र्य, सम्बोध्य च, पृथक् भरतशत्रुघ्नाभ्यां विरहितीकृत्य, आदिदेश शशास, आज्ञातवान् ।

समासः - लक्ष्मणात् पूर्वं जन्म यस्य: सः लक्ष्मणपूर्वजन्मा (बहु०) । लोकानां त्रयं लोकत्रयम्, लोकत्रये गीता कीर्तिः यस्य सः लोकत्रयगीतकीर्तिः । अर्थमनतिक्रम्य वर्तते इति यथार्थम् ( अव्यी० ), यथार्थं भाषते इति यथार्थभाषी ।

कोशः—'पूर्वजस्त्वग्रियोऽग्रजः' 'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्' 'यशः कीर्तिः समज्या च' 'निदेशः शासनं च सः' 'पृथग् विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।' इत्यमराः ।

भावार्थः—'रामो द्विर्नाभिभाषते' इत्युक्तदिशा तथ्यवक्ता त्रिलोक्यामपि विख्यातयशाः लक्ष्मणाग्रजः श्रीरामः आज्ञापालकं लक्ष्मणमवलोक्य हे सुजन ! इति च सम्बोध्य भरतशत्रुघ्नाभ्यां पृथक्कृत्य तमेवमादिष्ट तमेवमादिष्टवानिति भावः ।

हिन्दी—तीनों लोकों में जिनकी कीर्ति विख्यात है और जो सत्यभाषी हैं ऐसे लक्ष्मण के बड़े भाई श्रीराम ने आज्ञापालक लक्ष्मण की ओर देखकर 'हे सौम्य !' ऐसा सम्बोधन कर उन्हें भरत एवं शत्रुघ्न से अलग करके यह आज्ञा दी ।। ४४ ।।

प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ।। ४५ ।।

सञ्जीविनी—प्रजेति । दोहदो गर्भिणीमनोरथः, तच्छंसिनी ते प्रजावती भ्रातृजाया । 'प्रजावती भ्रातृजाया' इत्यमरः । तपोवनेषु स्पृहयालुरेव सस्पृहेव । "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" इत्यनेनालुच्प्रत्ययः । स त्व रथी सन् । तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यामनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा "विभाषापः" इत्ययादेशः । त्यज ।

अन्वयः - दोहदशंसिनी ते प्रजावती तपोवनेषु स्पृहयालुरेव 'अस्ति' स त्वं रथी 'सन्' तद्व्यपदेशम् एनां वाल्मीकिपदं प्रापय्य त्यज ।

वाच्य०—दोहदशंसिन्या ते प्रजावत्या तपोवनेषु स्पृहयाल्वा 'भूयते' (भाव०) एव । तेन त्वया रथिना तद्व्यपदेशनेया एषा वाल्मीकेः पदं प्रापय्य त्यज्यताम् ( कर्मवा० ) ।

चन्द्रिका—दोहदशंसिनी गर्भिणीस्पृहावादिनी, ते तव, प्रजावती भ्रातृजाया, सीता, तपोवनेषु धर्मारण्येषु, ऋष्याश्रमेषु स्पृहयालुरेव साभिलाषैव, अस्तीति शेषः । स त्वं तस्याः मम च आज्ञाकारीति तच्छब्दस्यार्थः, त्वं रथी स्यन्दनारूढः,

'सन् भवन्' तद्व्यपदेशेन दोहदव्याजेन नेयां प्रापणीयाम् एनां सीताम् वाल्मीकेः प्राचेतसस्य, पदम् आश्रमस्थानम्, प्राप्य्य नीत्वा, वाहयित्वा, ज्यज मुञ्च।

समासः दोहदं शंसतीति दोहदशंसिनी। तपसः वनानि तपोवनानि, तेषु। स्पृहयितुं शीलमस्या इति स्पृहयालुः। तस्य व्यपदेशः तद्व्यपदेशः, तद्व्यपदेशेन नेया तद्व्यपदेशनेया ( तृ० त० ) ताम्। रथः अस्यास्तीति रथी ( मत्व० ) वाल्मीकेः पदं वाल्मीकिपदम्, तत्।

कोशः—'प्रजावती भ्रातृजाया' 'दोहदं गर्भिणीच्छायामिच्छामात्रेऽपि दोहृदम्।' (इति धनञ्जय) 'रथिनः स्यन्दनारोहः' 'व्याजोऽपदेशो लक्ष्यञ्च' 'प्राचेतसश्चादिकविः स्यान्मैत्रावरुणश्च सः। वाल्मीकिः' (अमरे प्रक्षिप्तम्), अपि वाल्मीकवल्मीकौ' (त्रिकाण्डशेषः)। 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यमरः।

भावार्थः—अये लक्ष्मण! सीता दोहदेन तपोवनानि पुनर्द्रष्टुमभिलषत्येव। तद्व्याजेन तां रथमारोप्य महर्षिवाल्मीकेराश्रमं नीत्वा तत्र च तां त्यक्तुमर्हसि। रथारोहात् पूर्वं तपोवनेऽपि किमपीदं न सूचनीयं तस्यै। केवलं दोहदपूरणाय तपोवनं गम्यते इत्येवाभिनयन् पर्यन्ते तां तत्र परित्यजेति भावः।

हिन्दी—तुम्हारी भाभी 'दोहद' में आश्रम देखना चाहती ही हैं, उस बहाने से उन्हे रथ में बैठा कर वाल्मीकिमहर्षि के आश्रम में लेजाकर छोड़ो॥ ४५॥

स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया॥ ४६॥

सञ्जीविनी—स इति। पितुर्जमदग्नेर्नियोगाच्छासनाद्भार्गवेण जामदग्न्येन कर्त्रा। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इत्यनेन षष्ठीप्रतिषेधः। मातरि द्विषतीव द्विषद्वत्। "तत्र तस्येव" इति वतिप्रत्ययः। प्रहृतं प्रहारं शुश्रुवाञ्छ्रुतवान्। "भाषायां सदवसश्रुवः" इति कसुप्रत्ययः। स लक्ष्मणस्तदग्रजशासनं प्रत्यग्रहीत्। हि यस्माद् गुरूणामाज्ञाऽविचारणीया।

अन्वय—पितुः नियोगाद् भार्गवेण मातरि द्विषद्वत् प्रहृतं शुश्रुवान् स तद् अग्रजशासनं प्रत्यग्रहीत्। हि गुरूणाम् आज्ञा अविचारणीया 'भवति'।

वाच्य०—पितुः नियोगाद् भार्गवः मातरि द्विषद्वत् प्रहृतवान् इति शुश्रुवता तेन अग्रजशासनं प्रत्यग्राहि (कर्मवा०)। हि गुरूणाम् आज्ञया अविचारणीयया 'भूयते' ( भाव० )।

चन्द्रिका पितुः तातस्य जमदग्नेः, नियोगाद् आदेशात् भार्गवेण परशुरामेण, मातरि जनन्यां रेणुकायाम् द्विषद्वत् शत्रौ इव, प्रहृतं ताडनं नपुंसके भावे क्तः, शुश्रुवान् आकर्णितवान्, सः लक्ष्मणः, तत् उक्तं, अग्रजशासनं ज्येष्ठादेशम्, प्रत्यग्रहीत् अङ्गीचकार। हि यतः, गुरूणां पितृज्येष्ठभ्रात्रादीनाम्, आज्ञा शासनम्, अविचारणीया

युक्तायुक्तत्वाभ्यां न विमर्शनीया, स्वीकरणीयैव । अर्थान्तरन्यासालंकारः, सामान्येन विशेषसमर्थनात् 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।' इति तल्लक्षणम् ।

समासः—द्विषदि इव द्विषद्वत् । अग्रे जातः अग्रजः, अग्रजस्य शासनम् अग्रजशासनम्, तत् । न विचारणीया अविचारणीया । गृणन्ति तत्त्वानीति गुरवः, तेषां गुरूणाम् ।

कोशः—'जनयित्री प्रसूर्माता जननी' 'तातस्तु जनकः पिता' 'द्विषद्द्वेषणदुर्हृदः ।' 'पूर्वजस्त्वग्रियोऽग्रजः' 'निदेशः शासनं च सः । शिष्टिश्चाज्ञा च' 'हि हेताववधारणे' 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः ।

भावार्थः—लक्ष्मणः पित्रादेशेन परशुरामं मातरि इव शत्रौ प्रहारं कृतवान्—इति श्रुतवानासीत् कृतयुगवृत्तम् । तस्मात् स्वयमपि सः तादृशं निष्ठुरं ज्येष्ठशासनं पूर्वोत्तरपरामर्शं विनैव स्वीचकार । उचितमेवैतत् गुरूणामाज्ञा उचिता वाऽनुचिता वेति न विचारणीया । कदाचिद् जमदग्निः पत्नीं रेणुकां सायं जलाहरणार्थं गतां विलम्बेन च प्रत्यागतां विलोक्य कुपितोऽभूत् । तस्याश्च विलम्बो जलाशये अप्सरोभिः सह जलक्रीडां कुर्वतः कस्यचिद् गन्धर्वस्य विलोकनेन सञ्जातः । अयमपि मानसोऽपराधः जमदग्निनाऽवगतः । अतः स क्रोधावेशात् स्वपुत्रान् एकैकश आकार्य मातुः शिरश्छेदनमादिदेश । अन्येषु सर्वेषु पुत्रेषु अस्वीकुर्वत्सु अन्तिमं पुत्रं परशुराममाहूय तामाज्ञां श्रावयामास । स पितृप्रभावमाज्ञाय तत्क्षणमेव असिना मातुः शिरश्चिच्छेद । ततः जमदग्निः तानपि भ्रातॄन् हन्तुमाज्ञासवान् । परशुरामस्तथैव तामाज्ञामपि सद्य एव पालयामास । अनेनाज्ञाकरणेन प्रसन्नो मुनिः परशुरामाय वरद्वयं प्रादात् । तदा परशुरामः एकेन वरेण मातुः भ्रातॄणाञ्च पुनर्जीवनं तेषां ( मातुः भ्रातॄणाञ्च ) स्वकृतवधास्मरणं च प्रार्थितवान्, द्वितीयेन च स्वस्य मातुः भ्रातॄणाञ्च वधजन्यप्रत्यवायाभावं पितरमयाचत । जमदग्निरुभयमपि स्वीकृतवानिति महाभारतीयेयं कथाऽत्रानुसन्धेया ।

हिन्दी—परशुराम ने पिता के आदेश से माता पर शत्रु जैसा प्रहार किया था–ऐसी बात को सुना हुआ लक्ष्मण ने भी बड़े भाई की आज्ञा को स्वीकार कर लिया क्योंकि गुरुओं की आज्ञा पर युक्तायुक्तत्व का विचार नहीं किया जाता ॥ ४६ ॥

अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥

सञ्जीविनी—अथेति । अथासौ लक्ष्मणः अनुकूलश्रवणेन प्रतीतामिष्टाकर्णनेन तुष्टां वैदेहसुतामत्रस्नुभिरभीरुभिर्गर्भिणीवहनयोग्यैः । "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः । तुरङ्गैर्युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथमारोप्य प्रतस्थे ।

अन्वयः—अथ अनुकूलश्रवणप्रतीतां वैदेहसुतां अत्रस्नुभिः तुरङ्गैः युक्तधुरं सुमन्त्रप्रतिपन्नरश्मिं रथम् आरोप्य प्रतस्थे ।

वाच्य०—अथ.......रथम् आरोप्य 'तेन' प्रतस्थे ( भाव० )। अन्यत् अन्वयानुसारमेव।

चन्द्रिका—अथ भ्रात्राज्ञा स्वीकारानन्तरम्। 'सः' इति पूर्वपद्योक्तः कर्तृवात्राप्यनुसंवद्धयते। लक्ष्मणः अनुकूलस्य अभीष्टतपोवनदर्शनस्य, श्रवणेन आकर्णनेन प्रतीतां हृष्टाम्, वैदेहसुतां जानकीम्, अत्रस्नुभिः अकातरैः, निर्भीकैः, तुरङ्गैः घोटकैः, युक्तधुरं संयुक्ताग्रभागम् 'धूः स्त्री क्लीबे यानमुखम्' इत्यमरः, सुमन्त्रेण सुमन्त्रनामकामात्येन, प्रतिपन्नः गृहीतः, रश्मिः प्रग्रहः 'किरणप्रग्रहौ रश्मी' इत्यमरः, अश्वादिमुखरज्जुः, यस्य तादृशं रथं स्यन्दनम् आरोप्य आरोह्य, प्रतस्थे निर्जगाम।

समासः—अनुकूलस्य श्रवणम् अनुकूलश्रवणम्, अनुकूलश्रवणेन प्रतीता ( तृ० त०) अनुकूलश्रवणप्रतीता, ताम्। विदेहानां राजा वैदेहः, वैदेहस्य सुता (ष०त०) वैदेहसुता, ताम्। न त्रस्नवः अत्रस्नवः ( नञ्त० ), तैः अत्रस्नुभिः। युक्ता धूः यस्य स ( बहु० ) युक्तधूः, तं युक्तधुरम्। सुमन्त्रेण प्रतिपन्नः रश्मिः यस्य सः ( बहु० ) सुमन्त्रप्रतिपन्नरश्मिः, तं सुमन्त्रप्रतिपन्नरश्मिम्।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' 'ख्याते हृष्टे प्रतीतः' 'अधीरे कातरत्रस्नो भीरुभीलुकभीरुकाः।' 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः।' 'धूः स्त्री क्लीबे यानमुखम्' 'किरणप्रग्रहौ रश्मी' इत्यमराः।

भावार्थः—अनन्तरम् अभीष्टतपोवनदर्शनस्वीकारेण प्रसन्नां जानकीं निर्भीकैर्धीरैः तुरगैः युक्तं सुमन्त्रगृहीतसारथ्यं रथं समारोह्य लक्ष्मणोऽयोध्यातो निर्जगामेति भावः।

हिन्दी—इसके अनन्तर लक्ष्मण, अभीष्ट दोहद ( इच्छा—तपोवन दर्शन की ) की पूर्ति सुनकर प्रसन्न हुई जानकीजी को, न डरनेवाले घोड़े जिसमें जुते हैं एवं सुमन्त्रने घोड़ों को रास जिसने अपने हाथमें ली है—ऐसे रथ में चढ़ाकर निकल पड़े ॥ ४७ ॥

सा नीयमाना रुचिरान् प्रदेशान् प्रियङ्करो मे प्रिय इत्यनन्दत्।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥

सञ्जीविनी—सेति। सा सीता रुचिरान्मनोज्ञान्प्रदेशान्नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियङ्करः प्रियकारीत्यनन्दत्। 'क्षेमप्रियमद्रेऽण्च" इति चकारात्खच्प्रत्ययः। तं प्रियमात्मानं विषये कल्पद्रुमतां सुरवृक्षतां विहायासिपत्रवृक्षं जातं नाबुद्ध नाज्ञासीत्। बुध्यतेर्लुङ्। असिपत्रः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः। 'असिपत्रो भवेत्कोषाकारे च नरकान्तरे' इति विश्वः। आसन्नघातुक इति भावः।

अन्वयः—सा रुचिरान् प्रदेशान् नीयमाना सती मे प्रियः प्रियङ्करः इत्यनन्दत्। तम् आत्मनि कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध।

वाच्य०—तया रुचिरान् प्रदेशान् नीयमानया मे प्रियः प्रियङ्कर इत्यनन्द्यत (भाव०) सः कल्पद्रुमतां विहाय आत्मनि असिपत्रवृक्षो जात इति न अबुद्धयत (कर्मवा०)।

चन्द्रिका—सा जानकी, रुचिरान् मनोरमान्, प्रदेशान् स्थानानि नीयमाना वाह्यमाना, याप्यमाना 'सती भवन्ती' मे मम, प्रियः वल्लभः श्रीरामः, प्रियङ्करः हितकारी इति इत्थम्, अनन्दत् प्रमुदिता अभवत्। तं प्रियं श्रीरामम्. आत्मनि स्वविषये, कल्पद्रुमतां कल्पवृक्षत्वं, इष्टप्रदतां, विहाय परित्यज्य, असिपत्रवृक्षं तन्नामानं तरुम्, असिवत् पत्राणि यस्य सः असिपत्रः, खड्गवन्निशितदलवान् तं वृक्षं जातं संवृत्तम्, कल्पवृक्षत्वं त्यक्त्वा छेदकपत्रवद्वृक्षत्वं प्राप्तम्, अहितकारिणमिति यावत्। न अबुद्धयत न ज्ञातवती।

समासः—प्रियं करोतीति प्रियङ्करः, तं प्रियङ्करम्। कल्प इति द्रुमः कल्पद्रुमः, कल्पद्रुमस्य भावः कल्पद्रुमता, तां कल्पद्रुमताम्। असिपत्र इति वृक्षः (कर्म०) असिपत्रवृक्षः, तम् असिपत्रवृक्षम्।

कोशः— सुन्दरं रुचिरं चारु सुषमम्' 'दयितं वल्लभं प्रियम्' 'पलाशी द्रुमागमाः' इत्यमरः। 'असिपत्रो भवेत्कोशाकारे च नरकान्तरे' इति विश्वः।

भावार्थः—सीता तदिच्छानुसारं तपोवने रमणीयप्रदेशदर्शनप्रबन्धं कुर्वन् प्रियः श्रीरामः मत्प्रियकार्यसम्पादने तत्परोऽस्तीति जानन्ती आसीत्। परन्तु कल्पद्रुमवत् मदिच्छापूरकः प्रियः साम्प्रतम् एतावान् प्रतिकूलो जातः—यथा कल्पवृक्षस्थाने असिपत्रवृक्षः—इति तया न ज्ञातमासीत्। (असिपत्र पर्वतीया 'रामवांस' इति कथयन्ति। अस्मिन् वृक्षे मूलादारभ्य हस्तद्वयदीर्घाणि निशितस्थूलकण्टकावृतानि पत्राणि भवन्तीति असिपत्रेति यथार्थमस्य नामास्ति।)

हिन्दी—लक्ष्मण के द्वारा रमणीय स्थानों को ले जायी गई सीता यह सोचकर कि 'मेरा प्रिय श्रीराम मेरे लिए प्रिय कार्य कर रहे हैं' आनन्दित होती थी। वह यह न जान सकी कि मेरे प्रिय मेरे लिए कल्पद्रुम न रहकर असिपत्र 'रामवांस' बन गये हैं॥ ४८॥

जुगूह तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन॥ ४९॥

सञ्जीविनी—जुगूहेति। पथि लक्ष्मणो यद् दुःखं तस्याः सीताया जुगूह प्रतिसंहृतवांस्तद्गुरु भावि भविष्यद् दुःखमत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेनाक्ष्णाऽस्यै सीताया आख्यातम्। स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः।

अन्वयः—पथि लक्ष्मणः यत् तस्याः जुगूह, तद् गुरु भावि दुःखं स्फुरता सव्येतरेण अत्यन्तलुप्तप्रियदर्शनेन अक्ष्णा अस्यै आख्यातम् ।

वाच्य०—पथि लक्ष्मणेन यत् तस्याः जुगूहे (कर्मवा०) तद् गुरु भावि दुःखम् अत्यन्तलुप्तप्रियदर्शनं स्फुरत् सव्येतरद् अक्षि अस्यै आख्यातवत् (कर्तृवा०) ।

चन्द्रिका—पथि वर्त्मनि, लक्ष्मणः सौमित्रिः, यद् दुःखं श्रीरामपरित्यागरूपं जुगूह प्रच्छादयामास, न प्रकाशितवान्, तद् तादृशम्, भावि भविष्यद्, उत्पत्स्यमानम् गुरु दुःसहम् भारशालि, दुःखं पीडा, 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । अत्यन्तम् एकान्तेन, सर्वथा, लुप्तं नष्टं, प्रियस्य दयितस्य श्रीरामस्य दर्शनं वीक्षणं यस्य तेन तथोक्तेन, स्फुरता संचलता, 'स्फुर स्फुल संचलने' इति धातोर्लटः शतृप्रत्ययान्तम् । सव्याद् वामाद्, इतरेण अन्येन, दक्षिणेनेत्यर्थः, अक्ष्णा लोचनेन अस्यै सीतायै, आख्यातं कथितम् ।

समासः—तस्मात् इतरत् सव्येतरत् (पं० त०), तेन सव्येतरेण । अत्यन्तं लुप्तम् अत्यन्तलुप्त, प्रियस्य दर्शनं प्रियदर्शनम्, अत्यन्तलुप्तं प्रियदर्शनं यस्य तत् (बहु०) अत्यन्तलुप्तप्रियदर्शनम्, तेन । स्फुरतीति स्फुरत् तेन स्फुरता ।

कोशः—'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः ।' 'पीडा बाधा व्यथा दुःखम्' 'वामं शरीरं सव्यं स्यात्' 'इतरस्त्वन्यनीचयोः' 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' 'दर्शनालोकनेक्षणम्' इत्यमरः ।

भावार्थः—लक्ष्मणः मार्गे सीतायै प्रियश्रीरामपरित्यागरूपं भावि दुःसहं दुःखं न प्रकटयामास, प्रच्छाद्यैव निहितवान्, परन्तु दक्षिणाक्षिस्फुरणं तद् दुःखं सीतायै प्रकथ्यामासेति भावः । दुःशकुनानि खलु आसन्नफलं सूचयन्ति ।

हिन्दी—मार्ग में लक्ष्मण ने जिस दुःख को सीताजी से छिपाया था, वह भारी भावी दुःख फड़कनेवाली एवं जिसे प्रिय श्रीराम का दर्शन सर्वथा दुर्लभ होगा ऐसी दाहिनी आँख से कहा गया अर्थात् दक्षिणाक्षिस्पन्दनरूपी अपशकुन ने सीताजी को भारी दुःख की सूचना दे दी ॥ ४९ ॥

सा दुर्निमित्तोपगताद्विषादात्सद्यः परिम्लानमुखारविन्दा ।
राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ ५० ॥

सञ्जीविनी—सेति । सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात् प्राप्ताद्विषादाद् दुःखात्सद्यः परिम्लानमुखारविन्दा सती क्लान्तमुखकमला सती सावरजस्य सानुजस्य राज्ञो रामस्य शिवं भूयादित्यबाह्यैः करणैरन्तःकरणैराशशंसे । शंसतेरपेक्षायामात्मनेपदमिष्यते । करणैरिति बहुवचनं क्रियावृत्त्यभिप्रायम् । पुनः पुनराशशंसेत्यर्थः ।

अन्वयः—सा दुर्निमित्तोपगतात् विषादात् सद्यः परिम्लानमुखारविन्दा 'सती' सावरजस्य राज्ञः शिवं भूयात् इति अबाह्यैः करणैः आशशंसे ।

वाच्य०—तया दुर्निमित्तोपगताद् विषादात् सद्यः परिम्लानमुखारविन्दया…… इति अबाह्यैः करणैः आशशंसे (कर्मवा०)।

चन्द्रिका—सा जानकी, दुर्निमित्तेन अपशकुनेन दक्षिणनयनस्पन्दरूपेण, उपगतात् उत्पन्नात् विषादात् खेदात्, सद्यः सपदि, तत्क्षणम्, परिम्लानं प्राप्ताऽवसादम्, शुष्कप्रायम्, मुखारविन्दं वदनकमलं यस्याः सा तथोक्ता 'सती भवन्ती' सावरजस्य सभ्रातृकस्य, राज्ञः नृपस्य श्रीरामस्य, शिवं मङ्गलम्, भूयात् भवतात्, इति एवं अबाह्यैः आभ्यन्तरैः, करणैः चित्तैः, मानसिकभावानां भूयस्त्वेन करणैरित्यत्र बहुवचनम्। आशशंसे आचकाङ्क्ष। इष्टदेवतां मनसा प्रार्थयामासेत्यर्थः।

समासः—दुर्निमित्तेन उपगतः दुर्निमित्तोपगतः, तस्मात्। मुखमरविन्दमिव (उपमानोत्तरकर्म०) मुखारविन्दम्, परिम्लानं मुखारविन्दं यस्याः सा (बहु०) परिम्लानमुखारविन्दा। बहिः भवानि बाह्यानि, तैः बाह्यैः। अवरजैः सह वर्तते इति (बहु०) सावरजः, तस्य सावरजस्य।

कोश—'निमित्तं हेतुलक्ष्मणोः' 'आननं लपनं मुखम्' 'सद्यः सपदि तत्क्षणे' 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्।' 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।' 'राजा राट् पार्थिवक्ष्माभृद्' 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्।' 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि।' इत्यमरः।

भावार्थः—दुर्निमित्तोत्पन्नदुःखेन दुःखिता म्लानवदना सीता भीतभीता अनुजैः साकं वर्तमानस्य श्रीरामस्य मङ्गलं भवतु इति मनसैव शंसितवती। तस्या जीवने प्रियतमः श्रीराम एव, अतः तस्य प्रथमं शुभं काङ्क्षितवती साध्वीवरेति भावः।

हिन्दी—दक्षिणनयन स्पन्दन रूप अपशकुन से तत्काल जिसका मुखारविन्द म्लान हो गया है ऐसी सीता 'भाइयों से सहित राजा श्रीरामचन्द्र का कल्याण हो' ऐसी आकांक्षा मन से करने लगी॥ ५०॥

गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन्।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात्॥ ५१॥

सञ्जीविनी—गुरोरिति। गुरोर्ज्येष्ठस्य नियोगात्साध्वीं वनिताम्, अत्याज्यामित्यर्थः। वनान्ते विहास्यंस्त्यक्ष्यन्सुमित्रातनयो लक्ष्मणः पुरस्तादग्रे स्थितया जह्नोर्दुहित्रा जाह्नव्योत्थितवीचिहस्तैरवार्यतेव। अकार्यं मा कुर्वित्यवार्यतेव। इत्युत्प्रेक्षा।

अन्वयः—गुरोः नियोगात् साध्वीं वनितां वनान्ते विहास्यन् सुमित्रातनयः पुरस्तात् स्थितया जह्नोः दुहित्रा उत्थितवीचिहस्तैः अवार्यत इव।

वाच्य०—गुरुर्नियोगात् साध्वीं वनितां वनान्ते विहास्यन्तं सुमित्रातनयं पुरस्तात् स्थिता जह्नोर्दुहिता उत्थितवीचिहस्तैः अवारयदिव (कर्तृ०)।

चन्द्रिका—गुरोः ज्येष्ठभ्रातुः, नियोगात् शासनात्, आदेशात्, साध्वीं पतिव्रताम्, वनितां नारीम्, वनान्ते अरण्याञ्चले, विहास्यन् मोक्ष्यन्, सुमित्रातनयः लक्ष्मणः, पुरस्ताद् अग्रतः स्थितया विद्यमानया, वहन्त्या, जह्नोः तन्नामकमहर्षेः, दुहित्रा पुत्र्या गङ्गया, उत्थितवीचय एव उद्गततरङ्गा एव हस्ताः पाणयः, तैः अवार्यत इव न्यषेध्यत नूनम्, एवं मा कार्षीः इत्यनेकतरङ्गहस्तैः गङ्गया लक्ष्मणो वारित इव इवात्रोत्प्रेक्षावाचकः अवस्तुनो वस्तुत्वेन सम्भावनं ह्युत्प्रेक्षा।

समासः—वनस्यान्तः वनान्तः, तस्मिन्। सुमित्रायाः तनयः (ष० त०) सुमित्रातनयः। विहास्यतीति विहास्यन्। वीचय एव हस्ताः (कर्मधा०) वीचिहस्ताः, उत्थिताश्च ते विचिहस्ताश्च (कर्म०) उत्थितवीचिहस्ताः, तैः।

कोशः—'गुरू गीष्पतिपित्राद्यौ' 'सती साध्वी पतिव्रता' 'वनिता महिला तथा' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु।' 'हस्तौ तु पाणिनक्षत्रे' इत्यमरः।

भावार्थः—यद्यपि इदं कृत्यं स्वेच्छाकृतं नास्ति लक्ष्मणस्य, तथापि ज्येष्ठादेशादपि सतीमबलां वनोदरे अग्रे परित्यक्तुं समागतं लक्ष्मणं तत्र पुरः प्रवहन्ती गङ्गा सहस्रशः समुत्थितैः तरङ्गरूपहस्तैः निषेधं कृतवतीव। यथा लोके हस्तसंकेतेन वारणं क्रियते तथा गङ्गा चकारेति भावः।

हिन्दी—बड़े भाई के आदेश से सती सीता को वन प्रान्त में आगे छोड़ने वाले लक्ष्मण को अग्रभाग में बहने वाली गङ्गा ने ऊपर उठती हुई लहर रूपी हाथों से मानो रोक रही थी ॥ ५१ ॥

रथात्स यन्त्रा निगृहीतवाहात्तां भ्रातृजायां पुलिनेऽवतार्य।
गङ्गां निषादाहृतनौविशेषस्ततार सन्धामिव सत्यसन्धः ॥ ५२ ॥

सञ्जीविनी—रथादिति। सत्यसन्धः सत्यप्रतिज्ञः स लक्ष्मणो यन्त्रा सारथिना निगृहीतवाहाद्रुद्धाश्वाद्रथाद् भ्रातृजायां पुलिनेऽवतार्यारोप्य निषादेन किरातेनाहृतनौविशेष आनीतदृढनौकः सन्। गङ्गां भागीरथीं सन्धां प्रतिज्ञामिव ततार। 'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः।

अन्वयः—सत्यसन्धः सः यन्त्रा निगृहीतवाहात् रथात् भ्रातृजाया तां पुलिने अवतार्य निषादाहृतनौविशेषः 'सन्' सन्धाम् इव गङ्गां ततार।

वाच्य०—सत्यसन्धेन तेन यन्त्रा निगृहीतवाहात् रथात् तां भ्रातृजायां पुलिनेऽवतार्य निषादाहृतनौविशेषेण सता सन्धा इव गङ्गा तेरे (कर्म०)।

चन्द्रिका—सत्यसन्धः तथ्यप्रतिज्ञः, सः लक्ष्मणः, यन्त्रा सूतेन सुमन्त्रेण, निगृहीतवाहात् निरुद्धघोटकात्, रथात् स्यन्दनात्, भ्रातृजायां प्रजावतीं, तां जानकीम्, पुलिने तीरे तोयोत्थितप्रदेशे, अवतार्य अवारोह्य, निषादेन धीवरेण, आहृतः आनीतः, नौविशेषः विशिष्टतरणिः 'स्त्रियां नौस्तरणिस्तरिः' यस्यैवम्भूतः 'सन्

भवन्' गङ्गां जाह्नवीम्, सन्धाम् 'सीतां वने परिहरिष्यामि' इति रामस्य पुरः कृतां प्रतिज्ञाम्, इव यथा, ततार तीर्णवान्। अत एव सहोक्तिरलंकारः, 'सहोक्तिः सहभावश्चेद् भासते जनरञ्जनः' इति तल्लक्षणम्। गङ्गाप्रतिज्ञयोः उपमानोपमेयविषया सहैव तरणस्य सहशब्दं विनैव वर्णनात्।

समासः—सत्या सन्धा यस्य सः सत्यसन्धः। निगृहीता वाहा यस्य सः निगृहीतवाहः, तस्मात् निगृहीतवाहात्। भ्रातुः जाया (ष० त०) भ्रातृजाया, ताम्। नावः विशेषः (ष० त०) नौविशेषः, आहृतः नौविशेषो यस्य सः (बहु०) आहृतनौविशेषः।

कोशः—'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः।' 'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति।' 'सन्धाप्रतिज्ञा मर्यादा' 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः।' 'शताङ्गः स्यन्दनो रथः' 'प्रजावती भ्रातृजाया' 'तोयोत्थितं तत् पुलिनम्' ('निषादः स्वरभेदेऽपि चाण्डाले धीवरान्तरे।' इति मेदिनी।) 'स्त्रियां नौस्तरणिस्तरिः' 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा।' इत्यमरः।

भावार्थः—सत्यवादी लक्ष्मणः गङ्गातीरे रथं सुमन्त्रेण निरोध्य सीतां रथादवतार्य निषाद नीतायां नौकायां सीतासुमन्त्राभ्यां सह गङ्गानद्याः परं पारं गतवान्। परतीरे सीतायाः परित्याज्यत्वेन श्रीरामस्य पुरः "ओम् भवदुक्तरीत्या प्रजावतीं गङ्गापरतीरे वाल्मीकितपोवने परित्यक्ष्यामि" इति कृता लक्ष्मणस्य प्रतिज्ञाऽपि पूर्णा तीर्णा जातेति भावः।

हिन्दी—सत्य प्रतिज्ञावाले लक्ष्मण ने सारथि सुमन्त्र द्वारा जिसके घोड़े रोक दिये गये हैं—ऐसे रथ से तीर में उतार कर मल्लाह से लायी गयी विशिष्ट नौका से प्रतिज्ञा की तरह गंगा को पार किया। अर्थात् गंगा को पार करने से भाई श्रीराम के सामने की गई "आप के आदेशानुसार सीताजी को गंगाजी के उस पार छोड़ दूँगा" यह लक्ष्मणकी प्रतिज्ञा भी पूरी हो गयी ॥ ५२ ॥

अथ व्यवस्थापितवाक्कथञ्चित्सौमित्रिरन्तर्गतबाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५३ ॥

सञ्जीविनी—अथेति। अथ कथञ्चिद् व्यवस्थापिता प्रकृतिमापादिता वा गयेन सः अन्तर्गतबाष्पः कण्ठो यस्य सः, कण्ठस्तम्भिताश्रुरित्यर्थः। सौमित्रिर्महीपतेः शासनम्। मेघ उत्पाते भवमौत्पातिकमश्मवर्षं शिलावर्षमिव उज्जगारोद्गीर्णवान्। दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम्।

अन्वयः—अथ कथञ्चिद् व्यवस्थापितवाक् अन्तर्गतबाष्पकण्ठः सौमित्रिः महीपतेः शासनं मेघ औत्पातिकम् अश्मवर्षम् इव उज्जगार।

वाच्य०—अथ कथञ्चिद् व्यवस्थापितवाचा अन्तर्गतबाष्पकण्ठेन सौमित्रिणा मेघेन औत्पातिकम् अश्मवर्षमिव महीपतेः शासनम् उज्जग्रे (कर्म०)।

चन्द्रिका—अथ गङ्गापारगमनानन्तरम्, कथञ्चित् महता कष्टेन, व्यवस्थापिता स्थिरीकृता वाक् वाणी येन स तथोक्तः, अन्तर्गतम् अभ्यन्तरस्थितम्, बाष्पम् अश्रु यस्य तादृशः कण्ठो गलो यस्येति (बहुव्रीहिगर्भबहुव्रीहिः)। अश्रुकण्ठः सौमित्रिः लक्ष्मणः, महीपतेः पृथ्वीपतेः रामस्य, शासनं आज्ञाम्। भ्रातृपदं विहाय महीपतिपदम् राजाज्ञाया अनुल्लङ्घनीयतया इदं वदामि अनुतिष्ठामि चेति द्योतनाय। मेघः घनः, औत्पातिकम् अनिष्टसूचकम्, अश्मवर्षमिव वर्षोपलं यथा, उज्जगार उद्ववाम, प्रकाशयामास, उक्तवानिति यावत्।

समासः—व्यवस्थापिता वाक् येन स (बहु०) व्यवस्थापितवाक्। अन्तर्गतं बाष्पं यस्य सः अन्तर्गतबाष्पः, अन्तर्गतबाष्पः कण्ठः यस्य सः (बहुव्रीहिगर्भबहु०) अन्तर्गतबाष्पकण्ठः। सुमित्राया अपत्यं पुमान् सौमित्रिः। मह्याः पतिः महीपतिः, तस्य महीपतेः। उत्पातेः भवम् औत्पातिकम्, तत्।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' 'गीर्वाग् वाणी सरस्वती' 'बाष्पमूष्णाश्रु' 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि।' 'अभ्रं मेघो वारिवाहः' 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्।' 'वृष्टिर्वर्षम्' 'निदेशः शासनं च सः। शिष्टिश्चाज्ञा च' इत्यमरः।

भावार्थः—विषादातिशयाद् बहिरागन्तुमनभिलषन्तीं लडखड़ायमानां वाणीं महता कष्टेन स्थिरीकृत्य लक्ष्मणः अश्रुपूर्णकण्ठः सन् राज्ञः शासनं सीतां श्रावयामास, तत् श्रावणं मेघस्य औत्पातिकं करक (ओला) वर्षणमिव भयङ्करमासीदिति भावः।

हिन्दी—गंगा पार जाने पर बड़े ही कष्ट से वाणी को स्थिर करके अश्रुपूर्ण कण्ठ से लक्ष्मण ने राजा का आदेश उस तरह उगल दिया जैसे बादल अनिष्टकारी ओले बरसा देता है ॥ ५३ ॥

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५४ ॥

सञ्जीविनी—तत इति। ततः अभिषङ्गः भर्तृपरित्यागरूपः पराभवः। 'अभिषङ्गः पराभवे' इत्यमरः। स एवानिलस्तेन विप्रविद्धा अभिहता। प्रभ्रश्यमानानि पतन्त्याभरणान्येव प्रसूनानि यस्याः सा सीता लतेव। सहसा स्वमूर्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम, भूमौ पपातेत्यर्थः। स्त्रीणामापदि मातैव शरणमिति भावः।

अन्वयः—ततः अभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना सीतालता इव सहसा स्वमूर्तिलाभप्रकृतिं धरित्रीं जगाम।

वाच्य०—ततः अभिषङ्गानिलविप्रविद्धया प्रभ्रश्यमानाभरणप्रसूनया सीतया लतयेव सहसा स्वमूर्तिलाभप्रकृतिः धरित्री जग्मे।

चन्द्रिका—ततः सदाकर्णनानन्तरम्, अभिषङ्गानिलेन अकीर्तिपराभवरूप-पवनेन विप्रविद्धा विशेषेण क्षता, प्रभ्रश्यमानानि स्खलन्ति तत्तदवयवेभ्यः, आभरणानि विभूषणानि एव प्रसूनानि यस्याः सा सीता वैदेही, लता इव व्रततिर्यथा, सहसा सद्यः स्वमूर्तिलाभनिजशरीरप्राप्तेः प्रकृतिं कारणभूताम्, धरित्रीं पृथिवीम्, जगाम ययौ। धरित्र्यां समवापतदित्यर्थः। लतायामुपमानभूतायां सीताया विशेषणानि सुयोजानि। अभिषङ्गानि जडोत्थापकमारुतेन विप्रविद्धा आहता, प्रभ्रश्यमानाभरणानीव पतदलङ्कारसदृशानि प्रसूनानि यस्या इति योज्यम्। लताया अपि निजशरीरप्राप्तिकारणं पृथिव्येव सीताया इव।

समासः—अभिषङ्ग एव अनिलः (कर्म०) अभिषङ्गानिलः, अभिषङ्गानिलेन विप्रविद्धा (तृ० त०) अभिषङ्गानिलविप्रविद्धा। आभरणानि प्रसूनानीव (कर्म०) आभरणप्रसूनानि, प्रभ्रश्यमानानि आभरणप्रसूनानि यस्याः सा (बहु०) प्रभ्रश्यमानाभरणप्रसूना। स्वस्य मूर्तिः स्वमूर्तिः, स्वमूर्तेः लाभः स्वमूर्तिलाभः, स्वमूर्तिलाभस्य प्रकृतिः स्वमूर्तिलाभप्रकृतिः (ष० त०) ताम्।

कोशः—'अभिषङ्गः पराभवे' 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।' 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम्।' 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' 'स्त्रियां मूर्तिस्तनुस्तनूः' 'वल्ली तु व्रततिर्लता' 'अतर्किते तु सहसा' इत्यमरः।

भावार्थः—प्रजाजनक्रियमाणया निन्दया खिन्नः प्रियः श्रीरामः स्वपरित्यागादेशं दत्तवानिति श्रुत्वैव प्रकम्पनाहतलतेव सीता विसंज्ञा विगलदाभरणा स्वमातुः पृथिव्या अङ्कमाश्रितवती दुःखमूर्छिता पृथिव्यामपतदिति भावः।

हिन्दी—निजपरित्याग रूप आज्ञा सुनकर, वेगवान् वायुसे उखाड़ी गई पुष्प वाली लता के समान, आक्षेपसे आहत तथा गिरते हुए आभरणों वाली सीता एकाएक अपनी माता धरती पर गिर पड़ी॥ ५४॥

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्यवृत्तः।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत्॥ ५५॥

सञ्जीविनी—इक्ष्वाक्विति। इक्ष्वाकुवंशप्रभवः, महाकुलप्रसूतिरित्यर्थः। आर्यवृत्तः साधुचरितः पतिर्भर्ता त्वामकस्मादकारणात्कथं त्यजेत्, असम्भावितमित्यर्थः। इति संशयितेव सन्दिहानेव तावत्, त्यागहेतुज्ञानावधेः प्रागित्यर्थः। जननी क्षितिस्तस्यै सीतायै प्रवेशम्, आत्मनीति शेषः। न ददौ।

अन्वयः—इक्ष्वाकुवंशप्रभवः आर्यवृत्तः पतिः त्वाम् अकस्मात् कथं त्यजेत् इति संशयिता इव जननी क्षितिः तावत् तस्यै प्रवेशं न ददौ।

वाच्य०—इक्ष्वाकुवंशप्रभवेण आर्यवृत्तेन पत्या त्वमकस्मात् कथं त्यज्येथाः—इति संशयितयेव तावज्जनन्या क्षित्या तस्यै प्रवेशो न ददे (कर्मवा०)।

चन्द्रिका—इक्ष्वाकुवंशः धर्मात्मेक्ष्वाकुकुलं प्रभवः कारणं यस्यैवम्भूतः, आर्यवृत्तः सदाचरणः, धार्मिक इत्यर्थः, सर्वमिदं परित्यागाभावे कारणभूतम् पतिः भर्ता श्रीरामः, त्वां भवतीम्, निर्दोषत्व-पत्येकचित्तत्वाद्यर्थान्तरसंक्रमितवाच्यध्वनिरत्र। अकस्मात् सहसा, हेतुं विनैव कथं केन प्रकारेण, त्यजेत् परिहरेत् इति इत्थं, संशयितेव जातसन्देहेव, तावत् तदवधि परित्यागकारणावगमपर्यन्तम्, तस्यै वैदेह्यै, प्रवेशं तिरोभावावसरम् न ददौ न दत्तवती, न वितार। अत्र हेतूत्प्रेक्षालंकारः, संशयादिवेति हेतोरुत्प्रेक्षणात्।

समासः—इक्ष्वाकोः वंशः इक्ष्वाकुवंशः, इक्ष्वाकुवंशः प्रभवः यस्य सः इक्ष्वाकुवंशप्रभवः ( बहु० )। आर्यं वृत्तं यस्य स आर्यवृत्तः। संशयः अस्याः सञ्जात इति संशयिता।

कोशः—'वंशोऽन्ववायः सन्तानः' 'स्याज्जन्महेतुः प्रभवः' 'धवः प्रियः पतिर्भर्ता' 'महाकुलकुलीनार्य' 'वृत्तं पद्ये चरित्रे त्रिषु' 'क्षोणिज्या काश्यपी क्षितिः' 'इति हेतुप्रकरणप्रकाशादि समाप्तिषु।' 'जनयित्री प्रसूर्माता जननी' 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।' इत्यमरः।

भावार्थः—धर्मात्मकुलजातः स्वयम् आदर्शचरित्रः श्रीरामः निष्कारणं कथं साध्वीं धर्मपत्नीं त्वां सन्त्यजेत्? इति संशयं कुर्वाणेव पृथिवी तस्यै सीतायै तिरोभावाय स्थानं न प्रादादिति भावः।

हिन्दी—'इक्ष्वाकुवंश में प्रसूत स्वयं श्रेष्ठ आचरणवाला तुम्हारा पति तुम्हें बिना कारण ही कैसे छोड़ देगा?' इस प्रकार मानो सन्देह करती हुई पृथिवी ने सीता को अपने में प्रवेश नहीं किया॥ ५५॥

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः।
तस्याः सुमित्राऽऽत्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः॥ ५६॥

सञ्जीविनी—सेति। लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद। प्रत्यागतासुर्लब्धसंज्ञा सत्यन्तः समतप्यत, दुःखेनादह्यतेत्यर्थः। तपेः कर्मणि लङ्। कर्मकर्तरीति केचित्। तन्न। "तपस्तपः कर्मकस्यैव" इति यङ्नियमात्। तस्याः सीतायाः सुमित्राऽऽत्मजयत्नलब्धः प्रबोधो मोहात्कष्टतरोऽतिदुःखदोऽभूत्। दुःखवेदनासम्भवादिति भावः।

अन्वयः—लुप्तसंज्ञा सा दुःखं न विवेद। प्रत्यागतासुः अन्तः समतप्यत, तस्याः सुमित्रात्मजयत्नलब्धः प्रबोधः मोहात् कष्टतरः अभूत्।

वाच्य०—लुप्तसंज्ञया तया दुःखं न विविदे ( कर्म० ), प्रत्यागतास्वा अन्तः समतप्यत ( भाव० ) तस्याः सुमित्रात्मजयत्नलब्धेन प्रबोधेन मोहात् कष्टतरेण अभावि ( भाव० )।

चन्द्रिका—लुप्तसंज्ञा विगतचेतना, सा सीता, दुःखं पीडाम्, न विवेद न ज्ञातवती। प्रत्यागतासुः प्राप्तप्राणा, परावृत्तचेतना, उद्बुद्धा, अन्तः हृदये,

समतप्यत सन्तप्ताऽभवत्, हृदयं संज्वलितुमारेभे। तस्याः सीतायाः सुमित्रात्मजस्य लक्ष्मणस्य, यत्नेन अम्भःप्रोक्षणवीजनादिपरिश्रमेण, लब्धः प्राप्तः, प्रबोधः उद्बोधः, जाग्रद्दशा, मोहात् मूर्छातः, विसंज्ञदशायाः कष्टतरः अधिकक्लेशकारी, अभूत् अजायत, संवृत्तः।

समासः—लुप्ता संज्ञा यस्याः सा (बहु०) लुप्तसंज्ञा। प्रत्यागताः असवः यस्याः सा (बहु०) प्रत्यागतासुः। सुमित्रायाः आत्मजः (प० त०) सुमित्रात्मजः, सुमित्रात्मजस्य यत्नः सुमित्रात्मजयत्नः, सुमित्रात्मजयत्नेन लब्धः (तृ०त०) सुमित्रात्मजयत्नलब्धः।

कोशः—'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना।' 'पीडा बाधा व्यथा दुःखम्' 'पुंसि भूम्न्यसवः प्राणाः' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'मूर्छा तु कश्मलं मोहः' 'स्यात्कष्टं कृच्छ्रमाभीलं' इत्यमराः।

भावार्थः—सीता मूर्छिता सती दुःखं न ज्ञातवती, प्रत्यागतसंज्ञा अन्तःसन्तापमन्वभूत्। लक्ष्मणेन नयनयोः जलबिन्दुक्षेपणवीजनादिना प्राप्ता चेतनावस्था मूर्छितावस्थातोऽपि दुःसहकष्टदा जाता।

हिन्दी—मूर्छितदशा में सीता दुःख को न जानती थी, चेतना लौटने पर हृदय जलने लगा। लक्ष्मण के आँखों में जल सेचन, पँखे से हवा आदि करने से प्राप्त चेतनावस्था मूर्छासे अधिक कष्टप्रद हुई ॥ ५६ ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५७ ॥

सञ्जीविनी—नेति। आर्या साध्वी सा सीता वृजिनादृत एनसो विनाऽपि। 'कलुषं वृजिनैनोऽघम्' इत्यमरः। "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इत्यनेन पञ्चमी। निराकरिष्णोर्निरासकस्य। "अलंकृञ्निराकृञ्" इत्यनेनेष्णुच्प्रत्ययः। भर्तुरवर्णमपवादं न चावदन्नैवावादीत्। किन्तु स्थिरदुःखभाजमत एव दुष्कृतिनमात्मानं पुनः पुनर्निनिन्द।

अन्वयः—आर्या वृजिनाद् ऋते अपि निराकरिष्णोः भर्तुः अवर्णं च न अवदत् स्थिरदुःखभाजं दुष्कृतिनम् आत्मानमेव पुनः पुनः निनिन्द।

वाच्य०—आर्यया वृजिनाद् ऋतेऽपि निराकरिष्णोः भर्तुः अवर्णः न चावादि (कर्म०) स्थिरदुःखभाग् दुष्कृती आत्मैव पुनः पुनः निनिन्दे (कर्म०)।

चन्द्रिका—आर्या सती सीता, वृजिनात् पापाद्, ऋतेऽपि विनाऽपि, निराकरिष्णोः परित्यागकारिणः, भर्तुः प्रियस्य, अवर्णम् आक्षेपम् न चावदत्, नाप्यकथयत्। स्थिरदुःखं निरन्तरपीडां, भजते प्राप्नोतीति तादृशं दुष्कृतिनं पापकारिणम् आत्मानमेव स्वमेव पुनः पुनः वारं वारं, निनिन्द गर्हयामास।

समासः—स्थिरञ्च तद् दुःखञ्च स्थिरदुःखम्, स्थिरदुःखं भजते इति स्थिरदुःखभाग्, तं स्थिरदुःखभाजम्। दुष्कृतम् अस्यास्तीति दुष्कृती, तं दुष्कृतिनम्।

कोशः—'अवर्णाक्षेपनिर्वादपरीवादापवादवत्।' 'निराकरिष्णुः क्षिप्नुः स्याद्' 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्। कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्।' 'पृथग् विनान्तरेणर्ते हिरुङ् नाना च वर्जने।' 'मुहुः पुनः पुनः शश्वत्' इत्यमरः।

भावार्थः—साध्वी सीता दोषं विनैव परित्यागकारिणं पतिं श्रीरामं नैव निन्दितवती, अपि तु निरन्तरदुःखभोगिनमत एव कृतपापं स्वात्मानमेव मुहुर्मुहुर्निन्दितवतीति भावः।

हिन्दी—साध्वी सीता ने बिना दोष के ही परित्याग करने वाले पति की निन्दा नहीं की, अपितु सन्तत दुःख झेलने वाले अत एव पापी स्वात्मा की ही बार-बार निन्दा की॥ ५७॥

आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः॥ ५८॥

सञ्जीविनी—आश्वास्येति। रामावरजो लक्ष्मणः सतीं साध्वीं तामाश्वास्य आख्यात उपदिष्टो वाल्मीकेर्निकेतस्याश्रमस्य मार्गो येन स तथोक्तः सन्। निघ्नस्य पराधीनस्य। 'अधीनो निघ्न आयत्तः' इत्यमरः। मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तद्धे देवि! क्षमस्व इति नम्रः प्रणतो बभूव।

अन्वयः—रामावरजः, सतीं ताम् आश्वास्य आख्यातवाल्मीकिनिकेतमार्गः 'सन्' देवि! निघ्नस्य मे भर्तृनिदेशरौक्ष्यं क्षमस्व इति नम्रः बभूव।

वाच्य०—रामावरजेन सतीं ताम् आश्वास्य आख्यातवाल्मीकिमार्गेण 'सता' देवि! निघ्नस्य मे भर्तृनिदेशरौक्ष्यं 'त्वया' क्षम्यताम् (कर्म०) इति नम्रेण बभूवे (भाव०)।

चन्द्रिका—रामावरजः सौमित्रिः, सतीं पतिव्रताम्, तां जानकीम्, आश्वास्य समाधाय तस्या आश्वासनं कृत्वेति यावत्। आख्यातः कथितः, वाल्मीकिनिकेतस्य प्राचेतसाश्रमस्य, मार्गः वर्त्म येन स एवम्भूतः 'सन् भवन्' निघ्नस्य अधीनस्य ज्येष्ठभ्रात्राज्ञावशंवदस्य, मे मम, भर्तुः स्वामिनः श्रीरामस्य, निदेशेन शासनेन यद् रौक्ष्यं कार्कश्यम्, निःस्नेहभावम् 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' इत्यमरः। क्षमस्व तितिक्षस्व, इति एवम्, नम्रः कृतप्रणामः बभूव अभूत्।

समासः—रामस्य (अवरं जातः) अवरजः (ष० त०) रामावरजः, वाल्मीकेः निकेतः वाल्मीकिनिकेतः, वाल्मीकिनिकेतस्य मार्गः वाल्मीकिनिकेतमार्गः (ष० त०) आख्यातः वाल्मीकिनिकेतमार्गः येन सः आख्यातवाल्मीकिनिकेत-

मार्गः ( बहु० )। भर्तुः निदेशः भर्तृनिदेशः ( ष० त० ), भर्तृनिदेशेन रौक्ष्यं ( रूक्षस्य भावः ) भर्तृनिदेशरौक्ष्यम्, तत्।

कोशः—'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।' 'सती साध्वी पतिव्रता' प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः। वाल्मीकिः' 'गृहं गेहोदवसिते वेश्म सद्म निकेतनम्।' 'अयनं वर्त्ममार्गध्वपन्थानः' 'अधीनो निघ्न आयत्तः' 'निदेशः शासनं च सः' 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' 'देवी कृताभिषेकायाम्' इत्यमरः।

भावार्थः—लक्ष्मणः पतिव्रतां सीतां समाश्वास्य सान्त्ववचनैः महर्षिवाल्मीकेः आश्रममार्गं तस्यै दर्शयित्वा 'ज्येष्ठपराधीनस्य मम निष्ठुरमिमं व्यवहारं क्षमस्व' इति निवेदयन् प्रणाममकरोत् इति भावः।

हिन्दी—लक्ष्मण ने सीताजी को आश्वासन देकर वाल्मीकि के आश्रम जाने वाला मार्ग दिखा कर "हे देवि! पराधीन मेरे रूखे व्यवहार को, जो कि स्वामी श्रीराम के आदेश से किया है, उसे क्षमा करें" ऐसा कह कर प्रणाम किया ॥ ५८ ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीताऽस्मि ते सौम्य चिराय जीव।
विडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ५९ ॥

सञ्जीविनी—सीतेति। सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद। किमिति। हे सौम्य साधो! ते प्रीताऽस्मि चिराय चिरं जीव। यद्यस्मात्। विडौजसेन्द्रेण विष्णुरुपेन्द्र इव अग्रजेन ज्येष्ठेन भ्रात्रा त्वमित्थं परवान्परतन्त्रोऽसि।

अन्वयः–सीता तम् उत्थाप्य वाक्यं जगाद हे सौम्य! ते प्रीता अस्मि, चिराय जीव, यत् विडौजसा विष्णुरिव अग्रजेन भ्राता त्वम् इत्थं परवान् असि।

वाच्य०–सीतया तमुत्थाप्य वाक्यं जगदे (कर्म०) हे सौम्य! ते मया प्रीतया 'भूयते' (भाव०) 'त्वया' चिराय जीव्यताम् ( भाव० ), यत् विडौजसा विष्णुनेव अग्रजेन भ्राता 'त्वया' इत्थं परवता 'भूयते' (भाव०)।

चन्द्रिका—सीता वैदेही, तं लक्ष्मणम्, उत्थाप्य प्रणामार्थं भूमौ निपतितं सवात्सल्यं समुद्धृत्य, वाक्यं वक्ष्यमाणवचनम्, जगाद उवाच, हे सौम्य! हे भद्र! ते तुभ्यम्, प्रीता प्रसन्ना, अस्मि भवामि, अथवा अहमर्थे अस्मीत्यव्ययम्। चिराय चिरकालम्, जीव प्राणिहि, दीर्घायुर्भूया इत्याशीर्वादः। यत् यतः, विडौजसा शक्रेण, विष्णुः इन्द्रावरजः, वामनः, कश्यपपुत्रत्वादुभयोर्भ्रातृभावः, इव यथा, अग्रजेन ज्येष्ठभ्रात्रा श्रीरामेण त्वम् इत्थम् एवं रीत्या कर्तव्याकर्तव्यविवेचनेऽपीति यावत्, परवान् पराधीनः ज्येष्ठायत्त इत्यर्थः असि भवसि।

समासः—वेवेष्टीति विड्, विड् ओजः यस्य सः विडौजाः, तेन विडौजसा। अग्रे जातः अग्रजः, तेन। परः अस्य अस्तीति परवान्।

कोशः—'तिङ्सुबन्तचयो वाक्यम्' 'हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः।' 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः।' 'इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः।' 'विष्णुर्नारायणः कृष्णः' 'पूर्वजस्त्वग्रियोऽग्रजः' 'परतन्त्रः पराधीनः परवान् नाथवानपि' इत्यमरः।

भावार्थः—भूमौ प्रणतं लक्ष्मणमुत्थाप्य सीता प्राह हे वत्स! त्वं दीर्घायुः भूयाः, त्वयि अहं प्रसन्नाऽस्मि। उपेन्द्रस्य इन्द्रेणेव तव श्रीरामेण पारतन्त्र्यं साधु शोभते। एवमेव अनुयायिना स्वामिनोऽनुसरणं कर्तव्यम् इति भावः।

हिन्दी—प्रणाम के लिए भूमि में पड़े लक्ष्मण को उठाकर सीता ने कहा—हे सौम्य, तू चिरायु हो जाओ। तुम्हारे लिए मैं प्रसन्न हूँ। जैसे ज्येष्ठभ्राता इन्द्र से वामन भगवान् पराधीन हैं ऐसे ही तुम अपने ज्येष्ठभ्राता श्रीराम से परतन्त्र हो। अर्थात् छोटे भाई का आदर्श है ॥ ५९ ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ६० ॥

सञ्जीविनी—श्वश्रूजनमिति। सर्वं श्वश्रूजनमनुक्रमेण प्रापितमत्प्रणामः सन्, मत्प्रणाममुक्त्वेत्यर्थः। विज्ञापय। किमिति। निषिच्यत इति निषेकः। मयि वर्तमानं सूनोस्त्वत्पुत्रस्य प्रजानिषेकं गर्भं चेतसाऽनुध्यायत शिवमस्त्विति चिन्तयतेति।

अन्वयः—सर्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्रणामः 'त्वं' विज्ञापय—मयि वर्तमानं सूनोः प्रजानिषेकं चेतसा अनुध्यायत—इति।

वाच्य०—सर्वः श्वश्रूजनः अनुक्रमेण प्रापितमत्प्रणामेन 'त्वया' विज्ञाप्यताम् मयि वर्तमानः सूनोः प्रजानिषेकः चेतसा 'युष्माभिः' अनुध्यायताम् इति (कर्म०)।

चन्द्रिका—सर्वं समस्तम्, श्वश्रूजनं भर्तुर्मातृवर्गम्, अनुक्रमेण ज्येष्ठपर्यायेण, 'परिपाटी अनुक्रमः। पर्यायः' इत्यमरः। प्रापितः उपहृतः मत्प्रणामः मत्कर्तृकप्रणिपातः येन स तथोक्तः 'त्वं' विज्ञापय विनिवेदय यत् मयि वर्तमानम् अवस्थितम्, सूनोः युष्मत्पुत्रस्य, प्रजानिषेकं सन्तानात्मकं क्षरितम्, गर्भमित्यर्थः। चेतसा मनसा, अनुध्यायत स्वस्ति स्यादिति निरन्तरं चिन्तयत।

समासः—श्वश्रूरिति जनः श्वश्रूजनः (कर्म०)। मम प्रणामः (ष० त०) मत्प्रणामः, प्रापितः मत्प्रणामः येन सः प्रापितमत्प्रणामः (बहु०)। निषिच्यते इति निषेकः, प्रजाया निषेकः (ष० त०) प्रजानिषेकः, तम्।

कोशः—'पतिपत्न्योः प्रसूः श्वश्रूः श्वसुरस्तु पिता तयोः।' 'सर्वमखिलम्', 'आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः। पर्यायः' 'प्रजा स्यात्सन्ततौ जने' 'आत्मजस्तनयः सूनुः' 'चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः।' इत्यमरः।

भावार्थः—सर्वाभ्यः श्वश्रूभ्यः ज्येष्ठानुक्रमेण मदीयान् प्रणमान् उपनीय, पश्चादेवं विज्ञापनीयं यत् युष्मत्तनयेन श्रीरामेण मय्याहिताय गर्भाय शिवं स्यात्

इति मनसा निरन्तरं चिन्तयत। अशरणाया अरण्ये सीदन्त्या मद्गतो गर्भः श्रीमतीनामाशिषैव कुशली भवेत्, नान्यथेति विज्ञापनहृदयमिति भावः।

हिन्दी—सभी सासुओं से ज्येष्ठानुक्रम ( बड़ी के बाद उससे छोटी से ) मेरे प्रणाम पहुँचा कर निवेदन करना कि आपके पुत्र द्वारा मुझमें निहित गर्भ के कल्याण के लिए हृदय से निरन्तर चिन्तन ( आशीर्वाद ) करें ॥ ६० ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम्।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ ६१ ॥

सञ्जीविनी—वाच्य इति। स राजा त्वया मद्वचनान्मद्वचनमिति कृत्वा। ल्यब्लोपे पञ्चमी। वाच्यो वक्तव्यः। किमित्यत आह—'वह्नौ' इत्यादिभिः सप्तभिः श्लोकैः। अक्ष्णोः समीपे समक्षम्। विभक्त्यर्थेऽव्ययीभावः, सामीप्यार्थे वा। "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच्प्रत्ययः। समक्षमग्रे वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्याऽपवादस्य श्रवणाद्धेतोरहासीरत्याक्षीरिति यत्तच्छ्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम्? किन्त्वसदृशमित्यर्थः। यद्वा श्रुतस्य श्रवणस्य चेति योजना। कामचार्यसीति भावः।

अन्वयः—स राजा त्वया मद्वचनात् वाच्यः समक्षं वह्नौ विशुद्धाम् अपि मां लोकवादश्रवणात् अहासीः यद् तत् श्रुतस्य कुलस्य 'च' सदृशं किम् 'अस्ति'?

वाच्य०—त्वं मद्वचनात् तं राजानं वदेः ( कर्तृ० ) समक्षं वह्नौ विशुद्धाऽपि अहं लोकवादश्रवणात् यद् अजहिषि ( कर्म० ) तन श्रुतस्य कुलस्य सदृशेन 'भूयते' किम् ( भाव० )?

चन्द्रिका—सः प्रसिद्धः मद्बुद्धिस्थो वा राजा श्रीरामः, त्वया आयुष्मता, मद्वचनात् मदुक्तमिति विधाय, 'प्रासादादीक्षते' इतिवत् पञ्चमी वाच्यः वक्तव्यः गदितव्यः। वक्तव्यमग्रिमवह्नावित्यारभ्य श्लोकसप्तकेन। समक्षम् अक्षिसमीपे, वह्नौ पावके, विशुद्धामपि पवित्रामपि पावकोऽपि मां साध्वीं स्प्रष्टुमप्रभवन् मम पावित्र्यं प्रकटितवानासीत् लङ्काकाण्डान्ते। मां मा, लोकवादस्य जनप्रवादस्य, 'जनानने कः करमर्पयिष्यति?' इति। दुर्बलः स लोकवाद इत्यर्थः। श्रवणात् आकर्णनाद्, अहासीः पर्यहार्षीः, इति यत् तत् श्रुतस्य अधीतशास्त्रस्य 'श्रुतं शास्त्रावधृतयोः' इत्यमरः, कुलस्य इक्ष्वाकुवंशस्य। चं विनापि समुच्चयः 'गौरश्वः पुरुषो हस्ती' त्यादिभाष्यात्। सदृशं किम् अनुगुणमपि?

समासः—मम वचनं मद्वचनम्, तस्मात्। अक्ष्णोः समीपे समक्षम् (अव्ययी०), लोकस्य वादः लोकवादः, लोकवादस्य श्रवणं लोकवादश्रवणम् तस्माद्।

कोशः—'राजा राट् पार्थिव–' 'भाषितं वचनं वचः' 'अग्निर्वैश्वानरो वह्निः' 'लोकस्तु भुवने जने' 'श्रुतं शास्त्रावधृतयोः' 'सदृक्षः सदृशः सदृक्' 'सन्ततिर्गोत्र-जननकुलानि' इत्यमराः।

भावार्थः—तं राजानं ( इदानीं स केवलं 'राजा' न तु 'आर्यपुत्रः' ) मदुक्तमिति इदं श्रावय यत् पूर्वम् त्वदक्षिसम्मुखे अग्नौ परिशोधितामपि मां जनापवादश्रवणात् यत् पर्यत्यजः तत् त्वदधीतशास्त्रस्य विख्यातस्य त्वत्कुलस्य च अनुरूपमस्ति किम् ? त्वदधीतशास्त्रे निर्दोषपत्नीपरित्यागः क्वापि विहितः ? प्रसिद्धे त्वत्कुलेऽपि पूर्वं कोऽपि राजा धर्मपत्नीपरित्यागमकरोद् वा ?

हिन्दी—मेरी ओर से उस राजा से कहना कि आँखों के सामने अग्नि में 'यह शुद्धा है' ऐसा सिद्ध होने पर भी मुझको तुमने केवल लोकापवाद सुनकर जो त्याग दिया है यह तुम्हारे अधीत शास्त्र व कुल के अनुरूप है क्या ? ॥६१॥

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ६२ ॥

सञ्जीविनी—कल्याणेति । अथवा कल्याणबुद्धेः सुधियस्तव कर्तुः मयि विषयेऽयं त्यागो न कामचार इच्छया करणं न शङ्कनीयः, कामचारशङ्काऽपि न क्रियत इत्यर्थः । किन्तु ममैवं जन्मान्तरपातकानामप्रसह्यो विपच्यत इति विपाकः फलं स एव विस्फूर्जथुरशनिनिर्घोषः । 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः ।

अन्वयः—अथवा कल्याणबुद्धेः तव मयि अयं कामचारः न शङ्कनीयः । ममैव जन्मान्तरपातकानाम् अप्रसह्यः विपाकविस्फूर्जथुः 'अस्ति' ।

वाच्य०—अथवा कल्याणबुद्धेः तव मयि अनेन कामचारेण शङ्कनीयेन न 'भूयते' ममैव जन्मान्तरपातकानाम् अप्रसह्येन विपाकविस्फूर्जथुना: 'भूयते' ( भाव० ) ।

चन्द्रिका—अथवा यद्वा, पूर्वोक्तोपालम्भप्रतिकूलतया विकल्पः । कल्याणबुद्धेः भद्रमतेः, तव ते, मयि मद्विषये, अयं परित्यागरूप एषः, कामचारः स्वेच्छाचारः न शङ्कनीयः न सम्भावनीयः, नैव तर्कणीयः । तर्हि किमीदमित्याह—ममैव नाऽन्यस्य कस्यापि 'स्वकर्मफलभुक् पुमान्' इति श्रवणात् सुखदुःखे स्वकृतस्यैव फले काले समुपस्थिते भवतः । जन्मान्तरस्य अन्यजन्मनः पातकानां दुरितानाम्, निषिद्धकर्मणाम्, अप्रसह्यः अक्षम्यः दुःसहः, विपाकस्य परिपाकस्य, फलस्य विस्फूर्जथुः वज्रनिर्घोषः वज्रपातः 'अस्ति' इति शेषः ।

समासः—कल्याणी बुद्धिः यस्य सः कल्याणबुद्धिः, तस्य कल्याणबुद्धेः । कामेन चारः कामचारः । शङ्कितुं योग्यः शङ्कनीयः । ( अन्यानि जन्मानि जन्मान्तराणि ) अन्यद् जन्म जन्मान्तरम्, जन्मान्तरस्य पातकानि जन्मान्तरपातकानि, तेषां जन्मान्तरपातकानाम्, प्रकर्षेण सोढुं शक्यः प्रसह्यः, न प्रसह्य अप्रसह्यः । विपच्यते इति विपाकः ( कर्मघनन्तम् ) विपाक एव विपाकस्य वा विस्फूर्जथुः विपाकविस्फूर्जथुः ।

कोशः—'कल्याणं मङ्गलं शुभम्' 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।' अन्तरमवकाशावधिपरिधानान्तर्विभेद—' 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमराः ।

भावार्थः—अथवा सर्वेषां शुभंकरी ते मतिः मयि अत्याचारं कुर्यात् इति शङ्कैव न भवति। इदं दुःखन्तु मदीयान्यजन्माचरितदुष्कर्मणामेव वज्रपातसदृशं फलमस्ति इति नाहं तवोपालम्भं कर्तुमिच्छामीति भावः।

हिन्दी—या सर्वदा सबका मङ्गल चाहनेवाली तुम्हारी बुद्धि मेरे विषय में अत्याचार ( मनमानी ) करेगी ऐसी शङ्का ही नहीं उठ सकती। यह तो मेरे ही जन्मान्तर के पातकोंका वज्रपात सदृश फल है ॥ ६२ ॥

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः।
तदास्पदं प्राप्य तयातिरोषात् सोढाऽस्मि न त्वद्भवने वसन्ती ॥ ६३ ॥

सञ्जीविनी—उपस्थितामिति। पूर्वमुपस्थितां प्राप्तां लक्ष्मीमपास्य मया सार्धं वनं प्रपन्नोऽसि प्राप्तोऽसि। तत्तस्मात्तया लक्ष्म्याऽतिरोषात्त्वद्भवन आस्पदं प्रतिष्ठाम्। "आस्पदं प्रतिष्ठायाम्" इति निपातः। प्राप्य वसन्त्यहं सोढा नास्मि।

अन्वयः—पूर्वम् उपस्थितां लक्ष्मीम् अपास्य मया सार्धं वनं प्रपन्नः असि, तत् तया अतिरोषात् त्वद्भवने आस्पदं प्राप्य वसन्ती सोढा न अस्मि।

वाच्य०ः—पूर्वमुपस्थितां लक्ष्मीमपास्य मया सार्धं वनं प्रपन्नेन 'त्वया' भूयते ( भाव० )। तत् सा अतिरोषात् त्वद्भवने आस्पदं प्राप्य वसन्तीं न सोढवत्यस्मि ( कर्तृ० )।

चन्द्रिका—पूर्वं पुरा, युवराजभावप्राप्तिप्रसंगे, उपस्थितां सन्निहिताम्, लक्ष्मीं राज्यैश्वर्यम् अपास्य प्रत्याख्याय, विहाय, मया सार्धं सह, वनं विपिनम्, प्रपन्नः गतः असि भवसि, कालविशेषाविवक्षया लट्प्रयोगः 'अस्ति महिलारोप्यं नाम नगरम्' इतिवत्। तत् राज्यलक्ष्मीप्रत्याख्यानम्, तया लक्ष्म्या, अतिरोषात् अधिकामर्षात्। सापत्यजात्, त्वद्भवने भवदागारे, आस्पदं प्रतिष्ठाम्, सम्मानम् प्राप्य आसाद्य, लब्ध्वा, वसन्ती तिष्ठन्ती, वर्तमाना, अहं ( सीता ), सोढा मर्षिता, क्षान्ता, नास्मि न भवामि। इदानीमवसरं प्राप्य लक्ष्मीः सापत्न्यासूयातः मां भवनान्निष्कासितवतीत्यर्थः।

समासः—तव भवनं त्वद्भवनम् तस्मिन् त्वद्भवने।

कोशः—'पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान्।' 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया।' 'सार्धं साकं सत्रा समं सह' 'गहनं काननं वनम्' 'कोपक्रोधामर्षरोषप्रतिघाः' 'भवनागारमन्दिरम्' 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः।

भावार्थः—पुरा राज्यलक्ष्मीं सन्निहितामपि निरस्य मया साकं भवान् वनं, गतः, साम्प्रतं त्वत्प्रासादे प्रतिष्ठया स्थितां मां सापत्न्यदह्यमानहृदया सा राज्यलक्ष्मीः कथं सहेत ? सा मां वनं प्रेष्य प्रतीकारं कृतवतीति भावः।

हिन्दी—पूर्वमें आई हुई राज्यलक्ष्मी को हटाकर मेरे साथ तुम वन चले गये थे। इसलिये अतिक्रोध से वह लक्ष्मी तुम्हारे घर में प्रतिष्ठा ( सम्मान )

पूर्वक रहती हुई मुझे कैसे सहती ? अतः उसी ने सौत के डाह से मुझे यहाँ से हटा दिया ॥ ६३ ॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४ ॥

सञ्जीविनी—निशाचर इति । निशाचरैरुपप्लुताः पीडिता भर्तारो यासां ता निशाचरोपप्लुतभर्तृकाः । "नद्यृतश्च" इति कप्प्रत्ययः । तासां तपस्विनीनां भवतः प्रसादादनुग्रहाच्छरण्या शरणसमर्था भूत्वा । अद्य त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थमन्यं तपस्विनं कथं प्रपत्स्ये प्राप्स्यामि ।

अन्वय—निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् शरण्या भूत्वा त्वयि दीप्यमाने शरणार्थम् अन्यं कथं प्रपत्स्ये ?

वाच्य०—निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् शरण्या भूत्वा त्वयि दीप्यमाने 'मया' शरणार्थम् अन्यः कथं प्रपत्स्यते ? ( कर्म० ) ।

चन्द्रिका—निशाचरैः राक्षसैः, उपप्लुताः उपद्रुताः परिपीडिताः भर्तारः पतयः, ऋषयः यासां तासां तपस्विनीनां मुनिपत्नीनाम्, भवतः श्रीमतः, प्रसादात् अनुग्रहात्, कृपातः शरण्या रक्षणदक्षा, शरणदानसमर्था, भूत्वा संवृत्य, त्वयि भवति, दीप्यमाने राजमाने, सति अन्यम् अपरम्, मुनिम्, कथं केन प्रकारेण, प्रपत्स्ये उपसरिष्यामि ? तपस्विरक्षणसमर्थाऽहं मद्रक्षणार्थं सम्प्रति कथं तपस्विनं कमपि वने उपसर्पिष्यामि ? इत्यर्थः ।

समासः—निशाचरैः उपप्लुताः भर्तारः यासां ताः ( बहु० ) निशाचरोपप्लुतभर्तृकाः, तासाम् । तपस्विनां स्त्रियः तपस्विन्यः, तासां तपस्विनीनाम् । सरणे साधुः शरण्या । शरणय इति शरणार्थम् (अस्व० विग्रहः क्रियावि०) ।

कोशः—धवः प्रियः पतिर्भर्ता' 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'प्रसादस्तु प्रसन्नता' 'शरणं गृहरक्षित्रोः' 'भिन्नार्थका अन्यतर एकस्त्वोन्येतरावपि ।' इत्यमरः ।

भावार्थः—पूर्वं राक्षसपरिपीडिता मुनिपत्नीनां त्वत्कृपातः अहं शरण्या आसम् । अधुना वीरवरे तेजस्विनि भवति भ्राजमाने सति स्वात्मरक्षार्थम् अन्यमहं कथमुपसर्पिष्यामि ?

हिन्दी राक्षसों से पीडित मुनियों की पत्नियों को, आपकी कृपा से, मैं शरण देनेवाली होकर, आपके विराजमान रहते हुए, मैं अपनी रक्षा के लिए किस प्रकार दूसरे के पास शरण जाऊँ ? ॥ ६४ ॥

किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ ६५ ॥

सञ्जीविनी—किं वेति। किं वाऽथवा तव सम्बन्धिनाऽत्यन्तेन पुनःप्राप्तिरहितेन वियोगेन माघे निष्फलेऽस्मिन्हतजीविते तुच्छजीविते उपेक्षां कुर्यां कुर्यामेव। रक्षणीयं रक्षणार्हमन्तर्गतं कुक्षिस्थं त्वदीयं तेजः शुक्रं गर्भरूपम्। 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः। मे ममान्तरायो विघ्नो न स्याद्यदि।

अन्वयः—किंवा तव अत्यन्तवियोगमोघे अस्मिन् हतजीविते उपेक्षां कुर्याम्? रक्षणीयम् अन्तर्गतं त्वदीयं तेजः यदि मे अन्तरायः न स्यात्।

वाच्य०—किंवा तवात्यन्तवियोगमोघेऽस्मिन् हतजीविते 'मया' उपेक्षा क्रियेत (कर्म०) रक्षणीयेन अन्तर्गतेन त्वदीयेन तेजसा यदि मे अन्तरायेण न भूयेत।

चन्द्रिका—किंवा यद्वा, तव त्वदीयेन, अत्यन्तवियोगेन पुनःसंयोगरहितेन विश्लपेण मोघे निरर्थके, अस्मिन् एतस्मिन्, हतजीविते निन्दितजीवने, उपेक्षाम् अवहेलाम्, कुर्यां विदध्याम्, संभावनायां लिङ्। रक्षणीयं परिपालनार्हम् अन्तर्गतं मदुदरान्तरस्थितम्, त्वदीयं तावकीनम्, तेजः बीजम्, गर्भम् यदि चेत्, अन्तरायः प्रत्यूहः न स्यात् न भवेत् यद्येप त्वदाहितो गर्भो मदभ्यन्तरे नाऽभविष्यद् तदा व्यर्थं दुर्भगमिदं जीवनं पर्यहास्यम् इति भावः।

समासः—अत्यन्तं वियोगः अत्यन्तवियोगः, अत्यन्तवियोगेन मोघम् अत्यन्तवियोगमोघम्, तस्मिन्। हतञ्च तद् जीवितञ्च (कर्म०) हतजीवितम्, तस्मिन्। तव इदं त्वदीयम्।

कोशः—'आहो उताहो किमुत विकल्पे किं किमूत च' 'मोघं निरर्थकम्' 'मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः।' 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च।' 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमराः।

भावार्थः—इतः पुनस्त्वत्संयोगाशारहितमिदं दुर्भगं जीवितं सन्त्यजेयम्, परं त्वदीयं तेजो गर्भरूपेणान्तःस्थितं जीवितत्यागे प्रतिबन्धकं न भवेद् यदि।

हिन्दी—अथवा तुम्हारे अत्यन्त वियोग के कारण निरर्थक इस दुष्ट जीवन की मैं उपेक्षा ही कर देती, यदि मेरे अन्दर गर्भरूप में स्थित आपका तेज उसमें विघ्न न बनता तो ॥ ६५ ॥

साऽहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥ ६६ ॥

सञ्जीविनी—सेति। साऽहं प्रसूतेरूर्ध्वं सूर्यनिविष्टदृष्टिः सती तथाविधं तपश्चरितुं यतिष्ये, यथा भूयस्तेन तपसा मे मम जननान्तरेऽपि त्वमेव भर्ता स्याः विप्रयोगश्च न स्यात्।

अन्वयः—सा अहं प्रसूतेः ऊर्ध्वं सूर्यनिविष्टदृष्टिः सती तपः चरितुं यतिष्ये यथा भूयः अपि जननान्तरे मे त्वमेव भर्ता 'भवेः' विप्रयोगश्च न 'भवेत्' ।

वाच्य०—तया मया प्रसूतेरूर्ध्वं सूर्यनिविष्टदृष्ट्या तपः चरितुं यतिष्यते यथा भूयः जननान्तरेऽपि त्वयैव भर्त्रा 'भूयेत' विप्रयोगेण च न 'भूयेत' (भाववा०) ।

चन्द्रिका—साऽहं गर्भवत्त्वात् जीवितत्यागासमर्था, अहं प्रसूतेः प्रसवात् ऊर्ध्वम् अनन्तरम्, पश्चात् सूर्ये भास्करे निविष्टदृष्टिः संलग्ननयना, 'सती भवन्ती' तपः समाधिम् चरितुं कर्तुम्, अनुष्ठातुम्, यतिष्ये उद्योक्ष्ये, यथा येन प्रकारेण, भूयोऽपि पुनरपि, अग्रेऽपि जननान्तरे जन्मान्तरे, त्वमेव भवानेव, भर्ता पतिः, 'भवेः स्याः,' विप्रयोगश्च त्वद्विरहश्च, न भवेत् न स्यात् । करिष्यमाणतपस इदमेव फलं यत् श्रीरामस्यैव पतित्वेन लाभो भवेत् प्रकृतजन्मवत् वारं वारं परस्परविरहश्च न भवेदिति ।

समासः—सूर्ये निविष्टा दृष्टिर्यस्याः सा सूर्यनिविष्टदृष्टिः ( बहु० ) । अन्यद् जन्म जननान्तरम्, तस्मिन् जननान्तरे ।

कोशः—'तपः समाधौ कृच्छ्रादौ' इति धनञ्जयः । 'प्रसूतिः प्रसवश्चैव' 'सूर-सूर्यार्यमादित्यद्वादशात्मविभाकराः ।' 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टि' 'यवा यथा तथैवैवं साम्ये' 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।' 'धवः प्रियः पतिर्भर्ता' इत्यमराः ।

भावार्थः—एवं प्राणत्यागेऽपि परवशाऽहं प्रसवानन्तरं सूर्याभिमुखी समाधिं ग्रहीतुं प्रयत्नं करिष्यामि, येन समाधिना जन्मान्तरेऽपि तवैव पतित्वेन प्राप्तिः आवयोरवियोगश्च भवेदिति भावः ।

हिन्दी—वैसी विवशा मैं प्रसवके पश्चात् दृष्टि को सूर्य में ही रखकर तपस्या करने का प्रयत्न करूँगी, जिससे जन्मान्तर में भी तुम ही मेरे पति हो ओ और तुम्हारा विरह कभी न होवे ॥ ६६ ॥

नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः ।
निर्वासिताऽप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥ ६७ ॥

सञ्जीविनी—नृपस्येति । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च पालनं यत्स एव नृपस्य धर्मो मनुना प्रणीत उक्तः । अतः कारणादेवं त्वया निर्वासिता निष्कासिताऽप्यहं तपस्विभिः सामान्यं साधारणं यथा भवति तथाऽवेक्षणीया । कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः सीतायां कर्तव्येत्यर्थः ।

अन्वयः—वर्णाश्रमपालनं यत् स एव नृपस्य धर्मः मनुना प्रणीतः । अतः त्वया एवं निर्वासिताऽपि अहं तपस्विसामान्यम् अवेक्षणीया ।

वाच्य०—तमेव नृपस्य धर्मं मनुः प्रणीतवान् (कर्तृ०) । अतः त्वं निर्वासितामपि मां तपस्विसामान्यम् अवेक्षेथाः (कर्तृ०) ।

चन्द्रिका—वर्णाः ब्राह्मणक्षत्रियादयः चत्वारः मुख्यतः, आश्रमाः ब्रह्मचर्य-गृहस्थवानप्रस्थ-संन्यासरूपाश्चत्वारः, एतेषां पालनं रक्षणम्, यद् वर्तते स एव विधेयस्य धर्मस्य परामर्शनात् पुंस्त्वम्। नृपस्य राज्ञः धर्मः वेदप्रतिपाद्यः, मनुना मनुमहाराजेन भवत्पूर्वपुरुषेण प्रणीतः अभिहितः, कथितः। अतः हेतोः, एवम् इत्थम्, निरपराधमित्यर्थः, निर्वासिताऽपि प्रवासं भापिताऽपि, देशनिस्सारणं कारिताऽपि, अहं, तपस्विसामान्यम् आरण्यकऋषिसदृशं यथा भवति तथेति अवेक्षणक्रियाविशेषणमिदम्। अवेक्षणीया विलोकनीया। भार्याबुद्धिविरहेऽपि प्रजास्वन्तर्गतत्वेन राज्ञा त्वया तपस्विष्विव मयि दृष्टिर्निधेया। नेदं मयि कृपा, अपि तु तव धर्म एष इत्यर्थः।

समासः—वर्णाश्च आश्रमाश्च वर्णाश्रमाः ( द्वन्द्व० ) वर्णाश्रमाणां पालनं ( ष० त० ) वर्णाश्रमपालनम्। नॄन् पातीति नृपः, तस्य। तप एषामस्तीति तपस्विनः, तपस्विभिः सामान्यं तपस्विसामान्यम्।

कोशः—'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे।' 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्री' 'स्याद् धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।' 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः।' गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।' इत्यमरः। 'नृपभूपमहीक्षितः' इत्यमरः।

भावार्थः—मनुना वर्णाश्रमपरिपालनं स राज्ञो धर्म इत्युक्तम्। इत्थं निरपराधं निर्वासितायामपि वनवासिन्यां मयि तपस्विषु यथा कृपादृष्टिर्निधीयते भवता तथैव दयादृष्टिर्निधेया साम्प्रतं मयि मा भूत् भार्या दृष्टिः, 'तपस्विनी' इति तपस्विसाधारणतया दृष्टिस्तु निधेयैव। राज्ञो वर्णाश्रमपरिपालनस्य अपरिहार्यकर्तव्यत्वादिति भावः।

हिन्दी—ब्राह्मणादि वर्ण (जाति) तथा ब्रह्मचर्यादि आश्रमों का पालन करना राजा का कर्तव्य-धर्म है—ऐसा मनुने अपने स्मृतिग्रन्थ में कहा है। इसलिए इस प्रकार घर से निर्वासित मुझ पर तपस्विजनों के समान ( 'यह भी एक तपस्विनी है' ऐसा समझ कर भी ) कृपा दृष्टि रखनी होगी ॥ ६७ ॥

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ ६८ ॥

सञ्जीविनी—तथेतीति। तथेति तस्याः सीताया वाचं प्रतिगृह्याङ्गीकृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीतेऽतिक्रान्ते सति सा सीता व्यसनातिभाराद् दुःखातिरेकान्मुक्तकण्ठं यथा स्यात्तथा वाग्वृत्त्येत्यर्थः। विग्ना भीता कुररीवोत्क्रोशीव। 'उत्क्रोशकुररौ समौ' इत्यमरः। भूयो भूयिष्ठं चक्रन्द चुक्रोश।

अन्वयः तथेति तस्याः वाचं प्रतिगृह्य रामानुजे दृष्टिपथं व्यतीते सा व्यसनातिभारात् विग्ना कुररीव मुक्तकण्ठं भूयः रुरोद।

वाच्य०—तथेति तस्याः वाचं प्रतिगृह्य रामानुजे दृष्टिपथं व्यतीते 'सति' तया व्यसनातिभारात् मुक्तकण्ठं विग्नया कुरर्या इव भूयः चक्रन्दे (भाव०)।

चन्द्रिका—तथा तथैव भवतु, इति एवं रीत्या, तस्याः वैदेह्याः, वाचं वाणीम्, प्रतिगृह्य स्वीकृत्य, रामानुजे सौमित्रौ, लक्ष्मणे, दृष्टिपथं नयनमार्गम्, लोचनगोचरताम्, व्यतीते अतिक्रम्य गते 'सति भवति' सा सीता, व्यसनातिभारात् अधिकदुःखात्, दुःसहपीडातः, विग्ना कातरा, कुररीव स्त्री उत्क्रोशपक्षिणीव, मुक्तकण्ठं सशब्दमुच्चैरित्यर्थः। भूयः भूरि, प्रचुरं क्रियाविशेषणमेतद् द्वयम्। चक्रन्द रुरोद।

समासः—रामस्य अनुजः रामानुजः, तस्मिन्। अतिशयितः भारः अतिभारः, तस्मात्। मुक्तः कण्ठः यस्मिन् तद् यथा भवति तथा मुक्तकण्ठम्।

कोशः—'ववा यथा तथैवैवं साम्ये' 'गीर्वाग् वाणी सरस्वती' 'कनिष्ठयवीयोऽवरजानुजाः' 'लोचनं चक्षुरक्षिणी। दृग्दृष्टी' 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः।' 'व्यसनं विपदि भ्रंशे दोषकामजकोपजे' 'कण्ठो गलोऽथ ग्रीवायाम्' 'उत्क्रोशकुररौ समौ' 'स्फारं भूयश्च भूरि च' इत्यमराः।

भावार्थः—'तथैव भ्रातरं वक्ष्यामि' इति सीताया वचनमङ्गीकृत्य लक्ष्मणे निर्गते लोचनागोचरतां च गते, सा सीता दुःसहात्यधिकदुःखात् कातरा कुररीव तारस्वरेण रोदितुं प्रवृत्ता।

हिन्दी—'ऐसा ही कहूँगा' कह कर सीता जी के वचन को स्वीकार करके लक्ष्मण के आँखों से ओझल हो जाने पर सीता दुःख के भार से डरी हुई कुररपक्षिणी जैसा गला फाड़ कर रोने लगी॥ ६८॥

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि॥ ६९॥

सञ्जीविनी—नृत्यमिति। मयूरा नृत्यं विजहुस्त्यक्तवन्तः। वृक्षाः कुसुमानि। हरिण्य उपात्तान् दर्भान्। इत्थं तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वनेऽप्यत्यन्तं रुदितमासीत्। यथा रामगेहेऽपीत्यपिशब्दार्थः।

अन्वयः—मयूराः नृत्यं वृक्षः कुसुमानि हरिण्यः उपात्तान् दर्भान् विजहुः, तस्याः समदुःखभावं प्रपन्ने वनेऽपि अत्यन्तं रुदितमासीत्।

वाच्य०—मयूरैः नृत्यं विजहे, वृक्षैः कुसुमानि 'विजह्रिरे' हरिणीभिः उपात्ता दर्भा 'विजह्रिरे' (कर्म०)। तस्याः समदुःखभावं प्रपन्ने वनेऽपि अत्यन्तेन रुदितेन 'अभावि' (भाव०)।

चन्द्रिका—मयूराः बर्हिणः, नृत्यं नर्तनम्, विजहुः परिजह्रुः, तत्यजुः। वृक्षाः तरवः, कुसुमानि प्रसूनानि, पुष्पाणि, विजहुः त्यक्तवन्तः, अश्रुस्थाने इदम्। हरिण्यः

कुरङ्ग्यः, मृग्यः, उपात्तान् मुखे खादितुं गृहीतान्, दर्भान् कुशान्, विजहुः मुखात् पातयामासुः। तस्याः सीतायाः, समदुःखभावं सदृशदुःखताम् प्रपन्ने गते, प्राप्ते, वनेऽपि विपिनेऽपि अत्यन्तम् अत्यधिकम्, अतिमात्रम्, रुदितं क्रन्दितम्, आसीत्। समस्ते वने वृक्षाद्या अन्तश्चेतना अपि समदुःखतयाऽनुरुदन्ति स्मेत्यर्थः।

समासः—हरिणानां स्त्रियः हरिण्यः। समं च तद् दुःखञ्च समदुःखम् (कर्म०) समदुःखस्य भावः समदुःखभावः, तं समदुःखभावम्।

कोशः—'मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्' 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने' 'वृक्षो महीरुहः शाखी' 'पुष्पं प्रसूनं कुसुमं सुमम्' 'अस्त्री कुशं कुथो दर्भः' 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः।' 'क्रन्दितं रुदितं क्रुष्टम्' 'गहनं काननं वनम्' इत्यमरः।

भावार्थः—सीताया आर्तरोदनमाकर्ण्य मयूरा नृत्यमत्यजन्, वृक्षाः कुसुमान्यमुञ्चन्, हरिण्यश्च मुखे जग्धुमारब्धान् दर्भाङ्कुरान् अपातयन्। एवं सीताया दुःखेन दुःखिते समस्ते वने रोदनं प्रससारेति भावः।

हिन्दी—सीता के मुक्तकण्ठ रोने पर मोरों ने नाचना त्याग दिया, वृक्षों ने फूलों को ( अश्रु के स्थान में ) गिराया तथा मृगियों ने मुंह में लिये हुए कुशों को उगल दिया। इस प्रकार सीता को सहानुभूति में समस्त वन में ही अत्यधिक रोना ही रोना था ॥ ६९ ॥

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ७० ॥

सञ्जीविनी—तामिति। कुशेध्माहरणाय यातः कविर्वाल्मीको रुदितानुसारी संस्तां सीतामभ्यगच्छत्। अभिगमनं च दयालुतयेत्याह—निषादेति। निषादेन व्याधेन विद्धस्याण्डजस्य क्रौञ्चस्य दर्शनेनोत्थ उत्पन्नो यस्य शोकः श्लोकत्वमापद्यत, श्लोकरूपेणावोचदित्यर्थः। स च श्लोकः पठ्यते—"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥" इति। तिरश्चामपि दुःखं न सेहे किमुतान्येषामिति भावः।

अन्वयः—कुशेध्माहरणाय यातः कविः रुदितानुसारी 'सन्' ताम् अभ्यगच्छत्। निषादविद्धाण्डजदर्शनेन यस्य शोकः श्लोकत्वम् आपद्यत।

वाच्य०—कुशेध्माहरणाय यातेन कविना रुदितानुसारिणा सा अभ्यगम्यत। निषादविद्धाण्डजदर्शनेन यस्य शोकेन श्लोकत्वम् आपद्यत (कर्म०)।

चन्द्रिका—कुशेध्मानां दर्भसमिधाम्, आहरणाय आनयनाय, यातः गतः, कविः वाल्मीकिः, रुदितानुसारी क्रन्दनरवानुगामी, 'सन् भवन्' तां सीताम्, अभ्यगच्छत् उपासरत्। निषादेन मृगयुना, व्याधेन, विद्धस्य क्षतस्य, हतस्य, अण्डजस्य क्रौञ्चपक्षिणः, दर्शनेन वीक्षणेन, यस्य वाल्मीकेः, शोकः करुणारसस्थायि-

भावः विषादः, श्लोकत्वं पद्यभावम्—"मा निषाद प्रतिष्ठां त्वम् अगमः शाश्वतीः समाः । यत् क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ।" इत्याकारकं, आपद्यत प्राप्नोत् । व्याधविद्धं पुरुषक्रौञ्चं विलोक्य तत्स्त्रियाः करुणक्रन्दनमाकर्ण्य शोकाकुलवाल्मीकिमुखात् आपाततस्तादृशव्याधस्य शापदानात्मकं छन्दः, इदंप्रथमतया निस्ससार । इदमाकर्ण्य स्वयं चिन्ताविस्मयाकुले वाल्मीकौ देवर्षिर्नारद उपेत्य "त्वया रचयिष्यमाणस्य श्रीरामायणस्य मङ्गलाचरणात्मकमिदं छन्दोबद्धं पद्यम् । अनया रीत्या अग्रे समग्रं रामायणं विरचय" इत्यादेशं ददौ । अत एवायं कविः प्रथमकविः संसारे इत्याख्यायते ।

समासः—कुशाश्च इध्मानि च कुशेध्मानि (द्वन्द्व० ) । कुशेध्मानामाहरणं कुशेध्माहरणम् (ष० त०) तस्मै । रुदितमनुसरतीति रुदितानुसारी । निषादेन विद्धः ( तृ० त० ) निषादविद्धः, निषादविद्धश्चासौ ( अण्डाद् जातः ) अण्डजश्च ( कर्म० ) निषादविद्धाण्डजः, तस्य निषादविद्धाण्डजस्य दर्शनम् निषादविद्धाण्डजदर्शनम्, तेन । श्लोकस्य भावः श्लोकत्वम्, तत् ।

कोशः—'अस्त्री कुशं कुथो दर्भः' 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम् ।' 'संख्यावान् पण्डितः कविः' 'क्रन्दितं रुदितं क्रुष्टम्' 'निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे । व्याधेऽपि' ( इति रभसः ) 'वेधितच्छिद्रितौ विद्धे' 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।' 'मन्युशोकौ तु शुक् स्त्रियाम्' 'पद्ये यशसि च श्लोकः' इत्यमराः ।

भावार्थः—कुशसमिधानयनाय प्रस्थितः स वाल्मीकिः तस्या रोदनमनुसन्दधानः सीतायाः समीपमुपगतः, यस्य सहृदयस्य वाल्मीकेः पुरा सरस्तीरे सन्ध्योपासनानिरतस्य पुरस्तात् व्याधेन विद्धस्य क्रौञ्चपक्षिमिथुनादेकस्य पुरुषपक्षिणो विलोकनात् उत्पन्नः शोकः श्लोकात्मना बहिर्निर्गतो बभूवेति तादृशो वाल्मीकिस्तदन्तिकमागत इति भावः ।

हिन्दी—कुश और समिधा लाने को निकले हुए वे वाल्मीकि सीता के रोने की ध्वनि का अनुसरण करते हुए उसके पास पहुँचे, व्याध के द्वारा क्रौंचपक्षी के वध देखकर जिनका शोक श्लोक के रूप को प्राप्त हुआ था ॥ ७० ॥

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्मै मुनिर्दोहदलिङ्गदर्शी दाश्वान् सुपुत्राशिषमित्युवाच ॥ ७१ ॥

सञ्जीविनी—तामिति । सीता विलापाद्विरता सती नेत्रावरणं दृष्टिप्रतिबन्धकमश्रु प्रमृज्य तं मुनिं ववन्दे । दोहदलिङ्गदर्शी गर्भचिह्नदर्शी मुनिस्तस्यै सीतायै सुपुत्राशिषं तत्प्राप्तिहेतुभूतां दाश्वान्दत्तवानिति वक्ष्यमाणप्रकारेणोवाच । "दाश्वान्साह्वान्मीढ्वांश्च" इति क्वस्वन्तो निपातः ।

अन्वयः—सीताविलापाद् विरता सती नेत्रावरणम् अश्रु प्रमृज्य तं मुनिं ववन्दे । दोहदलिङ्गदर्शी मुनिः तस्यै सुपुत्राशिषं दाश्वान् इति उवाच ।

वाच्य०—सीतया विलापाद् विरतया नेत्रावरणं प्रमृज्य स मुनिः ववन्दे (कर्म.) दोहदलिङ्गदर्शिना मुनिना तस्यै सुपुत्राशिषं दाश्वता 'सा' इत्यूचे (कर्म.)।

चन्द्रिका—सीता वैदेही, विलापात् परिदेवनात् 'विलापः परिदेवनम्' इत्यमरः। शोकोद्गारादित्यर्थः। विरता उपरता, त्यक्तविलापेत्यर्थः। सती नेत्रावरणं विलोचनविधायकम्, अश्रु नेत्रवारि, प्रमृज्य संशोध्य, प्रोंछ्य, तं मुनिं प्रसिद्धं वाल्मीकिमहर्षिम्, ववन्दे प्रणनाम, प्रणतवती। दोहदस्य गर्भस्य लिङ्गदर्शी चिह्नविलोकी, लक्षणानि पश्यन्, मुनिः वाल्मीकिः, तस्यै सीतायै, सुपुत्राशिषं शोभनस्य सुतस्य शुभाशंसाम्, दाश्वान् वितीर्णवान्, कृतवानिति यावत्। इति वक्ष्यमाणरीत्या, उवाच जगाद।

समासः—आव्रियतेऽनेनेति आवरणम्, नेत्रयोरावरणं नेत्रावरणम्, तत्। दोहदस्य लिङ्गं पश्यतीति दोहललिङ्गदर्शी। शोभनश्चासौ पुत्रश्च सुपुत्रः ( कर्म० )। सुपुत्रस्याशीः सुपुत्राशीः तां सुपुत्राशिषम्।

कोशः—'विलापः परिदेवनम्' 'नेत्रमीक्षणं चक्षुरक्षिणी' 'स्यान्मार्ष्टिमार्जना मृजा' 'तपस्वी तापसः पारिकांक्षी वाचंयमो मुनिः।' 'दोहदं गर्भिणीच्छायामिच्छामात्रे च गर्भके।' इति केशवः। 'स्याल्लिङ्गं चिह्नशेफसोः' 'आत्मजस्तनयः सूनुः सुतः पुत्रः' 'आशीः शुभाशंसाहिदंष्ट्रयोः।' इत्यमरः।

भावार्थः—वैदेही शोकविलापं विहायाश्रुजलं वस्त्राञ्चलेन संप्रोंछ्य वाल्मीकिं प्रणनाम, स च मुनिः गर्भचिह्नानि विलोक्य 'सत्पुत्रवती भूयाः' इति तस्यै शुभाशीर्वादं वितीर्य वक्ष्यमाणरीत्या प्रोवाचेति भावः।

हिन्दी—सीता ने शोक-विलाप छोड़ कर आँखों को ढँकने वाले आँसू पोंछ कर वाल्मीकि को प्रणाम किया। मुनि गर्भचिह्न देख कर 'सत्पुत्र वाली होओ' ऐसा आशीर्वाद देकर यों कहने लगे॥ ७१॥

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्याऽपवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्ताऽसि वैदेहि पितुर्निकेतम्॥ ७२॥

सञ्जीविनी—जान इति। त्वां मिथ्याऽपवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने। हे वैदेहि! विषयान्तरस्थं देशान्तरस्थं पितुर्जनकस्यैव निकेतं गृहं प्राप्ताऽसि। तत्तस्मान्मा व्यथिष्ठा मा शोचीः। व्यथेर्लुङ्। "न माङ्योगे" इत्यडागमप्रतिषेधः। भर्त्रोपेक्षितानां पितृगृहे वास एवोचित इति भावः।

अन्वयः—त्वां मिथ्यापवादक्षुभितेन भर्त्रा विसृष्टां प्रणिधानतः जाने। वैदेहि! 'त्वं' विषयान्तरस्थं पितुः निकेतं प्राप्ताऽसि। तत् मा व्यथिष्ठाः।

वाच्य०—त्वां मिथ्यापवादक्षुभितः भर्ता विसृष्टवान् (कर्तृ०) 'इति मया' प्रणिधानतः ज्ञायते (कर्म०)। विषयान्तरस्थं पितुर्निकेतं प्राप्तया 'त्वया' भूयते ( भाव० ) 'त्वया' मा व्यथि (भाव०)।

चन्द्रिका—त्वां भवतीम् मिथ्यापवादेन मृषानिन्दया, क्षुभितेन व्याकुलेन, भर्त्रा प्रियेण, विसृष्टां परिहृतां, परित्यक्ताम्, प्रणिधानतः चित्तैकाग्र्येण, ध्यानेनेत्यर्थः, जाने अवैमि। हे वैदेहि! हे जानकि! विषयान्तरस्थं मिथिलातोऽन्यत्र स्थितम्, पितुः जनकस्य, निकेतं सदनम्, प्राप्ताऽसि गतासि। मा व्यथिष्ठाः व्यथां मा कृथाः। दुःखं मा कुरु, पितृगेहं प्राप्तायास्ते दुःखस्य नावसर इत्यर्थः।

समासः—मिथ्या अपवादः मिथ्यापवादः ( कर्म० ), मिथ्यापवादेन क्षुभितः मिथ्यापवादक्षुभितः, तेन। अन्यो विषयः विषयान्तरम्, विषयान्तरे तिष्ठतीति विषयान्तरस्थम्, तत्। विदेहस्यापत्यं स्त्री वैदेही, तत्सम्बुद्धौ वैदेहि!।

कोशः—'मृषा मिथ्या च वितथे' 'अपवादो च निन्दाज्ञे' 'धवः प्रियः पतिर्भर्ता' 'अवधानं समाधानं प्रणिधानं तथैव च।' 'नीवृज्जनपदो देशविषयौ' 'तातस्तु जनकः पिता' 'वेश्म सद्म निकेतनम्' इत्यमराः।

भावार्थः—असत्येनापि लोकापवादेन व्याकुलस्ते पतिः त्वां त्यक्तवान् इति मया ध्यानदृष्ट्या अवगतम्। हे वैदेहि! त्वं मिथिलातिरिक्तदेशगतं तमसानदीतीरस्थितं जनकगेहमेवागतासि। अतः शोकं परित्यजेति भावः।

हिन्दी—असत्यभूत लोकनिन्दा से व्याकुल हुए तुम्हारे पति ने तुम्हें त्याग दिया ऐसा मैंने ध्यान दृष्टि से जान लिया है। हे सीते! मिथिला के अतिरिक्त स्थान में स्थित अपने पिता के ही घर में आ गई हो। अतः दुःख मत करो॥ ७२॥

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे॥ ७३॥

सञ्जीविनी—उत्खातेति। उत्खातलोकत्रयकण्टकेऽपि। रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः। सत्यप्रतिज्ञे सत्यसन्धेऽपि अविकत्थनेऽनात्मश्लाघिन्यपि इत्थं स्नेहपात्रेऽपि त्वां प्रत्यकस्मादकारणात्कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपोऽस्त्येव। सर्वगुणाच्छादकोऽयं दोष इत्यर्थः। सीताऽनुनयार्थोऽयं रामोपालम्भः।

अन्वयः—उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽपि अविकथनेऽपि त्वां प्रत्यकस्मात् कलुषप्रवृत्तौ भरताग्रजे मे मन्युः अस्त्येव।

वाच्य०—……मे मन्युना भूयते एव (भाव०)।

चन्द्रिका—'उत्खातः उन्मूलितः, उत्पाटितः, लोकत्रयस्य भुवनत्रयस्य, कण्टकः क्षुद्रशत्रुः, येन तस्मिन् तथोक्तेऽपि अपिना मन्युपात्रताविरोधो द्योत्यते, अग्रेऽप्येवम्। सत्यप्रतिज्ञेऽपि तथ्यवादिन्यपि 'रामो द्विर्नाभिभाषते' इति विख्यातेऽपि। अविकत्थनेऽपि आत्मप्रशंसाविधुरेपि, विशेषणत्रयेण स्नेहास्पदेऽपि त्वां प्रति त्वामुद्दिश्य, कलुषप्रवृत्तौ पापकारिणि, भरताग्रजे श्रीरामे, मे मम, मन्युः क्रोधः, अस्त्येव वर्तत एव। सीतापावित्र्यस्वीकारद्योतकमिदमाख्यानम्।

समासः— लोकानां त्रयं लोकत्रयम्, लोकत्रयस्य कण्टकः लोकत्रयकण्टकः, उत्खातः लोकत्रयकण्टको येन सः उत्खातलोकत्रयकण्टकः (बहु०), तस्मिन् । सत्या प्रतिज्ञा यस्य सः सत्यप्रतिज्ञः (बहु०), तस्मिन् । न विकत्थनः अविकत्थनः (नञ्त०) तस्मिन् । कलुषा प्रवृत्तिः यस्य (बहु०) सः कलुषप्रवृत्तिः, तस्मिन्, भरतस्य अग्रजः भरताग्रजः, तस्मिन्

कोशः—'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।' 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ।' 'गर्हासमुच्चयप्रश्न-शङ्कासम्भावनास्वपि ।' 'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ।' ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।' 'वागिन्द्रियादिचेष्टा प्रवृत्तिः' (इति मुकुटः) 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ।' 'मन्युर्दैन्ये क्रतौ क्रुधि' 'पूर्वजस्त्वग्रियोऽग्रजः ।' इत्यराः ।

भावार्थः—लोकत्रयकण्टकायितस्य रावणादेर्हन्तेन सत्यवाचित्वेन आत्मप्रशंसा-रहिततया च श्रीरामः यद्यपि मम स्नेहादरभाजनमेवास्ति, तथाऽपि, निष्कारण-मेव पतिव्रतोत्तमायास्तव परित्यागेनाहं तस्मिन् कुपितोऽस्मि इति भावः ।

हिन्दी—तीनों लोकों को काँटे के समान कष्ट देने वाले रावणादि के विध्वं-सक होने पर भी, सत्यप्रतिज्ञ ( सत्यवादी ) होने पर भी, आत्मप्रशंसा न करने वाले होने पर भी, विना कारण ही तुम्हारे प्रति पाप ( धर्मपत्नी परि-त्याग रूप ) करने वाले भरत के बड़े भाई पर मुझे क्रोध आ रहा है । ( इसी लिए 'राम' न कहकर 'भरताग्रज' शब्द का प्रयोग किया यह वैसा ही अपराध है जो कि उनके वे सब गुण छिप जाते हैं—यह निरन्तर 'राम' रट लगाने वाले मुनि का उद्‌गार है ) ॥ ७३ ॥

तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥ ७४ ॥

सञ्जीविनी—तवेति । उरुकीर्तिस्तव श्वशुरो दशरथो मे । ते पिता जनकः सतां विदुषां भवोच्छेदकरो ज्ञानोपदेशादिना संसारदुःखध्वंसकारी । त्वं पतिदेवतानां पतिव्रतानां धुर्यग्रे स्थिता । येन निमित्तेन ममानुकम्प्याऽनुग्राह्या नासि तत्किम् । न किञ्चिदित्यर्थः ।

अन्वयः—उरुकीर्तिः तव श्वशुरः मे सखा 'आसीत्' । ते पिता सता सतां भवच्छेदकरः 'अस्ति' त्वं पतिदेवतानां धुरि स्थिता 'असि' येन मम अनुकम्प्या न असि तत् किम् 'अस्ति' ?

वाच्य०—उरुकीर्तिना तव श्वशुरेण मे सख्या 'अभूयत' ते पित्रा सतां भवच्छेदकरणे 'भूयते' त्वया पतिदेवतानां धुरि स्थितया 'भूयते' येन ममानु-कम्प्यया न 'भूयते' तेन केन ( कारणेन ) 'भूयते' ( सर्वत्र भाववा० ) ।

चन्द्रिका—उरुः विपुलकीर्तिः यशः यस्य सः तथोक्तः, ते श्वशुरः पति-पिता, दशरथः, मे मम, सखा सुहृद्, आसीदिति शेषः । ते तव पिता जनकः,

सतां ज्ञानिनाम्, 'सन् सुधीः कोविदो बुधः' भवस्य संसारस्य, जननमरणप्रवाहस्य, छेदकरः नाशकारी ब्रह्मज्ञानोपदेशेनेति शेषः, अस्ति। त्वं ( सीता ) पतिदेवतानां साध्वीनाम्, धुरि अग्रे, पुरः, श्रेष्ठेति यावत्। स्थिता वर्तमाना 'असी'ति शेषः। इदं त्रितयमपि मम त्वयि दयाव्यवहारप्रयोजकमस्ति। एवं स्थिते---येन कारणेन मम मे अनुकम्प्या दयनीया, नासि न भवसि, तत् तादृशं कारणम्, किम् अस्तीति काक्वा न किमप्यस्तीत्यर्थः।

समासः—उरुः कीर्तिः यस्य (बहु०) सः उरुकीर्तिः। करोति इति करः, भवस्य च्छेदः भवच्छेदः, भवच्छेदस्य करः भवच्छेदकरः ( अविचार्य केचिद् 'भवच्छेदं करोति' इति विगृह्णन्ति तदा 'कर्मण्यण्' इति अणि 'भवच्छेदकारी' इत्येव निष्पद्येत )। पतिः देवता यासां ताः (बहु०) पतिदेवताः, तासाम्। अनुकम्पितुं योग्या अनुकम्प्या।

कोशः---'वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे' 'यशः कीर्तिः समज्ञा च' 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः।' 'अथ मित्रं सखा सुहृत्' 'सत्ये साधौ वर्तमाने प्रशस्तेऽभ्यर्हिते च सत्।' 'जन्महरौ भवौ' ( 'भवः क्षेमे च संसारे सत्तायां प्राप्ति जन्मनोः' इति मेदिनी। ) 'तातस्तु जनकः पिता' 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः।

भावार्थः—विपुलयशास्ते श्वशुरो दशरथो मम मित्रमासीत्। तव जनको जनकस्तु ब्रह्मविद्योपदेशेन सतां संसाराद् उद्धर्ता एवास्ति। त्वमपि पतिव्रताग्रगण्या असि अतः सर्वथा त्वयि मया दयाकारिणा भाव्यमेव। तादृशं किमपि प्रतिकूलकारणं न विद्यते येन त्वयि दयां न कुर्याम्—इति भावः।

हिन्दी—विपुल यशवाले तुम्हारा श्वशुर राजा दशरथ मेरे मित्र ही थे। तुम्हारे पिता जनकजी सज्जनों को ( ब्रह्मज्ञान के द्वारा ) संसारबन्ध से छुड़ाते हैं। तुम पतिव्रता स्त्रियों में अग्रगण्य हो। फिर कौनसा ऐसा कारण है कि जिससे मैं तुमपर दया न करूँ ॥ ७४ ॥

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसाऽस्मिन्।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥

सञ्जीविनी—तपस्वीति। तपस्विसंसर्गेण विनीतसत्त्वे शान्तजन्तुकेऽस्मिंस्तपोवने वीतभया निर्भीका वस। इतोऽस्मिन्वनेऽनघप्रसूतेः सुखप्रसूतेस्तेऽपत्यसंस्कारमयो जातकर्मादिरूपो विधिरनुष्ठानं भविष्यति।

अन्वयः—तपस्विसंसर्गविनीतसत्त्वे अस्मिन् तपोवने वीतभया 'त्वं' वस इतः अनघप्रसूतेः ते अपत्यसंस्कारमयः विधिः भविष्यति।

वाच्य०—··वीतभयया 'त्वया' उष्यताम् ( भाव० ) इतः अनघप्रसूतेः ते अपत्यसंकारमयेन विधिना भविष्यते ( भाव० )।

चन्द्रिका—तपस्विनां तापसानाम्, संसर्गेण संगत्या, विनीताः विनम्राः, सत्त्वाः प्राणिनः. यस्मिन् तस्मिन्, अस्मिन् पुरो दृश्यमाने, तपोवने धर्माश्रमे, वीतभया गतत्रासा, अभयो, 'सतो भवन्तो' वस निवासं कुरु, इतः अस्मिन् तपोवने, सार्वविभक्तिकस्तसिः, अनघप्रसूतेः सुखप्रसवायाः, ते तव, अपत्यस्य जनिष्यमाणशिशोः, संस्कारमयः जातकर्मनामकरणादिसंस्कारात्मकः, विधिः आचरणं, भविष्यति सम्पत्स्यते ।

समासः—तप एषामस्तीति तपस्विनः, तपस्विनां ( तपस्विभिर्वा ) संसर्गः तपस्विसंसर्गः, तपस्विसंसर्गेण विनीताः सत्त्वाः यस्मिन् तत् तपस्विसंसर्गविनीतसत्त्वम् ( बहु० ), तस्मिन् ।. तपसः वनं तपोवनम्, तस्मिन् । न विद्यते अघं यस्यां सा ( बहु० ) अनघा, अनघा प्रसूतिः यस्याः सा ( बहुव्रीहिगर्भो बहु० ) अनघप्रसूतिः, तस्याः अनघप्रसूतेः । अपत्य संस्कार अप्रत्यसंस्कारः, प्रकृतः अपत्यसंस्कारः अपत्यसंस्कारमयः ( 'तत्प्रकृतवचने' मयट् ) ।

कोशः—'तपस्त्री तापसः पारिकांक्षी वाचंयमो मुनिः ।' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' 'भीतिर्भीः साध्वसं भयम्' 'अंहोदुःखव्यसनेष्वघम्' 'प्रसूतिः प्रसवश्चैव' 'अपत्यं तोकं तयोः समे' 'विधिर्विधाने दैवेऽपि' इत्यमरः ।

भावार्थः—वत्से ! तपस्विभिः सहनिवासेन अस्मिन् तपोवने हिंस्रा व्याघ्रादयोऽपि गवादिभिः सहैकत्र निवसन्ति, अतोऽत्र ते हिंस्रप्राणिभ्योऽपि भयं न वर्तते । किञ्चात्र तव सुखप्रसवो भविष्यति, जनिष्यमाणपुत्रस्य जातकर्मादिसंस्कारा अपि अत्र सम्पत्स्यन्ते । अतो निश्चिन्ताऽत्र वस ।

हिन्दी—मुनिजनों के सम्पर्क से जहाँ के हिंसक प्राणी भी विनम्र हो गये हैं—ऐसे इस आश्रम में निर्भीकता से रहो । यहाँ तुम्हारा सुखप्रसव होगा और उस सन्तान का जातकर्मादि संस्कार भी सम्पन्न होंगे ।। ७५ ।।

अशून्यतीरां मुनिसन्निवेशैस्तमोपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ।। ७६ ।।

सञ्जीविनी-अशून्येति । सन्निविशन्ते येष्विति सन्निवेशा उटजाः । अधिकरणार्थे घञ्प्रत्ययः । मुनीनां सन्निवेशैरुटजैरशून्यतीरां पूर्णतीरां तमसः शोकस्य पापस्य वा हन्त्रीम् । 'तमस्तु क्लीबे पापे नरकशोकयोः' इत्यमरः । तमसां नदीं वगाह्य तत्र स्नात्वा । बलिक्रियाऽपेक्षया पूर्वकालता । तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिरिष्टदेवतापूजाविधिभिस्ते मनसः प्रसादः सम्पत्स्यते भविष्यति ।

अन्वयः मुनिसन्निवेशैः अशून्यतीरां तमोऽपहन्त्रीं तमसां वगाह्य तत्सैकतोत्सङ्गबलिक्रियाभिः ते मनसः प्रसादः सम्पत्स्यते ।

वाच्य०—···ते मनसः प्रसादेन सम्पत्स्यते ( भाव० )

चन्द्रिका—मुनीनां तपस्विनाम्, सन्निवेशैः आश्रमैः, पर्णशालाभिः, अशून्यतीरां सम्भृततटप्रदेशाम्, तमोऽपहन्त्रीं अज्ञानवारयित्रीम्, तमसां तमसानदीम्,

वगाह्य निमज्ज्य, संस्नाय, प्रविश्य 'वष्टिभागुरि' रित्यादिनाऽत्र अलोपोऽवगन्तव्यः । तस्याः तमसायाः, सैकतोत्सङ्गेषु वालुकामयपुलिनेषु, बलिक्रियाभिः इष्टदेवार्चनाचरणैः ते तव, मनसः चित्तस्य, प्रसादः प्रसन्नता, सम्पत्स्यते भविष्यति, जनिष्यते ।

समासः—संनिविशन्ते येषु इति संनिवेशाः, मुनीनां संनिवेशाः मुनिसंनिवेशाः तेषु । न शून्यम् अशून्यम् ( नञ्त० ), अशून्यं तीरं यस्याः सा ( बहु० ) अशून्यतीरा, ताम् अशून्यतीराम् । तमसः अपहन्त्री तमोपहन्त्री, ताम् । प्रकृताः सिकताः सैकताः, सैकताश्च ते उत्सङ्गाश्च ( कर्मधा० ) सैकतोत्सङ्गाः, तस्याः सैकतोत्सङ्गाः तत्सैकतोत्सङ्गाः ( ष०त० ) तत्सैकतोत्सङ्गेषु ( बलीनां क्रियाः बलिक्रियाः ) बलिक्रियाः स तत्सैकतोत्सङ्गबलिक्रियाः, ताभिः ।

कोशः—'तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' 'शून्यं तु वशिकं तुच्छरिक्तके ।' 'कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु ।' 'राहौ ध्वान्ते गुणे तमः, 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ।' 'करोपहारयोरस्त्री बलिः प्राण्यङ्गजे स्त्रियाम् ।' 'आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ।' 'चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।' 'प्रसादस्तु प्रसन्नता' इत्यमरः ।

भावार्थः—इतोऽप्याश्वासनं मुनेरिदम्—तमसानदीपरिसरे अनेकाः मुनिपर्णशालाः सन्ति, अतस्ते मनोरञ्जनं भविष्यति, किञ्च दुःखाज्ञानादिनाशिन्यां तमसानद्यां स्नानमाचरत्याः सिकतामयपुलिनेषु स्वेष्टदेवतापूजादिविदधानायाः ते चित्तं प्रसन्नं भविष्यति । नाऽत्र ते कोऽपि क्लेशः, नवा काऽप्युदासीनता तवेति भावः ।

हिन्दी—मुनियों की पर्णशालाओं से जिसकी तटभूमि भरी पड़ी है, ऐसी दुःखनिवारिणी तमसानदी में स्नान करके उसके बालूमय तीरप्रदेश पर अपनी इष्टदेवता की पूजा आदियोंसे तेरा मन बहलाव हो जायेगा ॥ ७६ ॥

पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥

सञ्जीविनी—पुष्पमिति । ऋतुरस्य प्राप्त आर्तवम्, स्वकालप्राप्तमित्यर्थः । पुष्पं फलं च । अकृष्टरोहयकृष्टक्षेत्रोत्थम् अकृष्टपच्यमित्यर्थः । बलये हितं बालेयं पूजायोग्यम् । "छदिरुपधिबलेर्ढञ्" इति ढञ्प्रत्ययः । बीजं नीवारादि धान्यं चाहरन्त्य उदारवाचः प्रगल्भगिरो मुनिकन्यका नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ।

अन्वयः—आर्तवं पुष्पं फलं च अकृष्टरोहि बालेयं बीजञ्च आहरन्त्यः उदारवाचः मुनिकन्यकाः नवाभिषङ्गां त्वां विनोदयिष्यन्ति ।

वाच्य०—·······आहरन्तीभिः उदारवाग्भिः मुनिकन्यकाभिः नवाभिषङ्गा त्वं विनोदयिष्यसे ( कर्म० )।

चन्द्रिका—आर्तवं तत्तदृतूद्भवम्, पुष्पं कुसुमम् फलञ्च सस्यञ्च 'सस्ये हेतुकृते फलम्' इत्यमरः। अकृष्टरोहि हलानुल्लिखितभूम्युत्पन्नम्, स्वयमेवोत्पन्नमित्यर्थः। बालेयं अर्चनोपयोगि, बीजं धान्यञ्च, आहरन्त्यः आनयन्त्यः, उदारवाचः प्रियभाषिण्यः, वाग्मिन्यः, मुनिकन्यकाः तापसबालिकाः, तपस्विकुमार्यः, नवाभिषङ्गां नवीनपराभवाम् सद्यःप्राप्तदुःखामित्यर्थः। 'अभिषङ्गः पराभवे' इत्यमरः। त्वां, विनोदयिष्यन्ति रञ्जयिष्यन्ति, हर्षयिष्यन्ति।

समासः—ऋतुरस्य प्राप्त इत्यार्तवम्, तद्। न कृष्टमकृष्टम्, अकृष्टे रोहतीति अकृष्टरोहि, तत् बलये हितं बालेयम्, तत्। उदारा वाग् यासां ताः उदारवाचः ( बहु० )। मुनेः कन्यकाः ( ष० त० ) मुनिकन्यकाः।

कोशः—'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।' 'सस्ये हेतुकृते फलम्' 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः।' 'अभिषङ्गः पराभवे' इत्यमरः।

भावार्थः—तत्तदृतूत्पन्नं पुष्पफलादिकं वनस्थल्यां स्वयमेवोत्पन्नं पूजोपयोगि नीवारादिकमानयन्त्यः प्रियभाषिण्यो मुनिकन्यकाः नवीनदुःखाकुलायास्तव चित्तं रञ्जयिष्यन्ति इति भावः।

हिन्दी—ऋतु के अनुसार उत्पन्न होनेवाले तथा बिना खेती किये ही पैदा होनेवाले एवं पूजोपयोगि नीवार आदि धान्यबीजों को लाती हुई, मीठा बोलनेवाली ऋषिबालिकायें तुम्हारा मन बहलायेंगी ॥ ७७ ॥

पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः।
असंशयं प्राक्तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥ ७८ ॥

सञ्जीविनी—पय इति। स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः स्तन्यैरिति च ध्वन्यते। आश्रमबालवृक्षान् संवर्धयन्ती त्वं तनयोपपत्तेः प्राक्पूर्वमसंशयं यथा तथा। स्तनं धयति पिबतीति स्तनन्धयः शिशुः। "नासिकास्तनयोर्ध्माधेटोः" इति खश्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमः। तस्मिन्या प्रीतिस्तामवाप्स्यसि। ततः परं सुलभ एव विनोद इति भावः।

अन्वयः—स्वबलानुरूपैः पयोघटैः आश्रमबालवृक्षान् संवर्द्धयन्ती त्वम् असंशयं तनयोपपत्तेः प्राक् स्तनन्धयप्रीतिम् अवाप्स्यसि।

वाच्य०—·······आश्रमवृक्षान् संवर्द्धयन्त्या त्वया तनयोपपत्तेः प्राक् असंशयं स्तनन्धयप्रीतिः अवाप्स्यते ( कर्मवा० )।

चन्द्रिका—स्वबलस्य निजशक्तेः, अनुरूपैः अनुगुणैः, पयोघटैः जलकुम्भैः आश्रमस्य तपोवनस्य, बालवृक्षान् क्षुद्रवृक्षाशिनः, संवर्धयन्ती पुष्णन्ती, त्वं

तनयोपपत्तेः पुत्रलाभात्, प्राक् पूर्वम्, असंशयं निस्सन्देहं यथातथेति क्रियाविशेषणम्। स्तनन्धयप्रीतिं डिम्भवात्सल्यम् अवाप्स्यसे लप्स्यसे, आसादयिष्यसि।

समासः—स्वस्य बलं स्वबलम्, स्वबलस्य अनुरूपाः स्वबलानुरूपाः, तैः स्वबलानुरूपैः। पयसां घटाः पयोघटाः, तैः। बालाश्च ते वृक्षाश्च ( कर्म० ) बालवृक्षाः, आश्रमस्य बालवृक्षाः आश्रमबालवृक्षाः, तान्। न विद्यते संशयो यस्मिन् कर्मणि तद् यथा भवति तथा असंशयम्। तनयस्य उपपत्तिः तनयोपपत्तिः, तस्याः तनयोपपत्तेः। स्तनंधयतीति स्तनन्धयः, स्तनन्धयस्य प्रीतिः स्तनन्धयप्रीतिः, ताम्।

कोशः—'पयः क्षीरं पयोऽम्बु च' 'कलशस्तु त्रिषु द्वयोः। घटः कुटनिपावस्त्री' 'वृक्षो महीरुहः शाखी' 'आत्मजस्तनयः सूनुः' 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः।

भावार्थः—निजशक्त्यनुसारं जलकलशैराश्रमगतान् स्वल्पकायान् वृक्षकान् सेचनेन पोषयन्ती त्वं पुत्रलाभात्पूर्वमेव निस्सन्देहं शिशुवात्सल्यम् अर्जयिष्यसि।

हिन्दी—अपनी शक्ति के अनुरूप जलके घड़ोंसे आश्रमके पौधोंको सींचकर बढ़ाती हुई तुम निस्सन्देह पुत्र पाने से पहले ही शिशुवात्सल्य को प्राप्त करोगी॥ ७८॥

अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयाऽऽर्द्रचेताः।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय॥ ७९॥

सञ्जीविनी—अनुग्रहेति। दयाऽऽर्द्रचेता वाल्मीकिः अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीतामादाय सायं मृगैरध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय।

अन्वयः—दयार्द्रचेताः वाल्मीकिः अनुग्रहप्रत्यभिनन्दिनीं ताम् आदाय सायं मृगाध्यासितवेदिपार्श्वं शान्तमृगं स्वम् आश्रमं निनाय।

वाच्यप०—दयार्द्रचेतसा वाल्मीकिना अनुग्रहप्रत्यभिनन्दिनीम् आदाय सायं मृगैरध्यासितवेदिपार्श्वः शान्तमृगः स्व आश्रमो निन्ये। ( कर्मवा० दुह्यादित्वेनाप्रधाने कर्मणि यक् )।

चन्द्रिका—दयार्द्रं कृपाक्लिन्नं, दयालु इति यावत्, चेतः चित्तं यस्य सः तथोक्तः। "परदुःखप्रहाणेच्छा दया" इत्यभियुक्ताः। वाल्मीकिः प्राचेतसः, अनुग्रहं स्त्रीयत्वेनाङ्गीकारं, प्रत्यभिनन्दति साभारं श्लाघत इति अनुग्रहप्रत्यभिनन्दिनी, तां तथोक्ताम्, सीतां जानकीम्, आदाय सह नीत्वा, सायं सन्ध्याकाले, मृगैः हरिणैः, अध्यासितम् अधिष्ठितम्, वेदिपार्श्वं परिष्कृतभूमि—भागद्वयं यस्य तत् तादृशम्, शान्ताः शमसम्पन्नाः, मृगाः पशवः यस्मिन् तत् तथोक्तम्, स्वं निजम्, आश्रमं तपोवनम्, पर्णशालाम्, निनाय प्रापयामास। नीङ्धातुर्द्विकर्मकः।

समासः—दयया आर्द्रं चेतः यस्य सः (बहु०) दयार्द्रचेताः। अनुग्रहं प्रत्यभिनन्दतीति अनुग्रहप्रत्यभिनन्दिनी, ताम्। वेद्याः पार्श्वे (ष० त०) वेदिपार्श्वे, मृगैः अध्यासिते वेदिपार्श्वे यस्य तत् (बहु०) मृगाऽध्यासितवेदिपार्श्वं, तत्। शान्ताः मृगाः यस्मिन् तत् शान्तमृगम्, तत्।

कोशः—'कृपादयाऽनुकम्पा स्यात्' 'आर्द्रं सार्द्रं क्लिन्नम्' 'चित्तन्तु चेतो हृदयम्' 'प्राचेतसादिकविः स्यान्मैत्रावरुणिश्च सः। वाल्मीकिश्चाथ' 'अभ्युपपत्तिरनुग्रहः' 'सायं साये प्रगे प्रातः' 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः।' 'शमिते शान्तः' 'पशवोऽपि मृगाः' 'स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।' इत्यमरः। "ब्रह्मचर्यादिके पर्णशालायां गोगृहेऽपि च। पुण्यभूमौ देवगेहे ह्याश्रमोऽस्त्री तपोवने।" इति केशवः। 'वेदिः परिष्कृता भूमिः'

भावार्थः—दयालुः वाल्मीकिः स्वोपरि कृतमनुग्रहमिमं कृतज्ञतापूर्वकं श्लाघमानां वैदेहीं स्वाश्रममानीतवान् यत्र परिष्कृतोच्चस्थानस्य द्वयोः पार्श्वयोरपि हरिणा निषण्णा रोमन्थमाचरन्ति स्म, गजव्याघ्रादिपशवोऽपि यत्र तत्र विहाय सहजं वैरं चरन्त आसन्—इति भावः।

हिन्दी—दया से द्रुत चित्तवाले वाल्मीकि ने, इस अनुग्रह पर आभार के साथ प्रसन्नता प्रकट करने वाली सीता को लेकर सायंकाल अपने उस आश्रम में पहुँचाया जहाँ वेदी (चबूतरे) के दोनों ओर हरिण बैठे थे और इर्द-गिर्द में व्याध्र-गज आदि पशु अपने सहज वैर त्याग कर एक साथ विचर रहे थे ॥७९॥

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥

सञ्जीविनी—तामिति। शोकदीनां तां सीतां तस्याः सीताया आगमेन प्रीतिर्यासां तासु तापसीषु। पितृभिरग्निष्वात्तादिभिर्निर्विष्टसारां भुक्तसारां हिमांशोरन्त्यामवशिष्टां कलां दर्शोऽमावास्याकाल ओषधीष्विव। अर्पयामास च। अत्र पराशरः—'पिबन्ति विमलं सोमं विशिष्टा तस्य या कला। सुधाऽमृतमयीं पुण्यां तामिन्दोः पितरो मुने" ॥ इति। व्यासश्च—"अमायां तु सदा सोम ओषधीः प्रतिपद्यते" इति।

अन्वयः—शोकदीनां तां तदागमप्रीतिषु तापसीषु पितृभिः निर्विष्टसारां हिमांशोः अन्त्यां कलां दर्शः ओषधीषु इव अर्पयामास।

वाच्य०—शोकदीना सा तदागमप्रीतिषु तापसीषु पितृभिः निर्विष्टसारा हिमांशोः अन्त्या कला दर्शेन ओषधीष्विव मुनिना अर्पयामासे (कर्म०)।

चन्द्रिका—शोकदीनां शुचा, तपस्विनीं, 'तपस्वी मुनिदीनयोः' निस्स्वस्तु दुर्विधो दीनः' तां सीतां, तदागमेन सीतागमनेन प्रीतिः हर्षः यासां ताः तथोक्ताः, तासु, तापसीषु तपस्विनीषु, उपमां दर्शयति—पितृभिः पित्रभिमानिदेवैः, निर्विष्ट-

सारां निष्पीतस्थिरांशाम्, हिमांशोः चन्द्रस्य, अन्त्यां चरमाम्, अन्तिमाम् कलां षोडशभागाम् अमृतमयीम् दर्शः अमातिथिः, ओषधीषु इव व्रीहियवादिषु यथा, 'ओषधः फलपाकान्ताः' अर्पयामास ददौ, निदधौ। चन्द्रमसोऽमृतमय्यः पञ्चदशाऽपि कलाः तत्तद्देवतावृन्दैः एकैककलाक्रमेण प्रतितिथि पीयते कृष्णपक्षे। ततस्त्वमायामन्तिमा कला ओषधीभ्यः पितृदेवैरग्निष्वात्तादिभिः समर्प्यते, पुनः शुक्लपक्षे ओषधीभ्यः प्रत्यहं वृद्धिक्रमेण सोमतत्त्वग्रहणं क्रियते चन्द्रेण, एवं पूर्णिमायां पूर्णषोडशकलो भवति चन्द्रः—इति पुराणेषु दृश्यते। तत्र ओषध्य एकामवशिष्टां चन्द्रकलाममायां गृहीत्वा तथा शुक्लपक्षे स्वगतसोमतत्त्वदानेन परिपोषयन्ति चन्द्रमसं तथा इमास्तापस्योऽपि एकावशिष्टचन्द्रकलायितां क्षीणक्षीणां सीतां परिपोषयन्त्विति वाल्मीकिकृतमर्पणं तासु उपमानविषयैतच्चित्रण कवेः साधूपपद्यते।

समासः—शोकेन दीना शोकदीना (तृ० त०), ताम्। तस्या आगमेन प्रीतिः यासां ताः तदागमप्रीतयः (बहु०), तासु तदागमप्रीतिषु। तापसानां स्त्रियः तापस्यः, तासु। निर्विष्टः सारः यस्याः सा (बहु०) निर्विष्टसारा, ताम्। हिमा अंशवो यस्य सः हिमांशुः, तस्य हिमांशोः। अन्ते भवा अन्त्या, ताम्।

कोशः—'मन्युशोकौ तु शुक् स्त्रियाम्' निस्स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः।' 'प्रस्थानं गमनं गमः' 'मुत्प्रीतिः प्रमदो हर्षः' 'निर्वेशो भृतिभोगयोः' 'सारो बले स्थिरांशे च' 'न्याय्ये क्लीबं वरे त्रिषु।' 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः' 'कला तु षोडशो भागः' 'अमावस्या त्वमावास्या दर्शः सूर्येन्दुसंगमः।' तैरपुष्पाद्वनस्पतिः। ओषध्यः फलपाकान्ताः' इत्यमरः।

भावार्थः—पित्रभिमानिदेवैः निष्पीतसारभागा चन्द्रमसोऽन्तिमा कला अमातिथिना ओषधीषु पुनः कलापरिपोषाय यथा निधीयते तथैव वाल्मीकिना शोकक्षणिकाया सीता तदागमनेन हृष्टासु तापसीषु तस्याः परिपोषाय समर्पिता—इति भावः।

हिन्दी—जैसे पित्रभिमानिदेवताओं से जिसकी अमृतमयी कला पी ली गई है, ऐसी चन्द्रमा की अन्तिम कला को अमावस्या—तिथि ओषधियों को इसलिये सौंप देती है, जिससे चन्द्रमा पुनः सोमतत्त्वों से परिपुष्ट हो जाय, उसी प्रकार वाल्मीकिजी ने शोकसे क्षीण हुई सीता को उनके आगमनसे प्रसन्न हो रही तापसियों को सौंप दिया, जिनके स्नेहादि से सीता हृष्ट-पुष्ट हो जाय॥ ८०॥

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः।
तस्यै सपर्याऽनुपदं दिनान्ते निवासहेतोरुटजं वितेरुः॥ ८१॥

सञ्जीविनी—ता इति। तास्तापस्यस्तस्यै सीतायै सपर्याऽनुपदं पूजाऽनन्तरं दिनान्ते सायङ्काले निवास एव हेतुस्तस्य निवासहेतोः, निवासार्थमित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। 'इङ्गुदो तापसतरुर्भूर्जेचर्मिमृदुत्वचौ' इत्यमरः। इंगुदी-

स्नेहेन कृतप्रदीपमन्तरास्तीर्णं मेध्यं शुद्धमजिनमेव तल्पं शय्या यस्मिंस्तमुटजं पर्णशालां वितेरुर्ददुः।

अन्वयः—ताः तस्यै सपर्यानुपदं दिनान्ते निवासहेतोः इङ्गुदीस्नेहकृतप्रदीपम् अन्तरास्तीर्णमेध्याजिनतल्पम् उटजं वितेरुः।

वाच्य०—ताभिः तस्यै सपर्यानुपदं दिनान्ते निवासहेतोः इङ्गुदीस्नेहकृतप्रदीपः अन्तरास्तीर्णमेध्याजिनतल्प उटजो वितेरे ( कर्म० )।

चन्द्रिका—ताः तपस्विन्यः, तस्यै वैदेह्यै, सपर्याया अतिथिपूजायाः, अनुमदं पश्चात्, दिनान्ते सन्ध्यासमये, निवासहेतोः निवासाय, इङ्गुदीस्नेहेन तापसतरुतैलेन, शाकुन्तलेऽप्यनेन कविना 'इङ्गुदीतैलचिक्कणशीर्षस्य' इति प्रयुक्तोऽयं शब्दः। कृतः विहितः प्रदीपः दीपः यस्मिन् तथोक्तम्, अन्तः अभ्यन्तरे, आस्तीर्णं प्रसारितम्, मेध्याजिनमेव पवित्रमृगकृत्तिरूपं तल्पं शय्या यस्मिंस्तं तथोक्तम्, उटजं पर्णशालाम्, वितेरुः दत्तवत्यः।

समासः—सपर्यायाः अनुपदं सपर्यानुपदम् ( अव्ययी० )। दिनस्य अन्तः यस्मिन् सः दिनान्तः, तस्मिन्। निवासस्य हेतुः निवासहेतुः, तस्य निवासहेतोः। इङ्गुद्याः स्नेहः इङ्गुदीस्नेहः ( ष० त० ), इङ्गुदीस्नेहेन कृतः प्रदीपः यस्मिन् स इङ्गुदीस्नेहकृतप्रदीपः यस्मिन् स इङ्गुदीस्नेहकृतप्रदीपः ( बहु० ), तम् इङ्गुदीस्नेहकृतप्रदीपम्। मेध्यं च तत् अजिनञ्च मेध्याजिनम्, मेध्याजिनमेव तल्पं मेध्याजिनतल्पम् (कर्म० उभयत्र), आस्तीर्णं मेध्याजिनतल्पं यस्मिन् स (बहु०) आस्तीर्णमेध्याजिनतल्पः, तम्।

कोशः—'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः।' 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' 'दिनान्ते तु सायं सन्ध्या पितृप्रसूः' 'इङ्गुदी तापसतरुः' 'दीपः प्रदीपः पीठमासनम्' 'पूतं पवित्रं मेध्यञ्च' 'अजिनं चर्म कृत्तिः स्त्री' 'तल्पं शय्याट्टदारेषु' 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः।

भावार्थः—तास्तपस्विन्यः सीतायाः कन्दमूलादिभिरातिथ्यं विधाय सायंकाले तस्मै स्वापार्थमेकापर्णशालां ददुः, यत्राभ्यन्तरे इङ्गुदीतैलेन प्रज्वालितो दीपो ज्वलति स्म तथा पवित्रा कृष्णाजिनरूपा शय्या च प्रसारिता आसीत्।

हिन्दी—उन तपस्विनियोंने सीता का आतिथ्य-सत्कार किया तथा सायंकाल उसको सोने के लिये एक पर्णशाला दी जिसमे हिंगोट का दीप जल रहा था एवं भीतर पवित्र मृगछाल शय्यारूप में बिछी थी ॥ ८१ ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनाऽतिथिभ्यः।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासन्ततये बभार ॥ ८२ ॥

सञ्जीविनी—तत्रेति। तत्राश्रमेऽभिषेकेण स्नानेन प्रयता नियता वसन्ती विधिना शास्त्रेणातिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः

प्रजासन्ततये सन्तानाविच्छेदाय हेतोः। वन्येन कन्दमूलादिना शरीरं बभार पुपोष।

अन्वयः—तत्र अभिषेकप्रयता वसन्ती विधिना अतिथिभ्यः प्रयुक्तपूजा वल्कलिनी सा पत्युः प्रजासन्ततये वन्येन शरीरं बभार।

वाच्य०—तत्राभिषेके प्रयतया वसन्त्या विधिना अतिथिभ्यः प्रयुक्तपूजया तया वल्कलिन्या पत्युः प्रजासन्ततये वन्येन शरीरं बभ्रे ( कर्म० )।

चन्द्रिका—तत्र तपोवने, अभिषेकेण स्नानेन, प्रयता पूता, वसन्ती वर्तमाना, विधिना यथाशास्त्रम्, अतिथिभ्यः प्राघूर्णिकेभ्यः, आगन्तुकेभ्यः, प्रयुक्तपूजा विहितार्चना, वल्कलिनी तरुत्वचाधारिणी, सा वैदेही, पत्युः भर्तुः, रामस्य, प्रजासन्ततये वंशसातत्याय, कुलनैरन्तर्याय, वन्येन आरण्यकेन, फलमूलादिना, शरीरं देहम्, बभार पोषयामास।

समासः—अभिषेकेण प्रयता ( तृ० त० ) अभिषेकप्रयता। प्रयुक्ता पूजा यया सा ( बहु० ) प्रयुक्तपूजा। वल्कलम् अस्या अस्तीति वल्कलिनी। प्रजायाः सन्ततिः प्रजासन्ततिः, तस्यै प्रजासन्ततये। वने भवं वन्यम्, तेन वन्येन।

कोशः—'पवित्रः प्रयतः पूतः' 'पूजानमस्यापचितिः' 'विधिर्विधाने दैवेऽपि' 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते। प्राघूर्णिकः प्राघुणकः' 'गहनं काननं वनम्' 'सारो मज्जा नरि त्वक्, स्त्री वल्कं वल्कलमस्त्रियाम्।' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः।' 'धवः प्रियः पतिर्भर्ता' 'प्रजा स्यात् सन्ततौ जने' 'सततानारताश्रान्तसन्ततविरतानिशम्।' इत्यमरः।

भावार्थः—वाल्मीक्याश्रमे वसन्ती सीता त्रिकालस्नानेन पवित्रा अतिथिपूजां च कुर्वाणा वल्कलवस्त्रधारिणी पत्युः श्रीरामस्य वंशपरम्पराविच्छेदाय वन्याहारेण कथमपि स्वशरीरपोषणमकरोत्। बाह्याभ्यन्तरशुद्धा सीता जनिष्यमाणसन्ततेः श्रेयसे तद्द्वारा च पतिन्यवसदिति भावः।

हिन्दी—वाल्मीकिजी के आश्रम में रहती हुई सीता स्नान से पवित्र होकर अतिथियों की शास्त्रानुसार पूजा करती थी। वल्कल धारण कर 'पति के वंश का विच्छेद न हो' इसलिये कन्दमूल खाकर किसी तरह देहपोषण करती थी ॥८२॥

अपि प्रभुः सानुशयोऽधुना स्यात् किमुत्सुकः शक्रजितोऽपि हन्ता।
शशंस सीतापरिदेवनान्तमनुष्ठितं शासनमग्रजाय ॥ ८३ ॥

सञ्जीविनी—अपीति। प्रभू राजाऽधुनाऽपि सानुशयः सानुतापः स्यात्किम्। इति काकुः। उत्सुकः शक्रजित इन्द्रजितो हन्ता लक्ष्मणोऽपि सीतापरिदेवनान्तं सीताविलापान्तमनुष्ठितं शासनमग्रजाय शशंस कथयामास।

अन्वयः—प्रभुः अधुनापि सानुशयः स्यात् किम् इति उत्सुकः शक्रजितः हन्ताऽपि सीता परिदेवनान्तम् अनुष्ठितं शासनम् अग्रजाय शशंस।

वाच्य०—प्रभुणा अधुनापि सानुशयेन 'भूयेत' किम् इत्युत्सुकेन शक्रजितोऽपि हन्त्रा सीतापरिदेवनान्तमनुष्ठितं शासनम् अग्रजाय शशंसे ( कर्मवा० )।

चन्द्रिका—प्रभुः स्वामी, श्रीरामः, अधुनापि साम्प्रतमपि। सीतां सम्प्रेष्य स्थितस्यैकाकिनः श्रीरामस्य भावपरिवर्तनमेषु द्वित्रिदिवसेषु जातं भवेदिति लक्ष्मणस्य संभावना। सानुशयः पश्चात्तापयुक्तः, स्यात् भवेत्, किम् ? इत्युत्सुकः एवमुत्कण्ठितः शक्रजितः रावणपुत्रस्य इन्द्रजितः हन्तापि मारको लक्ष्मणोऽपि, सीतापरिदेवनान्तं जानकीविलापपर्यन्तम्, अनुष्ठितं स्वकृतं शासनम् आज्ञाम्, अग्रजाय पूर्वजाय श्रीरामाय, शशंस वर्णयामास।

समासः—अनुशयेन सहवर्तते इति सानुशयः ( बहु० ), शक्रं जयतीति शक्रजित्, तस्य। सीतायाः परिदेवनं सीतापरिदेवनम्, सीतापरिदेवनम् अन्तः यस्य तत् सोतापरिदेवनान्तम्, तत्। अग्रे जातः अग्रजः, तस्मै।

कोशः—'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्त्वपि।' 'प्रभुः परिवृढोऽधिपः' 'रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः।' 'इष्टार्थोद्युक्त उत्सुकः' 'विलापः परिदेवनम्' 'निदेशः शासनं च सः। शिष्टिश्चाज्ञा च' 'पूर्वजस्त्वग्रियोऽग्रजः' इत्यमरः।

भावार्थः—स्वामी श्रीरामः सीताया हार्दं विलापं सन्देशं चाकर्ण्य निजकृत्ये पश्चात्तापं विधास्यति किम् ? इत्युत्कण्ठितो लक्ष्मणः सीताया विलापान्तं वृत्तमग्रजाय निवेदयामास। यदि पश्चात्तापवान् भवेत् श्रीरामः तदा सीतायाः प्रत्यानयनं सुखकं भवेत्। दुःखान्तमिदं रूपकं सुखान्तं सम्पद्येतेति लक्ष्मणस्योत्सुकता।

हिन्दी—स्वामी राम अब भी पश्चात्ताप करेंगे क्या ? यह सोचकर लक्ष्मण सीता के विलाप तक किये हुए आज्ञापालन को ज्येष्ठ भ्राता से कह गया ॥८३॥

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः॥ ८४॥

सञ्जीविनी—बभूवेति। सहसा सपदि सबाष्पो रामः। तुषारवर्षी सहस्यचन्द्रः पौषेन्दुरिव बभूव। अत्यश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत्। 'पौषे तैषसहस्यौ द्वौ' इत्यमरः। युक्तं चैतदित्याह-कौलीनाल्लोकापवादात्। 'स्यात्कौलीनं लोकवादे' इत्यमरः। भीतेन तेन रामेण वैदेहसुता सीता गृहान्निरस्ता। मनस्तो मनसश्चित्ताच्च निरस्ता। पञ्चम्यास्तसिल्।

अन्वयः—रामः सहसा तुषारवर्षी सहस्यचन्द्र इव सबाष्पो बभूव। कौलीनभीतेन तेन वैदेहसुता गृहात् निरस्ता 'आसीत्' न मनस्तः 'निरस्त आसीत्।'

वाच्य०—सहसा सबाष्पेण रामेण तुषारवर्षिणा सहस्यचन्द्रेणेव बभूवे ( भाव० )। कौलीनभीतः स वैदेहसुतां गृहात् निरस्तवान्, मनस्तः न 'निरस्तवान्' ( कर्तृ० )।

चन्द्रिका—रामः दाशरथिः सहसा सद्यः, तुषारवर्षी सबाष्पः साश्रुः करुणाद्रुतहृदयः इत्यर्थः। हिमस्यन्दी, सहस्यचन्द्र इव पौषमासस्य इन्दुवत् बभूव संजातः।

तथापि कौलीनात् लोकनिन्दातः, भीतेन त्रस्तेन, तेन रामेण, वैदेहसुता जनकतनया, गृहात् भवनात् निरस्ता निस्सारिता, आसीदिति शेषः। सा सीता, मनस्तः हृदयात्, न निरस्ता, न परित्यक्ता। अत एव चित्तद्रुतिरिति भावः।

समासः—बाष्पेण सह वर्तते इति सबाष्पः ( बहु० )। तुषारं वर्षते इति तुषारवर्षी। सहस्यस्य चन्द्रः सहस्यचन्द्रः ( ष० त० ) कौलीनात् भीतः कौलीनभीतः (पं० त०) तेन। विदेहानां राजा वैदेहः, वैदेहस्य सुता वैदेहसुता।

कोशः—'अतर्किते तु सहसा' 'तुषारः शीतलः शीतो हिमः' 'पौषे तैषसहस्यौ द्वौ' 'हिमांशुश्चन्द्रमाश्चन्द्रः' 'स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्।' 'बाष्पमूष्माश्रु' 'प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः।' इत्यमरः।

भावार्थः—लक्ष्मणानूदितं सीताया विलापमाकर्ण्य श्रीरामः पौषमासे हेमन्तर्तौ यथा इन्दुः हिमबिन्दून् वर्षति तथा वाष्पममुञ्चत्। युक्तमेवैतद् स लोकापवादभयादेव तां सीतां निर्वासितवान्, न पुनः स्नेहाभावात्। तस्याः पावित्र्यमसाधारणं स्नेहश्च रामो जानात्येव, रामहृदयमपि कृतज्ञाग्रगण्यं कथं तादृशस्नेहस्य विमुखं भवेत् रूक्षतां प्रकटयेत्? इति भावः।

हिन्दी—श्रीराम तत्क्षण ही जैसे पौषमास का चन्द्र हिमबिन्दु बरसाता है वैसे ही आँसू बरसाने लगे। क्योंकि जननिन्दा के भय से ही उन्होंने सीता को घर से निर्वासन कराया था, परन्तु अपने मनसे सीता को नहीं हटाया था। (अतः मनमें सीता के लिए स्थान होने के कारण सीता का विलापाक्षर राम के हृदय को पिघलाने लगे)॥ ८४॥

निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकः।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास॥ ८५॥

सञ्जीविनी—निगृह्येति। धीमान् वर्णानामाश्रमाणां चावेक्षणेऽनुसन्धाने जागरूकोऽप्रमत्तः। "जागर्त्तेरूकः" इत्यूकप्रत्ययः। रजो रिक्तमना रजोगुणशून्यचेताः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगम्, शरीरस्थितिमात्रोपयुक्तमित्यर्थः। ऋद्धं समृद्धं राज्यं शशास।

अन्वयः—धीमान् वर्णाश्रमावेक्षणजागरूकः रजोरिक्तमनाः स स्वयमेव शोकं निगृह्य भ्रातृसाधारणभोगम् ऋद्धं राज्यं शशास।

वाच्य०—धीमता वर्णाश्रमावेक्षणजागरूकेण रजोरिक्तमनसा तेन स्वयमेव शोकं निगृह्य भ्रातृसाधारणभोगम् ऋद्धं राज्यं शशासे ( कर्मवा० )।

चन्द्रिका—धीमान् मनीषी, प्रशस्तबुद्धिः वर्णाश्रमाणाम् ब्राह्मणादिजातीनां ब्रह्मचर्याद्याश्रमाणाम्, अवेक्षणे सम्यङ् निरीक्षणे, परिपालने, जागरूकः सावधानः, रजसा रजोगुणेन क्रोधचाञ्चल्यादिना, रिक्तं रहितं, मनः मानसं यस्यैवम्भूतः सः श्रीरामः, स्वयमेव आत्मनैव, शोकं शुचम्, दुःखम्, निगृह्य अभिभूय,

नियम्य, भ्रातृभिः भरतलक्ष्मणशत्रुघ्नैः साधारणः समानः, भोगः विषयानुभवसुखं, 'भोगः सुखे स्त्र्यादिभृतौ' इति नानार्थेऽमरः। यस्यैतादृशम्, ऋद्धं वैभवशालि, प्राज्यम्, राज्यं प्रजारक्षणात्मकं राजकर्म शशास शासितवान्, पालितवान्।

समासः—धीः अस्यास्तीति धीमान्। वर्णाश्च आश्रमाश्च ( द्वन्द्वस० ) वर्णाश्रमाः, वर्णाश्रमाणाम् अवेक्षणं ( ष०त० ) वर्णाश्रमावेक्षणं, वर्णाश्रमावेक्षणे जागरूकः ( स० त० ) वर्णाश्रमावेक्षणजागरूकः। रजसा रिक्तं मनः यस्य सः ( बहु० ) रजोरिक्तमनाः। भ्रातृभिः साधारणः भोगः यस्य तत् ( बहु० ) भ्रातृसाधारणभोगम्, तत्। राज्ञः कर्म भावो वा राज्यम्, तत्।

कोशः—'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः।' 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाऽक्षरे।' 'रजो गुणे च स्त्रीपुष्पे' 'शून्यं तु वशिकं तुच्छं रिक्तके' 'स्वान्तं हृन्मानसं मनः।' 'स्वयमात्मना' 'मन्युशोकौ तु शुक् स्त्रियाम्' 'साधारणः समानश्च सदृक्षः सदृशः सदृक्।' 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः।' इत्यमराः।

भावार्थः—प्रशस्तबुद्धिः श्रीरामः स्वयमेवात्मानं सान्त्वयन् शोकं निरस्य वर्णाश्रमपरिपालने सावधानः सन् क्रोधमोहादिरजोगुणं विहाय अनासक्तः समृद्धस्य राज्यसुखानुभवं भ्रातृभिः समानमेव बुभुजे-इति भावः।

हिन्दी—बुद्धिमान् श्रीराम स्वयमेव शोक को रोककर वर्णाश्रमों के पालन में सावधान होकर राजसभावों ( क्रोधाहंकारादियों ) से रहित मन से भाइयों के समान ही समृद्ध राज्य का भोग करते थे। अर्थात् भाइयों को अपने बराबर ही मानते थे॥ ८५॥

तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य।
वक्षस्यसङ्घट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः॥ ८६॥

सञ्जीविनी—तामिति। परिवादभीरोर्निन्दाभीरोरत एवैकभार्यामपि साध्वीमपि तां सीतां त्यक्तवतो नृपस्य रामचन्द्रस्य वक्षस्यसङ्घट्टसुखमसम्भाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहितेव रेजे दिदीपे। तस्य स्त्र्यन्तरपरिग्रहो नाभूदिति भावः।

अन्वयः—परिवादभीरोः एकभार्यां साध्वीम् अपि तां त्यक्तवतः नृपस्य वक्षसि असंघट्टसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे।

वाच्य०—परिवादभीरोः साध्वीमपि एकभार्यां त्यक्तवतो नृपस्य वक्षस्यसंघट्टसुखं वसन्त्या लक्ष्म्या सपत्नी रहितयेव रेजे ( भाव० )।

चन्द्रिका—परिवादात् लोकनिन्दातः, भीरोः कातरस्य, एकभार्यां मुख्यपत्नीम्, साध्वीमपि सतीमपि तां जानकीम् त्यक्तवतः मुक्तवतः, परिहृतवतः, नृपस्य राज्ञः

श्रीरामस्य, वक्षसि उरःस्थले, असंघट्टसुखं संश्लेषसुखराहित्येन, रामस्यैकपत्नीत्वात् राजलक्ष्म्या अपि तद्वक्षस्थलालिङ्गनसुखमात्रं नासीदेवेति भावः। वसन्ती वर्तमाना, लक्ष्मीः राज्यश्रीः, सपत्नीरहितेव पतिभार्यान्तरविहीनेव, रामस्यान्यपरिग्रहाभावात् लक्ष्म्याः सापत्न्यदुःखं नासीदिति भावः।

समासः—परिवादाद् भीरुः परिवादभीरुः, तस्य (पं० त०)। एका चासौ भार्या (कर्म०) एकभार्या, ताम् एकभार्याम्। संघट्टस्य सुखं संघट्टसुखम्, न विद्यते संघट्टसुखं यस्मिन् (बहु०) असंघट्टसुखम् (वासक्रियाविशेषणमिदम्)। समानः पतिः यस्याः सा सपत्नी, सपत्न्या रहिता कर्म तद् यथा सपत्नीरहिता।

कोशः—'अवर्णाक्षेपनिर्वादपरीवादापवादवत्।' 'अधीरे कातरस्त्रस्तो भीरुभीलुकभीरुकाः' 'सती साध्वी पतिव्रता' 'एके मुख्यान्यकेवलाः' 'भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु' 'नृपभूपमहीक्षितः' 'उरो वत्सं च वक्षश्च' 'वा यथा तथैवैवम्' इत्यमराः।

भावार्थः—केवलं लोकापवादभयात् सतीं मुख्यपत्नीं सीतां निर्वासितवतः राज्ञः श्रीरामस्य वक्षःस्थले आलिङ्गनानन्दरहितं वर्तमाना राजलक्ष्मीः सपत्नी रहितेव शुशुभे। (यद्यपि श्रीरामवक्षसि स्थानमाप्तवत्यापि लक्ष्म्याः पत्न्यन्तरास्वीकारात् सापत्न्यदुःखन्तु नासीत्, तथाऽपि श्रीरामस्य एकपत्नीव्रतदृढत्वात् तद्वक्षः संश्लेषसुखं नैव प्राप्तं तया। इदमेव 'असंघट्टसुख'पदेन कवेर्विवक्षितमिति प्रतिभाति)।

हिन्दी—लोकनिन्दा से डरने वाले, मुख्यपत्नी होने पर भी, सती सीता का परित्याग किये हुए राजा राम के वक्षस्थल में आलिंगन-सुख मात्र छोड़ कर रहती हुई राज्यलक्ष्मी सौत से रहित शोभित हो रही थी ॥ ८६ ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

सञ्जीविनी—सीतामिति। दशमुखरिपू रामः सीतां हित्वा त्यक्त्वाऽन्यां स्त्रियं नोपयेमे न परिणीतवानिति यत्। "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्। किञ्च। तस्याः सीताया एव प्रतिकृतेः प्रतिमाया हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतूनाजहाराहृतवानिति। 'सस्त्रीको धर्ममाचरेत्' इति धर्मशास्त्रात्। यत्तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्तुर्वृत्तान्तेन वार्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यद् दुःखं तत्कथमपि विषेहे विसोढवती।

अन्वयः—दशमुखरिपुः सीतां हित्वा अन्यां न उपयेमे इति यत् तस्या एव प्रतिकृतिसखः क्रतून् आजहार, यत् तेन श्रवणविषयप्रापिणा भर्तुः वृत्तान्तेन सा दुर्वारं भर्तुः परित्यागदुःखं कथमपि विषेहे।

वाच्य०—दशमुखरिपुणा सीतां हित्वा अन्या नोपयेमे (कर्म०) इति यत् तस्या एव प्रतिकृतिः सखेन क्रतवः आजह्रिरे (कर्म०) इति यत् तेन श्रवणविषयप्रापिणा भर्तुः वृत्तान्तेन तया दुर्वारं परित्यागदुःखं कथमपि विषेहे (कर्म०)।

चन्द्रिका—दशमुखस्य दशाननस्य, रिपुः वैरी, श्रीरामः, सीतां वैदेहीं, हित्वा मुक्त्वा, अन्यां अपरां स्त्रियम्, नोपयेमे न विवाहितवान्, इति यत् तथा, तस्याः एव सीताया एव एवकारोऽन्यव्यवच्छेदकः। प्रतिकृतः प्रतिरूपायाः सुवर्णरचितायाः प्रतिच्छायायाः, सखा सुहृत् सन्, 'राजाहः सखिभ्यष्टच्' इति टच्। अपत्नीकस्य यज्ञाधिकाराभावात् सीतायाः सौवर्णीं प्रतिमां विधाय तां सीतात्वेनानुसन्धाय सपत्नीको भवन्नित्यर्थः। क्रतून् मखान्, यागान्, आजहार अनुष्ठितवान्, इति यत् एवं यो वृत्तान्तः, तेन तादृशेन, श्रवणविषयं कर्णगोचरतां, श्रवणजनपदं, प्रापिणा यायिना, श्रूयमाणेनेत्यर्थः। भर्तुः प्रियस्य, श्रीरामस्य, वृत्तान्तेन उदन्तेन, समाचारेण, सा जानकी, दुर्वारं दुस्सहम्, दुर्निग्रहम्, परित्यागेन परित्यागस्य वा परिहारेण परिहारस्य वा यद् दुःखं व्यथाम्, कथमपि महता क्लेशेन, विषेहे सोढवती।

समासः—दश मुखानि यस्य स (बहु०) दशमुखः, दशमुखस्य रिपुः दशमुखरिपुः। प्रतिकृतेः सखा प्रतिकृतिसखः। श्रवणे एव विषयः श्रवणविषयः (कर्म०), श्रवणविषयं प्राप्नोतीति श्रवणविषयप्रापी, तेन श्रवणविषयप्रापिणा। परित्यागस्य दुःखं परित्यादुःखम्, तद्।

कोशः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः।' 'तथापरिणयोद्वाहोपयामाः प्राणिपीडनम्।' 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिः' 'अथ मित्रं सखा सुहृत्' 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः।' 'श्रुतिः स्त्री श्रवणं श्रवः' 'नीवृज्जनपदो देशविषयौ धवः प्रियः पतिर्भर्ता' 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः' 'पीडा बाधा व्यथा दुःखम्' इत्यमरः।

भावार्थः—सीतां परित्यज्य रामो द्वितीय विवाहं नाकरोत् तथा सौवर्णीं सीताप्रतिमामेव पत्नीस्थानापन्नां कृत्वा यज्ञान् अन्वतिष्ठत्—इति वृत्तान्तम् कर्णपरम्परया आकर्णयन्ती सीता श्रीरामस्य स्वविषयेऽनन्यभावनां ज्ञात्वा दुस्सहां परित्यागपीडां कथंकथमपि सहते स्म। बहिर्लोकदृष्ट्या परित्यागेऽपि रामस्य हृदये सैव स्नेहभावना जागर्ति—इति विचारयन्ती सीता सह्यदुःखा भवति स्मेति भावः।

हिन्दी—सीता का परित्याग करने के बाद श्रीरामने दूसरा विवाह नहीं किया एवं सीता की ( स्वर्णनिर्मित ) प्रतिमा को ही पत्नी मान कर श्रीराम यज्ञ किये—इस प्रकार पति के समाचारको सुनती हुई सीता ने परित्याग के दुःसह दुःख का किसी-किसी प्रकार सहन किया ॥ ८७ ॥

जितपूर्वेन्द्रियाचार्यो रघुवंशचतुर्दशे।
संयोज्य विवृतिं काञ्चिदायोज्य रामपादार्पितां व्यधात् ॥
इति रघुवंशे व्याख्यात्रयादिसहिते चतुर्दशः सर्गः ॥ १४ ॥

रघुवंश-चतुर्दश-सर्गस्थ—

# श्लोकानुक्रमणिका

## हमारे महत्त्वपूर्ण छात्रोपयोगी प्रकाशन

मूल पाठ, संस्कृत हिन्दी टीका, भूमिका, प्रश्न-पत्र सहित—

| | | |
|---|---|---|
| १. | रूप मंजरी—पं० शिवदत्त मिश्र शास्त्री | ०·७५ |
| २. | छन्द प्रकाश—पं० शिवदत्त मिश्र शास्त्री | ०·५० |
| ३. | तर्क संग्रह—पं० रामगोविन्द शुक्ल | ०·५० |
| ४. | तर्क संग्रह ( पदकृत )—पं० रामगोविन्द शुक्ल (गुटका) | १·२५ |
| ५. | वेदान्तसार—पं० रामगोविन्द शुक्ल | २·५० |
| ६. | कुमार संभव ( सर्ग १-२ )—पं० जितेन्द्राचार्य | २·५० |
| ७. | कुमार संभव ( पंचम सर्ग )—पं० जितेन्द्राचार्य | १·२५ |
| ८. | रघुवंश महाकाव्य ( प्रथम सर्ग )—पं० देवेन्द्र नाथ झा | १·२५ |
| ९. | रघुवंश महाकाव्य ( सर्ग-२-५ )—पं० जितेन्द्राचार्य | ५·०० |
| | अलग-अलग विस्तृत भूमिका के साथ उपलब्ध प्रत्येक सर्ग | १·२५ |
| १०. | निबन्ध प्रभा—रामरंग शर्मा | १·५० |
| ११. | रघुवंश महाकाव्य ( सर्ग १३-१४ ) पं० जितेन्द्राचार्य | २·५० |
| १२. | भट्टि महाकाव्य ( १ से ४ )—पं० जगदीशचन्द्र शास्त्री | यन्त्रस्थ |
| १३. | भट्टिमहाकाव्य ( ५ से ८ )—पं० जगदीशचन्द्र शास्त्री | यन्त्रस्थ |
| १४. | सिद्धान्त कौमुदी ( कारक ) डा० दिनेशचन्द्र गुहा | ६·०० |
| १५. | किरातार्जुनीय ( प्रथम सर्ग ) डा० अमलधारी सिंह | ३·०० |
| १६. | सांख्यकारिका—कु० विमला कर्नाटक | यन्त्रस्थ |
| १७. | अलंकारसारमंजरी—पं० गोपालशास्त्री 'दर्शन केशरी' | १·२५ |
| १८. | अलंकार प्रकाश—डा० वीरेन्द्र कुमार वर्मा | २·०० |
| १९. | पारस्कर गृह्यसूत्र (हरिहर भाष्य)—हरिदत्त शास्त्री-सम्पूर्ण | १५·०० |
| २०. | उत्तर रामचरित—रमाशंकर त्रिपाठी | यन्त्रस्थ |
| २१. | शिशुपालवध ( १-६ )—पं० रामजीलाल शास्त्री | यन्त्रस्थ |
| २२. | निबन्धसुधा—पं० कपिलदेव त्रिपाठी | ३·५० |



राजेश प्रिंटिंग वर्क्स, वाराणसी